| अशुद्धम् | शुद्धम् | पृष्ठे पंक्तौ |
|---|---|---|
| ऽपचपस्यात् | ऽप् च स्यात् | ४४५ १४ |
| तस्मिन्नभि | तस्मिन्नभि | ४४५ १७ |
| अन्नदणः | अन्नघणः | ४४५ १८ |
| धनमागये | धनमानये | ४४५ १८ |
| पवाद्धः | ऽपवादः | ४५२ ७ |
| स्वार्थयोः | स्वार्थयोः | ४५८ ४ |
| दीर्धः | दीर्घः | ४६६ १५ |
| भुक्ते | भुङ्क्ते | ४६७ ११ |
| इगुपध | इगुपध | ४७१ २ |
| पदंशम् | मूलकेनोपदंशम् | ४७३ १ |
| तुस्तादम् | तुस्तान्दम् | ४७६ १ |
| नभोगिरो | नभोऽङ्गिरो | ४७९ ११ |
| गा॥ | न॥ | ४८३ ७ |
| वगमो | वागमो | ४९० २ |
| वत्सारान्ता | वत्सरान्ता | ५०४ ७ |
| पिचण्डानम् | पिचण्डानाम् | ५०८ १५ |
| कद्रूची | कद्रीची | ५११ १५ |
| युयोधिः | युयोधि | ५१५ ८ |
| आङ्कितः | अङ्कितः | ५१५ ९ |
| प्रणोहि | प्रोणोहि | ५१५ ९ |
| मर्ध्वीनः | मार्ध्वीनः | ५१५ १८ |
| पदान्ते | पादान्ते | ५२० १० |
| ज्वलिति | ज्वलिति | ५२१ १२ |
| स्तम्भुस्तम्भु | स्कन्भुस्तन्भु | ५२१ १२ |
| ह्वरति | चरितो | ५२२ ११ |
| गुणय | गुणयः | ५२३ १ |
| धत्सेति | धत्सेति | ५२५ ११ |

| अशुद्धम् | शुद्धम् | पृष्ठे पंक्तौ |
|---|---|---|
| पूर्व्वस्या | पूर्व्वस्यार्द्धस्या | ५३३ ४ |
| त्याध्वाय | त्याध्याय | ५३३ २१ |
| शाकलस्य | शाकल्यस्य | ५३४ १ |
| पम्पूस्तां | पम्पूंस्तां | ५३४ १५ |
| माम्रेडित | माम्रेडित | ५३५ ८ |
| करत्क्करति | करत्करति | ५३५ १२ |
| पञ्चम्याः परा | पञ्चम्याः पराव | ५३५ १७ |
| अध्यर्थे | अध्यर्थे | ५३५ १९ |
| स्पृष्ट | स्पृष्ट | ५३६ ५ |
| यजुष्ये | यजुष्ये | ५३६ १९ |
| पुष्य | पुष्यः | ५३८ ३ |
| सिद्धम् | सिद्धम् | ५४० २२ |
| सुब्रह्मण्योऽयम् | सुब्रह्मण्यायाम् | ५४३ ८ |
| स्वान्तस्थो | स्वान्तस्थो | ५४३ १४ |
| स्वरितस्या | स्वरितस्या | ५४३ १८ |
| स्वात् | स्यात् | ५४४ १ |
| चङुदात्तः | चङ्ङुदात्तः | ५४५ १९ |
| चश्छिने | चश्छिन्ने | ५५० १ |
| यस्य | सस्य | ५५२ १५ |
| पीतद्रुर्था | पीतद्रूर्था | ५५५ १२ |
| पुर्व्वम् | पूर्व्वम् | ५५७ ९ |
| पदाद्यग्नुम् | पदाद्यग्नुम् | ५६१ १ |
| आभा | अभ्रा | ५६१ ११ |
| परे | परो | ५६२ ८ |
| स्वरितम् | स्वरितम् | ५६२ १६ |
| अनुदात्तात् | अनुदात्तेतः | ५६४ ४ |
| निम्नाना | निम्नानाः | ५६४ ९ |

| अशुद्धम् | शुद्धम् | पृष्ठे पंक्तौ |
|---|---|---|
| समामः | समासः | ४६८ १० |
| लित्खरः | लित्स्वरः | ५६८ १९ |
| जोभूताः | जीमूताः | ५७१ १४ |
| कुमारस्त्वेत्येत्र | कुमारस्येत्येव | ५७१ १५ |
| परमार्त्तिः | पश्चात्त्वः | ५७२ ३ |
| परे वडवा | पारे वडवा | ५७५ ८ |
| पुरु | पुर | ५७६ ७ |
| कर्ष्ट श्रितः | कष्टं श्रितः | ५७६ २१ |
| न्यङुत्तानः | न्यङ्ङुत्तानः | ५७८ ६ |
| प्रथमो | प्रथम | ५७८ २० |
| तत्त्व | तत्र | ५८७ ४ |
| भ्रताः | स्मृताः | ५९१ ५ |
| मूलभ् | मूलम् | ५९२ १२ |
| २।२।१३६। | ६।२।१३६। | ५९५ १६ |
| दापालम् | कपालम् | ५९६ ३ |
| अगार्हम | विगार्हम | ६०१ १३ |
| वभ्रु | भ्रुव | ६०६ १६ |
| ध्व | टध्वन् | ६०८ ७ |
| द्विमूर्द्धा | द्विमूर्द्धा | ६११ ५ |
| न्येततोः | न्येतयोः | ६१२ ३ |
| अनुप्रार्थना | अनुज्ञाप्रार्थना | ६१५ ५ |
| पृष्ठ | पृष्ट | ६१५ ७ |
| प्रस्वादभि | प्रस्वादृति | ६१९ ९ |
| तिङनु | तिङ्ङनु | ६२२ ४ |
| कर्कठ | कर्कट | ६२९ १९ |
| कूठ | कूट | ६३० १२ |
| भामनी | भामती | ६३८ ५ |
| विरचितायां | विरचिता | ६३८ १४ |

---

सिद्धान्तकौमुद्यां कार्य्यविशेषार्थं स्मारितसूत्रादीनां प्रतीकं धृतं, तत् सूत्रादि व्याख्यानाधिकरणपत्रसङ्ख्याङ्क द्वारा सूचिता क्वचित् तत् विस्मृतं तज्ज्ञापनार्थमिदम् ।

| पृष्ठ पंक्तौ | सूत्रप्रतीकम् | पृष्ठाद्यसङ्ख्या |
|---|---|---|
| ३९ । १२ | गोपयसोः | (६०१) |
| ३९ । १३ | नौवयः | (६२२) |
| ४० । १ | ऊतियति | (उ४५०) |
| ४० । ३ | लोपोव्योः | (४२१) |
| ४२ । १ | पूर्व्वत्रा | (१२) |
| ४२ । ५ | न पदा | (३५) |
| ४२ । १४ | अचोरहा | (३८) |
| ४३ । ६ | अनचि | (३२) |
| ४६ । ९ | उभयप्राप्तौ | (उ५३४) |
| ४६।९ | कर्त्तरि | (उ३७९) |
| ४६ । ११ | कृत्यकः | (५२) |
| ५० । ३ | कृत्यकः | (५२) |
| ५८ । २ | सुपां सु | (उ५१७ |
| १४८। ८ | आतृशी | (१९६) |
| १६३। १२ | अधःपर | (३४) |
| १८२। ५ | चोःकुः | (१६५) |
| १९७। १० | अर्त्ति | (उ४०२) |
| २८२। ६ | सप्तपां | (६७५) |
| ३४५। ४ | तद्धितेष्वम् | (५४९) |

---

# क्रोडपत्रम्

उ० ५१२ पृष्ठे एवाहिते इत्यतःपरम् त्रुटितम् ।

**अन्येषामपि दृश्यते । ६ । ३ । १३७ ।**

अन्येषामपि पूर्वपदस्थानां दीर्घः स्यात् । पूरुषः । दण्डादण्डि

उत्तरार्द्धे ५५२ पृष्ठस्य ११ पङ्क्तौ मृगायाख्यायामित्यतः परं कृष्ण

र्षिः इत्यतः पूर्व्वम् त्रुटितम् ।

कृष्णोराती । वा नामधेयस्य १२ । कृष्णस्येत्येव 'अयं वा कृष्णोऽश्विना'

# सिद्धान्तकौमुदी।

## परार्द्धम्।

---

श्रौत्रार्हन्तीचणौर्गुण्यै (१) र्महर्षिभिरहर्दिवम्।
तोष्टूय्यमानोऽप्य (२) गुणो विभुर्विजयतेतराम्॥
पूर्व्वार्द्धे (३) कथितास्तुर्य्यपञ्चमाध्यायवर्त्तिनः।
प्रत्यया अथ कथ्यन्ते तृतीयाध्यायगोचराः॥

हृदब्जे सितपद्माभां सन्निवेश्य सरस्वतीम्।
सिद्धान्तकौमुदीशेषभागव्याख्यां समारभे॥

(१) श्रोत्रियस्य भावः श्रौत्रं श्रोत्रियत्वं हायनान्तयुवादिभ्योऽण् (६५६४०) इत्यणि श्रोत्रियस्य (यलोपश्चेति युवादि ग०) यलोपे सिद्धम् अर्हतो भावोऽर्हन्ती योग्यता गुणवचनब्राह्मणादिभ्य इति (६५४५०) ष्यञि अर्हतो नुम् चेति (ब्राह्मणादि ग०) नुमि षित्त्वात् ङीषि सिद्धं ताभ्यां वित्तैः। गुण्यैर्गुणवत्त्वेन प्रशंसनीयैः।

(२) अपिर्भिन्नक्रमेऽगुणोऽपीत्यन्वयस्तेन स्तुतिप्रयोजकीभूतगुणाभावेऽपि स्तुतिविषयतेति विरोधाभासः। तत्परीहारस्तु वियदादिवत् व्यवहारिकगुणवत्त्वात् स्तुत्यता पारमार्थिकगुणाभाववत्त्वाच्च निर्गुणतेति गुणगतवैलक्षण्यात्।

(३) सङ्गतिं दिदर्शयिषुरतीतकथनपूर्व्वकं वर्त्तिष्यमाणमाह पूर्व्वार्द्धे इति हलन्तेषु क्विबादिकथनं तु प्रासङ्गिकमेवमिहापि ज्ञेयम्, यचः स्त्रियामञ्

तत्रादौ दश (४) लकाराः प्रदर्श्यन्ते। लट् लिट् लुट् लृट् लेट् लोट लङ् लिङ् लुङ् लृङ्। एषु पञ्चमोलकारश्छन्दोमात्रगोचरः।

**वर्त्तमाने लट्। ३। २। १२३।**

वर्त्तमानक्रियावृत्ते (५) र्धातोर्लट् स्यात्। अटावितौ।

**लः कर्म्मणि च भावे चाकर्म्मकेभ्यः।३।४।६९।**

(७४४०पृ०) इत्यादिकथनं तथेति बोध्यम् तथाच प्राधान्येन तृतीयाध्यायस्था एव प्रत्यया इहोदाहरिष्यन्ते इति भावः।

(४) लकाराणामनुबन्धभेदात् दशविधत्वम् पञ्चमस्य वैदिकत्वेऽपीह स्वरूपतो निदर्शनमात्रम्। मनो०।

(५) 'क्रियाभेदाय कालस्तु संख्या सर्व्वस्य भेदिके'ति हर्य्युक्तेः कालस्य क्रियाविशेषणत्वनियमादाह वर्त्तमानक्रियावृत्तेरिति। एतच्च 'द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तय' इत्युक्तेर्द्योतकत्वपक्षमाश्रित्योक्तम्। वर्त्तमानत्वञ्च प्रयोगसमकालयत्नादिहेतुकत्वम् 'क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम्। तत् समीक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन्नि'त्युक्तेः। क्रियोत्पत्तौ यो हेतुर्यत्नादिर्यच्च तदर्थं क्रियार्थं विचेष्टितं चेष्टादि कायिकव्यापारः तत् द्वयं समानकालिकं समीक्ष्य गच्छतीति प्रयुञ्जीतेत्यर्थः। तथा च प्रयोगस्य गमनार्थकचेष्टादिभिः समकालिकत्वं वर्त्तमानत्वमिति फलितम्। वस्तुतः फलव्यापारयोरुभयोरपि धात्वर्थतया क्रियाप्रवृत्तौ फलोत्पत्तौ यो हेतुर्धातुवाच्यव्यापाररूपः स च यत्नादिसाधारणः प्रयोगस्य तत्समकालिकत्वे एव वर्त्तमानत्वं तेन पङ्गुप्रभृतीनां क्रियार्थकयत्नादिसत्त्वेऽपि न गच्छतीतिप्रयोगः। विस्तरस्तु अस्मत्कृतशब्दार्थरत्ने द्रष्टव्यः।

लकाराः सकर्म्मकेभ्यः (६) कर्म्मणि कर्त्तरि (७) च स्युः अकर्म्मकेभ्यो भावे कर्त्तरि (८) च।

**लस्य (९)। ३। ४। ७७।**

अधिकारोऽयम्।

**तिप्तस्झिसिप्थस्थ मिब्वस्मस् तातांझ थासाथांध्वम् इड् (१०) वहि महिङ्। ३। ४। ७८।**

---

(६) लः कर्म्मणीति सकर्म्मकविषयम्, अकर्म्मकविषयत्वे कर्म्मणीत्यस्य बाधितत्वादुत्तरवाक्ये अकर्म्मकेभ्य इति विशेषाभिधानानुपपत्तेश्चेत्याशयेनाह सकर्म्मकेभ्य इति।

(७) चकारात् कर्त्तरि कृद् (७२६८पृ०) इत्यतः कर्त्तरीतिपदमनुवर्त्त्याह कर्त्तरि चेति।

(८) भावे चेति चकारेण कर्त्तैवानुकृष्यते न तु सन्निधानपठितमपि कर्म, अकर्मकक्रियायां तदन्वयासम्भवादित्याशयेनाह कर्त्तरि चेति। लकाराणां कर्त्तर्य्येव शक्तिर्न तु कर्त्तृत्वे इति सिद्धान्तः प्रपञ्चव्याकरणे स्मात् कृतशब्दार्थरत्ने च द्रष्टव्यः। अत्रेदं बोध्यं भावे चाकर्मकेभ्य इत्यंशेऽविवक्षितकर्मकाणामप्यकर्मकपदेन ग्रहणं तेन पच्यते भुज्यते इत्यादिप्रयोगो भाव एव। अतएव लकारा इव कृतोऽपि अकर्मकेभ्य एव भावे विधीयन्ते तथा च भुक्ता ब्राह्मणा इत्यादौ भावे नपुंसके क्ते ततः अर्शआद्यजिति भाष्येऽभिहितं सङ्गच्छते सङ्गच्छते, च कृतपूर्व्वी कटमित्यादौ अविवक्षितकर्मतया कृधातोर्भावे एव निष्ठेति हर्य्याद्युक्तिरित्यलं विस्तरेण।

(९) धातोः (२६७पृ०) इत्यधिकारात् धातोर्विहितस्य लकारस्य स्थाने तिबाद्यादेशाः स्युरित्यर्थः। धातोरिति विशेषणात् तद्धितलकारे न प्रसङ्गः। दशानां लडादीनां लाभाय लस्येति निरनुबन्धेनोक्तिः।

(१०) इटष्टित्करणमिटोऽदिति (७२८पृ०) विशेषार्थं महिङो ङित्त्वन्तु तिङ्-

एते अष्टादश लस्यादेशाः स्युः।

**लः परस्मैपदम्।१।४।९९।**

लादेशाः परस्मैपदसंज्ञाः स्युः।

**तङानावात्मनेपदम्।१।४।१००।**

तङ् प्रत्याहारः शानच्कानचौ (११) चैतत्संज्ञाः स्युः। पूर्व्वसंज्ञापवादः।

**अनुदात्तङित आत्मनेपदम्।१।३।१२।**

अनुदात्तेतः (१२) उपदेशे योङित्तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदं स्यात्।

---

तङ् प्रत्याहारार्थमेव। स च ङकारः समुदायस्यानुबन्धो न तु महिमात्वस्य तथात्वे पप्रच्छिमहे इत्यत्र लिटि सम्प्रसारणाप्रसङ्गेऽपि ङित्त्वेन संप्रसारणापत्तिः। मनो०।

(११) ल इति षष्ठ्यन्तस्यानुवृत्ते र्लादेश एव आनो गृह्यते इत्याशयेनाह शानच्कानचाविति लादेश इति विशेषणात् ताच्छील्यादिषु चानशि न प्रसङ्गस्तेन शतुं निघ्नान इत्यादौ परस्मैपदिनोऽपि चानश्। मनो०।

(१२) अनुदात्तं च ङ् च तावितौ यस्येति विग्रहइत्यभिप्रायेणाह अनुदात्तेत इति। तत्र एधस्पर्द्धादयोऽनुदात्तेतः सूङादयो ङित इति विवेकः। उपदेशेऽजनुनासिक (४९०) इत्यतोऽनुवृत्तमपि उपदेश इति पदं ङित एव विशेषणं नान्यस्य फलाभावादित्याशयेनाह उपदेशे इति तथाविशेषणाच्च गाङ्कुटादिभ्यः (३११९९०) इत्यातिदेशिकङित्त्वेऽपि सनि चुकुटिषतीत्यादौ नैतत्प्रसङ्गः। धातोरिति विशेषणाच्च चङङ्भ्यां न प्रसङ्गः।

**स्वरितञितः कर्त्रभिप्राये क्रियाफले।१।३।७२।**

स्वरितेतो ञितश्च(१२)धातोरात्मनेपदं स्यात् कर्त्तृगामिनि-क्रियाफले।

**शेषात् कर्त्तरि परस्मैपदम्।१।३।७८।**

आत्मनेपदनिमित्त(१४)हीनाद्धातोः कर्त्तरि परस्मैपदं स्यात्

**तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः।१।४।१०१।**

---

(१२) अत्रापि द्वन्द्वात् परतया श्रूयमाणेच्छब्दस्य प्रत्येकसम्बन्धात् स्वरितेतः ञितश्चेत्यर्थः। तत्र स्वरितेतोयजादयः सुञादयस्तु ञित इति विवेकः। कर्त्तारमभिप्रैति गच्छतीति कर्म्मण्यण् (उ२२३पृ०) इत्यणि कर्त्रभिप्रायमिति योगं दर्शयन्नाह कर्त्तृगामिनीति क्रियाफलञ्च क्रियाजन्यमुख्योद्देश्यभूतं फलं स्वर्गादि न तु धात्वर्थमात्रं नापि दक्षिणावेतनादिलाभरूपं यथोक्तं हरिणा।

यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।
तत् प्रधानं फलं तासां न लाभादि प्रयोजनमिति ॥

अर्थ्यते इत्यर्थः प्रयोजनापरपर्य्यायः फलं तस्येत्यर्थः। पचादयः फलावच्छिन्नव्यापाररूपाः पचाप्रभृतिक्रियाः। तासां पचाप्रभृतिक्रियाणां फलं स्वेच्छया तदिच्छाप्रयोजकं तेन याजकपाचकादीनां दक्षिणावेतनादिलाभरूपप्रयोजनवत्त्वेऽपि तदर्थक्रियावृत्तेर्धातोर्न प्रसङ्गः।

(१४) आत्मनेपदनिमित्तम् अनुदात्तेत्त्वं, ङित्त्वं स्वरितञितोः कर्त्रभिप्रायक्रियाफलत्वञ्च तद्विहीनादिति शेषादित्यस्यार्थः। एतच्च नेर्विशः (उ २४१पृ०) इत्यादिविशेषविधिनाऽपोद्यते इति बोध्यम्।

तिङुभयपदयो (१५) स्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः।

**तान्येकवचनद्विवचनबहुवचनान्येकशः। १। ४। १०२।**

लब्धप्रथमादिसंज्ञानि तिङस्त्रीणित्रीणि प्रत्येकमेकवचनादि-संज्ञानि स्युः।

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः। १। ४। १०५।**

तिङ्वाच्यकारकवाचिनि युष्मदि अप्रयुज्यमाने (१६) प्रयुज्य-माने च मध्यमः स्यात्।

**प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च। १। ४। १०६।**

मन्यधातुरुपपदं यस्य धातोस्तस्मिन् प्रकृतिभूते (१७) सति

---

(१५) तिङोऽष्टादशत्वेन षट्त्रिकात्मकत्वात् यथासंख्यं प्रथमादिसंज्ञा-ऽसम्भवादाह उभयपदयोरिति।

(१६) स्थानिनीति पदं व्याख्यातुमाह अप्रयुज्यमाने इति। समानाधि-करणे इत्युक्तेः त्वां पश्यति त्वया दृश्यते इत्यादौ द्वितीयान्ततृतीया-न्ताभ्यामाश्रयस्य बोधनेऽपि तस्य धातूत्तरतिङर्थत्वाभावात् नाभेदा-न्वयोऽतोऽत्र युष्मदर्थस्य सामानाधिकरण्याभावेन न मध्यमपुरुषः। अत्र समानाधिकरणे इति निर्देशात् कर्त्तर्य्येव लकाराणां शक्ति-रिति स्पष्टं प्रतीयते कर्त्तृत्वे शक्तौ युष्मदर्थेन सह तस्य सामानाधिकर-ण्यासम्भव इति बोध्यम्।

(१७) मन्योपपदे इत्यस्य सप्तम्यन्ततया तदानुगुण्येन व्याचष्टे प्रकृतिभूते इति तथाभूताद्धातोरुत्तरं स्यादिति तु फलितार्थः।

मध्यमः स्यात् परिहासे मन्यतेरुत्तमः स्यात् स चैकार्थस्य वाचकः।

**अस्मद्युत्तमः। १। ४। १०७।**

तथाभूते (१८) अस्मद्युत्तमः स्यात्।

**शेषे प्रथमः। १। ४। १०८।**

मध्यमोत्तमयोरविषये प्रथमः स्यात्। भू सत्तायाम्। कर्त्तरि विवक्षायां भू तिप् इति स्थिते।

**तिङ् शित् सार्व्वधातुकम्। ३। ४। ११३।**

तिङः शितश्च धात्वधिकारोक्ता (१९) एतत्संज्ञाः स्युः।

**कर्त्तरि शप्। ३। १। ६८।**

कर्त्तर्थे(२०)सार्व्वधातुके परे धातोः शप् स्यात्। शपावितौ।

**सार्व्वधातुकार्द्धधातुकयोः। ७। ३। ८४।**

अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात्। अवादेशः। भवति। भवतः।

---

(१८) तथाभूते इति तिङ्वाच्यकारकवाचिनि अप्रयुज्यमाने प्रयुज्यमाने चेत्यर्थः।

(१९) धात्वधिकारोक्तादितिविशेषणात् हरीनित्यादौ शसः शित्त्वेन सार्व्वधातुकत्वे सार्व्वधातुकमपिदिति (७२२ पृ०) ङित्त्वप्रसक्त्या घेर्ङितीति (१०६ पृ०) न गुणप्रसङ्गः।

(२०) शपोविकरणत्वेन निरर्थकतया कर्त्रर्थकत्वाभावात् सार्व्वधातुके यक् (७२६६ पृ०) इत्यतोनुवृत्तस्य सार्व्वधातुकस्यैव कर्त्तरीत्यस्य वैयधिकरण्येन विशेषणत्वमित्याह कर्त्रर्थे इति।

**झोऽन्तः। ७। १। ३।**

प्रत्ययावयवस्य(२१)झस्यान्तादेशः स्यात्। अतो गुणे (८८पृ०) (२२)। भवन्ति। भवसि। भवथः। भवथ।

**अतो दीर्घो यञि। ७। ३। १०१।**

अतोऽङ्गस्य दीर्घः स्यात् यञादौ सार्व्वधातुके (२३) परे। भवामि। भवावः। भवामः। स भवति। तौ भवतः। ते भवन्ति। त्वं भवसि। अहं भवामीत्यादि। एहि मन्ये ओदनं भोक्ष्यसे भुक्तः सोऽतिथिभिः। एतम् एत वा मन्ये ओदनं भोक्ष्येथे भोक्ष्यध्वे भोक्ष्ये भोक्ष्यावहे भोक्ष्यामहे इत्यादि मन्यसे मन्येथे मन्यध्वे इत्यर्थः। युष्मद्युपपदे (७६पृ०) इत्याद्यनुवर्त्तते तेनेह न। एतु भवान् मन्यते ओदनं भोक्ष्य इति। प्रहासे किं यथार्थकथने मा भूत्। एहि मन्यसे ओदनं भोक्ष्ये भुक्तः सोऽतिथिभिरित्यादि

**परोक्षे (२४) लिट्। ३। २। ११५।**

---

(२१) आयनेयीति (२१८पृ०) सूत्रात् प्रत्ययपदमनुवर्त्तते इत्याशयवानाह प्रत्ययावयवस्येति।

(२२) स्थानिझकारमाश्रित्य अतो दीर्घो यञीत्यस्य न प्रवृत्तिरनल्विधाविति (३३पृ०) निषेधादाह अतो गुणे इति।

(२३) तुरुस्तुशम्यमः सार्व्वधातुके (११४पृ०)इत्यतः सार्व्वधातुके इत्यनुवृत्तम् अन्यथा केशव इत्यादौ वादौ तद्धिते यञादित्वेन दीर्घापत्तिः।

(२४) यद्यपि "क्रिया नामात्यन्तापरिदृष्टा पूर्व्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुमिति" भाष्योक्तेः सर्व्वासां क्रियाणां परोक्षत्वं तथापि तदनुकूलशक्तिमतां व्यापाराविष्टानां साधनानां

सार्व्वधातुकतिङोऽनन्त्यस्य सस्य (३७) लोपः स्यात्। इति सकारद्वयस्यापि (३८) निवृत्तिः। सुटः श्रवणं त्वाशीर्लिङि स्फुटतरन्तु (३९) तवात्मनेपदे।

**अतो येयः। ७। २। ८०।**

अतःपरस्य सार्व्वधातुकावयवस्य यास् इत्यस्य इय् स्यात्। गुणः। यलोपः। भवेत्। सार्व्वधातुकेति किम् चिकीर्ष्यात्। मध्येऽपवाद (४०) न्यायेन ह्रि अतो लोप (७५७९०) एव बाध्यते। भवेदित्यादौ तु परत्वाद्दीर्घः (४१) स्यात्। भवेताम्।

**झेर्जुस्। ३। ४। १०८।**

लिङोझेर्जुस् स्यात्। जइत्।

**उस्यपदान्तात्। ६। १। ९६।**

अपदान्तादवर्णादुसि पररूपमेकादेशः स्यात्। इति प्राप्ते

---

(३७) अनन्त्यस्येतिविशेषणयोगाय सूत्रे सेति लुप्तषष्ठीकं पृथक्पदमित्याशयेनाह सस्येति।

(३८) सकारद्वयस्येति अवयवावयवस्य समुदायं प्रत्यवयवतया सुटोऽपि लिङवयवत्वादिति भावः। समो०।

(३९) भूयादित्यादौ यासुटः सकारस्य स्कोरिति (१६६पृ०) सलोपेनाश्रवणादाह स्फुटतरन्त्विति।

(४०) सार्व्वधातुकाननुवृत्तौ व्याघातमाह मध्येऽपवादेति तद्बाधेन च अतोयेय इति स्यादिति भावः।

(४१) अनिष्टान्तरमाह दीर्घइति अतो दीर्घो यञीति(७८९०)सूत्रविहित इत्यर्थः।

परत्वान्नित्यत्वाच्चातोयेयइति प्राञ्चः। यद्यप्यन्तरङ्गत्वात्(४२) पररूपं न्याय्यं तथापि यासुडित्येतस्य इय् इति व्याख्येयम्। एवञ्च सलोपस्यापवाद इय्। अतो येयइत्यत्र तु सन्धिरार्षः। भवेयुः। भवेः। भवेतम्। भवेत। भवेयम्। भवेव। भवेम।

लिङाशिषि। ३। ४। ११६।

आशिषि लिङस्तिङार्द्धधातुकसंज्ञः स्यात्।

किदाशिषि (४३)। ३। ४। १०४।

आशिषि लिङो यासुट् कित्स्यात्। स्कोरिति (१६६पृ०) सलोपः (४४)।

क्ङिति च। १। १। ५।

गित्किन्ङिन्निमित्ते इग्लक्षणे (४५) गुणवृद्धी न स्तः। भूयात् (४६)। भूयास्ताम्। भूयासुः। भूयाः। भूयास्तम्। भूयास्त। भूयासम्। भूयास्व। भूयास्म।

---

(४२) अन्तरङ्गत्वादिति प्रत्ययमात्रापेक्षतयाऽन्तरङ्गकार्यत्वादित्यर्थः।

(४३) ङित्त्वेनैव गुणवृद्धिप्रतिषेधे सिद्धे इज्यादित्यादौ संप्रसारणार्थं कित्त्वकरणमिति बोध्यम्।

(४४) संयोगादित्वेन यासुटः सलोपः, सुटस्तु (२६४पृ०सू०) पदान्तसंयोगान्तत्वेनेति भेदः।

(४५) इग्लक्षणे इति इकोगुणवृद्धी इति (२५पृ०) परिभाषया इक एव-तयोः स्थानित्वमतस्तल्लक्षणत्वम्।

(४६) भूयादिति इह स्कोरिति (१६६पृ०) सलोपस्यासिद्धत्वात् संयोगान्तकास्य लोपः प्राप्तोऽपि पदान्तसंयोगादिलोपेनानवकाशेन बाध्यते। मनो०।

लुङ्। ३। २। ११०।

भूतार्थे धातोर्लुङ् स्यात्।

माङि लुङ्। ३। ३। १७५।

सर्व्वलकारापवादः।

स्मोत्तरे लङ् च। ३। ३। १७६।

स्मोत्तरे माङि लङ् स्याल्लुङ् च।

च्लि लुङि। ३। १। ४३।

शवाद्यपवादः।

च्लेः सिच्। ३। १। ४४।

इचावितौ (४७)।

गाति (४८) स्थाघुपाभूभ्यः सिचः परस्मैपदेषु।
२। ४। ७७।

एभ्यः सिचो लुक् स्यात्। गापाविहेणादेशपिबती गृह्येते।

भूसुवो (४९) स्तिङि। ७। ३। ८८।

भूसू एतयोः सार्व्वधातुके तिङि परे गुणो न स्यात्।

---

(४७) सिच इदित्त्वेन अमंस्तेत्यादौ अनिदितामिति(१७८९०)उपधालोपाभावः।

(४८) विकरणशून्यतया गातीति प्रतिपा, निर्देशात् इणादेशो गृह्यते। मनो०।

(४९) षूञ् गर्भविमोचने इत्यस्यैव ग्रहणं न तु सुवतिसूयत्योरपि। मनो०।

अस्तिसिचोऽपृक्ते ७। ३। ९६।

सिच् अस् चेति (५०) समाहारद्वन्द्वात्पञ्चम्यर्थे षष्ठी। अपृक्ते इत्यनेन कर्मधारयः ततः पञ्चम्याः सौत्रो लुक्। विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः स्यात्। इति ईट् न, इह सिचो लुप्तत्वात्। अभूत्। हलः किम्। ऐधिषि। अपृक्तस्येति किम् ऐधिष्ट। अभूताम्।

सिजभ्यस्तविदिभ्यश्च। ३। ४। १०९।

सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस् स्यात्। इति प्राप्ते।

आतः। ३। ४। ११०।

सिज्लुक्यादन्तादेव (५१) झेर्जुस् स्यात्। अभूवन्। अभूः। अभूतम्। अभूत। अभूवम्। अभूव। अभूम।

न माङ्योगे। ६। ४। ७४।

अडाटौ न स्तः। मा भवान् भूत्। मास्म भवत् भूद्वा।

लिङ्निमित्ते लृङ् क्रियातिपत्तौ। ३। ३। १३९।

---

(५०) अस्तेः सिचश्च परस्येति व्याख्याने अस्तेर्भूरिति (७।१२पृ०)भुवादेशे गातीत्यादिना (७१९पृ०) सिचो लुकि स्थानिवद्भावेन अस्तिसिचोः सद्भावादीडापत्तिरतो व्याचष्टे सिच् अस् चेति उक्तस्थलयोः अस्तिसिचोर्वर्त्तमानत्वाभावात् न ईट् प्रसङ्ग इति भावः।

(५१) पूर्वसूत्रेण सिद्धे नियमार्थमिदमित्याह आदन्तादेवेति।

हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम्। अभविष्यत्। अभविष्यताम्। अभविष्यन्। अभविष्यः। अभविष्यतम्। अभविष्यत। अभविष्यम्। अभविष्याव। अभविष्याम।

**ते प्राग्धातोः। १। ४। ८०।**

ते गत्युपसर्गसंज्ञका धातोः प्रागेव (५२) प्रयोक्तव्याः।

**आनि लोट्। ८। ४। १६।**

उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात्। प्र-भवाणि। दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः *। दुःस्थितिः। दु-र्भवानि। अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्॰। अन्तर्द्धा। अन्तर्द्धिः। अन्त-र्भवाणि।

**शेषे विभाषाऽकखादावषान्त उपदेशे। ८। ४। १८।**

उपदेशे कादिखादिषान्तवर्ज्जे गदनदादे(५३)रन्यस्मिन् धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा स्यात्। प्र-णि-भवति प्र-नि-भवति। इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या तदुक्तम्।

---

(५२) प्रागेवेति न परतो नापि व्यवहिता इत्यर्थः अतएव छन्दसि परेऽपीति (७४८०पृ०) व्यवहिताश्चेति (७४८०पृ०) पृथक् सूत्रिते। मनो०।

(५३) नेर्गदनदेति (४१पृ०)सूत्रापेक्षया शेषइत्याह गदनदादेरिति उपदेशे किं प्र-नि-चकार प्र-नि-चखादेत्यादौ कृतत्वेऽपि यथा निषेधः स्यात्।

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते, इति ॥

सत्ताद्यर्थनिर्देशस्त्वोपलक्षणम् यागात्सर्गो भवतीत्यादावुत्पद्यत इत्याद्यर्थात्। उपसर्गास्त्वर्थविशेषस्य द्योतकाः । प्र-भवति परा-भवति सम्भवति अनु-भवति अभि-भवति उद्भवति परि-भवतीत्यत्र विलक्षणार्थावगतेः । उक्तञ्च ।

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहारपरिहारवदिति ॥

एध वृद्धौ । (उ २५९०) कथ्यन्ताः षट्त्रिंशदनुदात्तेतः ।

## टित आत्मनेपदानां टेरे । ३ । ४ । ७९ ।

टितो लस्या (५४) त्मनेपदानां टेरेत्वं स्यात् । एधते ।

## सार्वधातुकमपित् । १ । २ । ४ ।

अपित्सार्व्वधातुकं ङिद्वत्स्यात् ।

## आतोङितः । ७ । २ । ८१ ।

अतःपरस्य ङितामाकारस्य इय् स्यात् । एधेते । एधन्ते ।

## थासस्से । ३ । ४ । ८० ।

टितो लस्य थासस्से स्यात् । एधसे । एधेथे । एधध्वे । अतोगुणे (८८७०) । एधे । एधावहे । एधामहे ।

(५४) टित इति लस्यैव विशेषणं न तदादेशस्यानजादेरित्याह लस्येति तेन यजमानेत्यादौ नेति भावः ।

**इजादेश्च गुरुमतोऽनृच्छः। ३। १। ३६।**

इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्यात् लिटि। आमो मकारस्य नेत्त्वं आस्कासोराम्विधानात् * ज्ञापकात्।

**आमः। २। ४। ८१।**

आमः परस्य लुक् स्यात्।

**कृञ्चानु प्रयुज्यते लिटि। ३। १। ४०।**

आमन्ताल्लिट्पराः कृभ्वस्तयोऽनु (५५) प्र-युज्यन्ते। आम्प्रत्ययवत् कृञोऽनुप्रयोगस्येति सूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीति ज्ञाप्यते। तेन कृभ्वस्तियोग इत्यतः (७२६७०) कृञो द्वितीयेति (७२२७०) ञकारेण प्रत्याहाराश्रयणात् कृभ्वस्तिलाभः। तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वयः (५६)। सम्पदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्र-युज्यते। कृञस्तु क्रियाफले परगामिनि परस्मैपदे प्राप्ते।

**आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य। १। ३। ६३।**

---

* भित्त्वादन्त्यादचः परस्मिन् आकारेण भवितव्यम्। आस्कासोस्तु स्वतएव आकारसत्त्वात् अन्त्यादचः परआकारविधानं व्यर्थं स्यादिति नेत्त्वमिति भावः।

(५५) प्र-युज्यते इत्यनेनैव प्रयोगे लब्धेऽनुपदोपादानं विपर्य्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थञ्चेति वार्त्तिककाराशयस्तेन 'तं पातयां प्रथममास'-त्यादिकमपाणिनीयमितिमल्लिनाथः।

(५६) अभेदान्वय इति तेन आम्प्रकृतिधातोः सकर्म्मकत्वाकर्म्मकत्वाभ्यां कर्मभावयोर्लकारः अतः "तस्मातपत्रं बिभरामबभूवे इति 'तपतप्रत्तीयपि

आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः। आम्प्रत्यया तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदं स्यात्। इह पूर्व्ववदित्यनुवर्त्त्य वाक्यभेदेन सम्बध्यते। पूर्व्ववदेवात्मनेपदन्तु तद्विपरीतमिति। तेन कर्त्तृगेऽपि फले इन्द्राञ्चकारेत्यादौ न तङ्।

## लिटस्तझयोरेशिरेच्। ३। ४। ८१।

लिडादेशयोस्तझयोरेश् इरेच् एतौ स्तः। एकारोच्चारणं ज्ञापकं तङादेशानां टेरेत्वन्नेति तेन डारौरसान्न। त एइति स्थिते।

## असंयोगाल्लिट् कित्। १। २। ५।

असंयोगात्परोऽपिल्लिट् कित्स्यात्। क्ङिति चेति (७।८पृ०) निषेधात्सार्व्वधातुकार्द्धधातुकयोरिति (७७पृ०) गुणो न। द्वित्वात्परत्वाद्यणि प्राप्ते।

## द्विर्वचनेऽचि। १। १। ५९।

द्वित्वनिमित्ते (५७) ऽचि परे अचआदेशो न स्यात् द्वित्वे कर्त्तव्ये (५८)।

---

मेदस्सरा विभावरीभिर्बिभराम्बभूविरे,, इत्यादौ च कर्मणि लकारः इति द्रष्टव्यम्।

(५७) द्विर्वचनशब्दस्य द्वित्वनिमित्ते लक्षणां विनाचा सामानाधिकरण्यासम्भवादाह द्वित्वनिमित्ते इति तन्निमित्तत्वञ्च साक्षात् परम्परया वा समुदाय घटकत्वेन बोध्यम् तेन जर्गुनविपतीत्यादौ सनुस्थानिकस्यटोऽपि समुदायघटकतया तन्निमित्तत्वात् गुणकार्य्यात् प्रागेव द्वित्वम्। अचीति किं दुद्यूषतीत्यादौ द्वित्वनिमित्तेऽपि सनि तस्याजादित्वाभावात्ऊठ् भवत्येव।

(५८) द्वित्वे कर्तव्ये इति कृते तु द्वित्वे यथायथमजादेशः स्यादेवेतिभावः।

उरत्। ७। ४। ६६।

अभ्यासऋवर्णस्य अत्स्यात्प्रत्यये परे। रपरत्वम् (४२पृ० सू०) हलादिः शेषः (७१०पृ०)। प्रत्यये किम्। ववृश्च (५८)।

कुहोश्चुः। ७। ४। ६२।

अभ्यासकवर्गहकारयोश्चवर्गआदेशः स्यात्। एधाञ्चक्रे। एधाञ्चक्राते। एधाञ्चक्रिरे।

एकाच उपदेशेऽनुदात्तात्। ७। २। १०।

उपदेशे यो धातुरेकाच् अनुदात्तश्च ततः परस्यार्द्धधातुकस्येड् न स्यात्। उपदेश इत्युभयान्वयि। एकाच इति किम्। यङ्लुगन्ताद्वृत्तिर्यथा स्यात्। स्मरन्ति हि।

'श्तिपा (६०) शपानुबन्धेन निर्दिष्टं यद्गणेन च।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकीति'॥

---

(५८) लिटि संप्रसारणे संप्रसारणाच्च (१४८पृ०) इत्येकादेशात्पूर्व्वं प्रत्ययभिन्ने अभ्यासावयवेऽति अत्त्वं स्यात् तथा च रपरतया वरवृश्चेत्यनिष्टापत्तिरिति भावः।

(६०) प्र नि जङ्घनीत्यादौ यङ्लुकि नेर्गदेत्यादिना (७४१पृ०) न णत्वम् सतिहन्नियातीत्यादौ श्तिपा निर्द्देशात्। सनीवन्तर्द्धेतिसूत्रे (२००पृ०) भरेति शपा निर्द्देशात् विभर्त्तेः सनो विकल्पेट्कत्वमिव न ततो यङ्लुकः स नः। अनुबन्धेन निर्द्देशो द्विविधः स्वरूपेण इत्संज्ञकत्वेन च। तत्र स्वरूपेण यथा शीङः सार्व्वधातुके गुणः (७११४पृ०) इत्युक्तं कार्य्यं शेशीतइत्यादौ न। इत्संज्ञकत्वेन यथा अनुदात्तङित इति(७४पृ०)ङित्त्वेन विहितसङ् पासह्नीति शेशयीतीत्यादौ न। गणेन यथा शमादिभ्यः श्यम् (७१५८पृ०) इतिविहितः श्यम् वेभिदीतीत्यादौ न। एकाज्ग्रहणं यथा अत्रैव सूत्रे तेन भिदेरनिट्कत्वे-

एतच्च (६१) इहैवैकाज्ग्रहणेन ज्ञाप्यते। अचइत्येवैकत्वविवक्षया तद्वतो ग्रहणेन च सिद्धे एकग्रहणसामर्थ्यादनेकाच्कोपदेशो व्यावर्त्त्यते तेन वधेर्हन्त्युपदेशे एकाचोऽपि न निषेधः आदेशोपदेशेऽनेकाच्कत्वात्। अनुदात्तास्थानुपदमेव (उ२६ पृ०) संग्रहीष्यन्ते। एधाञ्चकृषे एधाञ्चक्राथे।

**इणः षीध्वंलुङ्लिटान्धोऽङ्गात्। ८। ३। ७८।**

इणन्तादङ्गात्परेषां(६२)षीध्वंलुङ्लिटां धस्य मूर्द्धन्यः स्यात्। एधाञ्चकृढ्वे। एधाञ्चक्रे। एधाञ्चकृवहे। एधाञ्चकृमहे। एधाम्बभूव (६३)। अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न अन्यथा हि कस् चानु प्रयुज्यत इति (उ२ पृ०सू०) कृञिति वा ब्रूयात्।

**अत आदेः। ७। ४। ७०।**

अभ्यासस्यादेरतो दीर्घः स्यात्। (८८पृ० सू०) पररूपापवादः। एधामास। एधामासतुरित्यादि। एधिता। एधितारौ। एधितारः। एधितासे। एधितासाथे।

---

ऽपि वेभिदितेत्यादौ नानिट्कत्वम्।

(६१) एतच्चेति एकाज्ग्रहणस्यानन्यफलकतया यङ्लुगव्याहत्तिरेव फलमत एकाज्ग्रहणेनैकदेशानुमितन्यायात् श्तिबादिनिर्देशस्याऽपि तत्फलकत्वमित्यनुमितमिति भावः।

(६२) अङ्गात् परेषामिति। विहितानामिति तु नोक्तं तथासति अदिढ्ढ्मित्यादौ न स्यात् लिहदुहनहां ढत्वघत्वधत्वेषु लिढ्ढीध्वं धुढ्ढीध्वं नढ्ढीध्वमित्यादौ तु स्यात्। अङ्गात् किं वेविषीध्वमित्यादौ जुहोत्यादेर्लिङेः सार्वधातुके लिङि यथा न स्यात् अनिमस्त्रनुग्रहणा नीत्याद्युक्तेः (१५८पृ०) अर्थवत्परिभाषाया अनित्यत्वज्ञापनात्।

(६३) एधाम्बभूवेति आमप्रत्ययवदितिसूत्रे (उ२पृ०) कृञ्ग्रहणादनु

**धि च। ८। २। २५।**

धादौ प्रत्यये परे सलोपः स्यात्। एधिताध्वे।

**ह एति। ७। ४। ५२।**

तासस्त्योः सस्य हः स्यादेति परे। एधिताहे। एधितास्वहे। एधितास्महे। एधिष्यते। एधिष्येते। एधिष्यन्ते।

**आमेतः। ३। ४। ९०।**

लोट एकारस्याम् स्यात्। एधताम्। एधेताम्। एधन्ताम्।

**सवाभ्यां वामौ। ३। ४। ९१।**

सवाभ्यां परस्य लोडेतः क्रमाद्व व अम् एतौ स्तः। एधस्व। एधेथाम्। एधध्वम्।

**एत ऐ। ३। ४। ९३।**

लोडुत्तमस्य एत ऐ स्यात्। आमोऽपवादः। एधै। एधावहै। एधामहै

**आडजादीनां। ६। ४। ७२।**

अजादीनामाट् स्यात् लङादिषु। अटोऽपवादः। आटश्च(११७पृ०) ऐधत। ऐधेताम्। ऐधन्त। ऐधथाः। ऐधेथाम्। ऐधध्वम्। ऐधे। ऐधावहि। ऐधामहि।

---

प्रयोगान्तरे न तङिति ज्ञापितं तेन तत्र प्रेधात् कर्त्तरीति (७५पृ०) परस्मैपदमेव भावकर्म्मणोस्तु तङेवेति (७२१पृ०)प्रागुक्तम्।

लिङः सीयुट्। ३। ४। १०२।

लिङात्मनेपदस्य सीयुडागमः स्यात्। सलोपः (६४)। एधेत। एधेयाताम्।

झस्य रन्। ३। ४। १०५।

लिङो झस्य रन् स्यात्। एधेरन्। एधेथाः। एधेयाथाम्। एधेध्वम्।

इटोऽत्। ३। ४। १०६।

लिङादेशस्येटोऽत्स्यात्। एधेय। एधेवहि। एधेमहि। आशीर्लिङि आर्द्धधातुकत्वात् लिङः (उ॰६पृ॰) सलोपो न। सीयुट्सुटोः प्रत्ययावयवत्वात् षत्वम्। एधिषीष्ट। एधिषीयास्ताम्। एधिषीरन्। एधिषीष्ठाः। एधिषीयास्थाम्। एधिषीध्व(ढ्वं)म्। एधिषीय। एधिषीवहि। एधिषीमहि। ऐधिष्ट। ऐधिषाताम्।

आत्मनेपदेष्वनतः। ७। १। ५।

अनकारात्परस्यात्मनेपदेषु झस्य अत् (६५) इत्यादेशः स्यात्। ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। इणः षीध्वंलुङ्लिटान्धोऽङ्गात् (उ॰२६पृ॰)। ऐधिढ्म्। इट् भिन्न(६६)एव इणाह ग्टह्यते इति

(६४) सलोप इति लिङः सलोपोऽनन्त्यस्येति (उ॰१६पृ॰) सूत्रेणेति शेषः।

(६५) झोन्त(उ॰८पृ॰) इत्यतोझ इति अदभ्यस्तादित्यतो (उ॰१२४पृ॰) ऽदिति चानुवर्त्याह झस्यअदिति।

(६६) ऐधिध्वमित्यादौ इणः परत्वेऽपि इटः सिच आदेशतया तद्ग्रहणेनैव इटो ग्रहणात् नाङ्गत्वमिति न ढत्वमित्याशयेनाह इड्भिन्नइति।

मते तु। ऐधिध्वम्। इयोर्ध्वस्य मस्य च द्वित्वविकल्पात् षोड़श रूपाणि। ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि (१)। उदात्तत्वाद्धलादेरिट्प्रसङ्गादनुदात्ताः संगृह्यन्ते।

ऊदृदन्तै(६७)र्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः।
वृङ्वृञ्भ्याञ्च विनैकाचोऽजन्तेषु निहताः स्मृताः॥
शक्लृ(६८) पच्मुचिरिच्वच्विच्
सिच्प्रच्छित्यज्निजिर्भजः।
भञ्ज्भुज्भ्रस्ज्मस्जियज्युज् रुज्
रञ्ज्विजिर्स्वञ्ज्सञ्ज सृजः॥

---

(६७) ऊदृदन्तभिन्ना यौत्यादिभिन्नाश्च एकाचोऽजन्ता निहता अनुदात्ता इत्यर्थः। तत्र यु मिश्रणादौ, रु शब्दे, रुङ् रवे, गत्याञ्च त्युभयोर्ग्रहणम् क्ष्णु तेजने, शीङ् स्वप्ने, ष्णु प्रस्रवणे, णु स्तुतौ, टु क्षु शब्दे, श्वि गतिवृद्ध्योः, डीङ् नभोगतौ, श्रिञ् सेवायां, वृङ् संभक्तौ, वृञ् वरणे इत्येतदर्थका इहैते ग्राह्याः। मनो०।

(६८) शक्लृ शक्तौ। कान्तः १। डु, पच पाके, पच व्यक्तीकरणे चोभयोर्ग्रहणम्। मुच्लृ मोक्षे, रिचिर् विरेके, रिच वियेचने, इत्युभावपि वच संभाषे, ब्रुवोवचिरपि, विच् पृथग्भावे, षिच क्षरणे। चान्ताः ६। प्रच्छ ज्ञीप्सायाम्। छान्तः १। त्यज हानौ, णिजिर् शुद्धिपोषणयोः, भज् सेवायां, भञ्ज् आमर्द्दने, भुज् पालनभक्षणयोः, भुजो कौटिल्ये, इति च भ्रस्ज् पाके, टु मस्ज शुद्धौ, यज देवपूजादौ, युजिर् योगे, रुजो भङ्गे, रञ्ज रागे, विजिर् पृथग्भावे, सञ्ज सङ्गे, ष्वञ्ज परि-

अद्क्षुद्खिद्छिद्तुदिणुदः पद्यभिद विद्यतिर्व्विदः ।
शद्सदी स्कन्दतिस्विद्यौहदी क्रुध् क्षुधिबुध्यती ॥
बन्धिर्युध्राध्यतिरुधी व्यध्शुधः साधिसिध्यती ।
मन्यहन्नाप्क्षिप छुपिस्तप् तिपस्तृप्यदृप्यती ॥
लिप्लुप्वप्शप्स्वप्सृपीयभ्रभ्लभ् गम्नम्यमो रमिः ।
क्रुशिर्दंन्शिदिशी दृश्मृश्रिश्रुश्लिश्विश्स्पृशः कृषिः ।

---

ष्वङ्ग, सृज विसर्गे । जान्ताः १५ । अद भक्षणे, क्षुदिर् संपेषणे, खिद दैन्ये, खिद्यतिः खिद्‌तिश्च । छिदिर् भेदे, तुद व्यथने, णुद विनोदे, पद गतौ, भिदिर् विदारणे, विद सत्तायां, विद विचारणे, शद्‌ल विशरणगत्यवसादेषु, षद गतौ, स्कन्दिर् गतिशोषणयोः, स्विदा गात्रप्रक्षरणे, हद पुरीषोत्सर्गे । दान्ताः १५ । क्रुध कोपे, क्षुध बुभुक्षायां, बुध अवगमने, बन्ध बन्धने, युध संप्रहारे, राध संसिद्धौ, रुधिर् आवरणे, रुध कामे, इति दिवादिश्च व्यध ताड़ने, शुध शौचे, षाध संसिद्धौ, षिध संसिद्धौ । धान्ताः ११ । मन ज्ञाने, दिवादिः हन् हिंसागत्योः । नान्तौ २ । आप्‌लृ व्याप्तौ, क्षिप प्रेरणे, दिवादिस्तुदादिश्च छुप स्पर्शे, तप सन्तापे, तप ऐश्वर्य्ये, दिवादिः, तप दाहे इत्यपि णिजभावपक्षे, तिप क्षरणे, तृप प्रीणने, दृप हर्षविमोचनयोः, रधादौ वेट्‌कौ इह पाठस्तु अनुदात्तस्य च(७०१०२सू०)इत्येतदर्थः लिप उपलेपे, लुप्‌लृ छेदने, डु वप वीजतन्तुसन्ताने, शप उपालम्भे, ञि ष्वप स्वापे, सृप्‌लृ गतौ । पान्ताः १३ । यभ मैथुने, रभ राभस्ये, डु लभ प प्राप्तौ । भान्ताः ३ । गम्‌लृ गतौ, णम प्रह्वत्वे शब्दे च, यम उपरमे, रमु क्रीड़ायाम्, मान्ताः ४ । क्रुश आक्रोशे, दन्श दंशने, दिश अतिसर्ज्जने, दृशिर् प्रेक्षणे, मृश आमर्शने, रिश रुश हिंसायां, लिश गतौ च, विश प्रवेशे स्पृश स्पर्शे, शान्ताः १० । कृष विलेखने, भौवादिकतौ-

तुष्त्विष् दुष्द्विष् पिष्पुष्विष्शिष्शुष्श्लिष्यतयो घसिः।
वसतिर्दहदिहिदुहो नहमिहरुहलिह् वहिस्तथा ॥
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम्।
तुदादौ(६९) मतभेदेन स्थितौ यौ च चुरादिषु ॥
तृपदृपी तौ वारयितुं श्यना निर्देश आदृतः। किञ्च।
स्विद्यपद्यौ सिध्यबुध्यौ मन्यपुष्यौ श्लिषः श्यना ॥
वसिः शपा लुका यौति र्निर्दिष्टोऽन्यनिवृत्तये (७०)।
निजिर् विजिर् शक्लृ इति सानुबन्धा अमी तथा(७१)॥
विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते।
व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम्॥

---

दादिकौ, तुष तुष्टौ, त्विष दीप्तौ, दुष वैकृत्ये, द्विष अप्रीतौ, पिष्लृ संचूर्णने, पुष पुष्टौ, विष्लृ व्याप्तौ, शिष्लृ विशेषणे, शुष शोषणे, श्लिष आलिङ्गने। षान्ताः ११। घस्लृ अदने, प्रकृत्यन्तरस्य अस्तेरादेशस्य तु स्थान्युपदेशत्वेनानुदात्तत्वं सिद्धम्। वस निवासे, सान्तौ २। दह भस्मीकरणे, दिह उपचये, दुह दोहने, दुहिरिति च भूवादिस्तु नेह गृह्यते। णह बन्धे, मिह सेचने, रुह जन्मप्रादुर्भावयोः, लिह आस्वादने, वह प्रापणे। हान्ताः ८। मनो०।

(६९) तृप्यदृप्यतोरित्यत्र श्यना निर्देशस्य फलमाह तुदादाविति।

(७०) अन्यनिवृत्तये इति अन्ये ये निवर्त्याः ते पुनरेते यथाक्रमं बोध्याः। स्विदा स्वेदमोचनयोः, पद स्थैर्य्ये, सेधतिबोधती, चैते भौवादिकाः मन अवबोधने, तानादिकः, पुष पुष्टौ, पोषतिः पुष्णातिश्च श्लिष दाहे, भौवादिकः वसि आच्छादने आदादिकः, एते सेट्काः यौतीति-निरनुबन्धस्यैव पर्युदासात् युज् बन्धे इति क्र्यादिस्तु अनिट् मनो०।

(७१) तथेति अन्यनिवृत्तये सानुबन्धा निर्दिष्टा इत्यर्थस्तेन णिजि शुद्धावित्यादादिकः, ओ विजी भयचलनयोरिति तुदादिः, शक्यतिश्च सेट्कएवेत्यर्थः।

रनजिमस्जी अर्दिपदी नुद् क्षुध्मुषिपुषी शिषिः।
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसम्मतेः॥

स्पर्द्ध सङ्घर्षे। सङ्घर्षः पराभिभवेच्छा। धात्वर्थेनोपसंग्रहादकर्म्मकः। स्पर्द्धते।

## शर्पूर्व्वाः खयः। ७। ४। ६१।

अभ्यासस्य शर्पूर्व्वाः(७२)खयः शिष्यन्ते। हलादिः शेषः (७।४।६०) इत्यस्यापवादः। पस्पर्द्धे। स्पर्द्धिता। स्पर्द्धिष्यते। स्पर्द्धताम्। अस्पर्द्धत। स्पर्द्धेत। स्पर्द्धिषीष्ट। अस्पर्द्धिष्ट। अस्पर्द्धिष्यत। २। गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च। गाधते जगाधे ३। बाधृ लोडने। लोडनं प्रतिघातः बाधते ४। नाथृ नाधृ याच्ञोपतापै (७३) श्वर्य्याशीःषु। आशिषि नाथ इति वाच्यम्*। अस्याशिष्येवा (७४) त्मनेपदं स्यात् (नाथते ५। अन्यत्र। नाथति। नाधते ६। दध धारणे। दधते।

## अतएकहल्मध्येऽनादेशादेर्लिटि। ६। ४। १२०।

लिड्निमित्तादेशादिकं(७५)न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्याकारस्यैकारः स्यादभ्यासलोपश्च किति लिटि।

## थलि च सेटि। ६। ४। १२१।

(७२) शर्पूर्व्वा इति अतद्गुणसंविज्ञानबहुव्रीहिस्तेन शरो न शेषः किन्तु खयामेवेति बोध्यम्। मनो०।

(७३) उपतापो रोगः। उपघात इत्यन्ये।

(७४) अनुदात्तत्त्वादेव सिद्धे नियमार्थमिदं वार्त्तिकमित्याह आशिष्येवेति।

(७५) तन्त्रावृत्त्या लिटीत्यादेशस्यापि विशेषणमित्याह लिड्निमित्तेति तेन

प्रागुक्तं स्यात्। आदेशश्चेह वैरूप्यसम्पादकएवाश्रीयते शसिददोः प्रतिषेधवचनात् ज्ञापकात्। तेन प्रकृतिजश्शरां तेषु सत्स्वपि एत्वाभ्यासलोपौ स्तएव। देधे। देधाते। देधिरे ७। अतः किम् दिदिवतुः। तपरः किम् ररासे। एकेत्यादि किम् ततसरतुः। अनादेशादेः किम् चकनतुः। लिट आदेशविशेषणादिह स्यादेव। नेशिथ। सेहे। स्कुदि आप्रवणे। आप्रवणमुत्प्लवनमुद्धरणञ्च।

## इदितो नुम् धातोः। ७। १। ५८।

स्कुन्दते। चुस्कुन्दे ८। श्विदि शैत्ये। अकर्म्मकः। श्विन्दते। शिश्विन्दे ९। वदि अभिवादनस्तुत्योः। वन्दते। ववन्दे १०। भदि कल्याणे, सुखे च। भन्दते। बभन्दे ११। मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। मन्दते। ममन्दे १२। स्पदि किञ्चिच्चलने। स्पन्दते। पस्पन्दे १३। क्लिदि परिदेवने शोकेइत्यर्थः। सकर्म्मकः। क्लिन्दते चैत्रम्। चिक्लिन्दे १४। मुद हर्षे। मोदते १५। दद दाने। ददते।

## न शसददवादिगुणानाम्। ६। ४। १२६।

शसे (७६) ददेर्व्वकारादीनां गुणशब्देन भावितस्य (७७)

नेशिथ सेहे इत्यादि सिद्धम् अन्यथा नशसहादेर्लिटोऽन्यत्र अनेशत् असोढेत्यादौ अन्यथाभूतादिकतया न स्यादिति भावः।

(७६) शसेति तालव्यान्तपाठस्तु आकरविरुद्धत्वादुपेक्ष्य इति। मनो०।

(७७) गुणशब्देन भावितस्येति अवयवावयविभावः षष्ठ्यर्थः भावितत्वञ्च प्रयोज्यत्वम्, तच्च साक्षात्परम्परासाधारणम्। तथा हि शशरतुः

यश्चकारस्तस्य एत्वाभ्यासलोपौ न । ददे । ददाते । ददिरे १६ । ष्वद स्वर्द आस्वादने । अयमनुभवे सकर्मकः । रुचावकर्मकः (७८) ।

धात्वादेः (७९) षः सः । ६ । १ । ६४ ।

धातोरादेः षस्य सः स्यात् । सात्पदाद्योरिति (७२०सू०) षत्वस्य निषेधः । अनु-स्वदते । सस्वदे १७ । स्वर्दते । सस्वर्दे १८ । उर्द माने क्रीडायाञ्च ।

उपधायाञ्च । ८ । २ । ७८ ।

धातोरुपधाभूतयोरेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात् । ऊर्दते । ऊर्दाञ्चक्रे १९ । कुर्द खुर्द गुर्द गुद क्रीडायामेव । कूर्दते । चुकूर्दे २० । खूर्दते २१ । गूर्दते २२ । गोदते । जुगुदे २३ । षूद क्षरणे । सूदते । सुषूदे २४ । सेक (८०) सृप् सृ सृज स्तृ स्त्यान्ये दन्त्याजन्तसादयः ।

---

षपरतुरित्यादौ अरूपे गुणे कृतेऽकारः साक्षाद्गुणप्रयोज्यः । लुलविथेत्यादौ ओकाररूपे गुणे कृते तस्यावादेशे तदवयवोऽकार इति परम्परया गुणस्य तत्वाकारे प्रयोजकत्वमिति विवेकः ।

(७८) "स्वदस्व हव्यानि"त्यस्य अनुभवेत्यर्थः 'स्वादुः सगन्धिः स्वदते तुषारै'-त्यत्र तु स्वदते रोचते इत्यर्थइत्यर्थभेदयोर्यथाक्रममुदाहरणे ।

(७९) धात्वादेरिति यदि धातव एव दन्त्यादयः पठ्येरन् तदा सिषेधेत्यादौ आदेशप्रत्ययोरिति (८५५सू०) नियमात् षत्वं न स्यादिति षादिकान् पठित्वा सादेशः क्रियते इति बोध्यम् । मनो० ।

(८०) धातूनां लक्षणद्वारा षोपदेशत्वं व्यवस्थापयति सेकेति दन्त्यश्च अच्

एकाचः षोपदेशाः ष्वष्क(८१)ष्विद् स्वद् स्वञ्ज स्वप स्मिङः ॥ दन्त्यः केवलदन्त्यः नतु दन्तोष्ठजोऽपि ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञापकात्। ह्राद अव्यक्तशब्दे। ह्रादते। जह्रादे २५। ह्लादी (८२)सुखे च चादव्यक्तशब्दे ह्लादते २६। स्वाद आस्वादने। स्वादते २७। पर्द कुत्सिते शब्दे गुदरवे इत्यर्थः पर्दते २८। यती प्रयत्ने। यतते। येते २९। युतृ जुतृ भासने। योतते। युयुते ३०। जोतते। जुजुते ३१। विथृ वेथृ याचने। विविथे ३२। विवेथे ३३। श्रथि शैथिल्ये। श्रन्थते ३४। ग्रथि कौटिल्ये। ग्रन्थते ३५। कथि श्लाघायाम्। कन्थते३६। एधादयोऽनुदात्तेतो गताः। अथाष्टत्रिंशत्तवर्गीयान्ताः परस्मैपदिनः। अत सातत्यगमने। अतति। अत आदेः (७२६पृ०)। आत। आततुः। आतुः। लुङि अ तइ स ई इति स्थिते।

## इट ईटि। ८। २। २८।

---

दन्त्याचौ तौ अन्तौ अव्यवहितपरौ यस्य स सकार आदिर्येषां ते एकाचःषोपदेशा बोध्या दन्त्यान्तेति किं चुष्कुदे इत्यादौ न। एकाचः किं सोस्लच्यते सोस्लयते इत्यादौ न। अतिप्रसङ्गवारणायाह सेकसृबिति। सेक गतौ, सृ गतौ, सृ गतौ, सृज विसर्गे, स्तृञ् आच्छादने स्त्यै शब्दसंघातयोः, एभ्योऽन्ये इत्यर्थः।

(८१) उक्तलक्षणेनासंगृहीतानन्यान् धातून् संगृह्णाति ष्वष्किति ष्वष्क गतौ, ञि ष्विदा चरणे, ष्वद आस्वादने, ष्वन्ज परिष्वङ्गे, ञि ष्वप स्वप्ने, ष्मिङ ईषद्धासे इत्येतेऽपि षोपदेशा इत्यन्वयः।

(८२) ह्लादीति ईदित्त्वस्य फलं श्वीदितो निष्ठायामिती(७३५पृ०)डनिषेधः॥

इटः परस्य सस्य लोपः स्यादीटि परे । सिज्लोप एकादेशे सिद्धो वाच्यः * । आतीत् । आतिष्टाम् । आतिषुः ।

वदव्रजहलन्तस्याचः । ७ । २ । ३ ।

वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थाने वृद्धिः स्यात् सिचि परस्मैपदेषु । इति प्राप्ते ।

नेटि । ७ । २ । ४ ।

इडादौ सिचि प्रागुक्तं न स्यात् । मा भवानतीत् । अतिष्टाम् । अतिषुः १ । चिती संज्ञाने । चेतति । चिचेत । अचेतीत् । अचेतिष्टाम् । अचेतिषुः २ । च्युतिर् आसेचने । सेचनमार्द्रीकरणम् आङीषदर्थेऽभिव्याप्तौ च । इर इत्संज्ञा वाच्या * । च्योतति । चुच्योत ।

इरितो वा । ३ । १ । ५७ ।

इरितो धातोश्च्लेरङ् वा स्यात् परस्मैपदे परे । अच्युतत्-अच्योतीत् ३ । श्च्युतिर् क्षरणे । श्च्योतति । चुश्च्योत । अश्च्युतत्-अश्च्योतीत् । यकाररहितोऽप्ययम् श्चोतति ४ । मन्थ विलोडने । विलोडनं प्रतीघातः । मन्थति । ममन्थ । यासुटः "क्ङिदाशिषीति(७।८५०)कित्त्वादनिदितामिति(१७८५०)" नलोपः मथ्यात् ५ । कुथि ७ पुथि ८ लुथि ९ मथि १० हिंसासंक्लेशनयोः । इदित्त्वान्नलोपो न । कुन्थ्यात् । मन्थ्यात् । षिधु गत्याम् । सेधति । सिषेध । सेधिता । असेधीत् । सात्पदाद्योरिति (७३०५०) निषेधे प्राप्ते

**उपसर्गात्(८३)सुनोतिसुवतिस्यति स्तौति स्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्। ८। ३। ६५।**

उपसर्गस्था(८४)न्निमित्तादेषां सस्य षः स्यात्।

**सदिरप्रतेः। ८। ३। ६६।**

प्रतिभिन्नादुपसर्गात् सदेः (८५) सस्य षः स्यात्।

**स्तन्भेः। ८। ३। ६७।**

सौत्रस्य(८६)सस्य षः स्यात्। योगविभाग उत्तरार्थः(८७)।

(८३) सुनोतीत्यादीनां पञ्चानां श्तिपा निर्देशात् यङ्लुकि अभिसोषवीतीत्यादौ न षत्वम् सेनयेति ण्यन्तात् शपा निर्देशात् यङ्लुकि न, तस्यानेकाच्त्वेऽपि क्वौ णिलोपे आचारे क्वौ यङः सम्भवात् सेधेति शपा निर्देशोऽपि तदर्थः दैवादिकनिवृत्त्यर्थश्च।

(८४) इण्को (९५पृ०) रित्यधिकारेऽपि उपसर्गे कवर्गासम्भवादिणैव संबध्यते इत्याशयेनाहोपसर्गस्यादिणिति अत्रेदं बोध्यं यत्क्रियां प्रत्येव प्रादीनां विशेषणत्वम् तत्क्रियां प्रत्येवोपसर्गत्वमिति नियमेन निर्गतः सावको यस्मात् इति वाक्ये गतपदलोपे निःसावक इत्यादौ निरादीनां गमाद्युपसर्गतया सुनोत्याद्युपसर्गत्वाभावान्न षत्वम्।

(८५) सदिरिति प्रथमा षष्ठ्यर्थे इत्याशयेन व्याचष्टे सदेरिति।

(८६) सौत्रस्येति स्तन्भुस्तुन्भ्वित्यादिसूत्रे (७१६४पृ०) निर्दिष्टस्यैव स्तन्भेः ग्रहणं नकारविशिष्टतया तस्यैव प्रत्यभिज्ञानात्।

(८७) उत्तरेति पृथक्सूत्रकरणात् अवाच्चेति (७२८पृ०) सूत्रे स्तन्भेरेव सम्बन्धार्थो न सदेः इत्यर्थः।

किञ्च अप्रतेरिति नानुवर्त्तते (८८) बाङ्कप्रतिष्टब्धविष्टब्ध-मन्युरिति ।

**अवाच्चालम्बना(८९)विदूर्य्ययोः ।८ ।३ ।६८ ।**

अवात् स्तन्भेरेतयोरर्थयोः षत्वं स्यात् ।

**वेश्च स्वनो भोजने । ८ । ३ । ६९ ।**

व्यवाभ्यां स्वनतेः षः स्याद्भोजने(९०) ।

**परिनिविभ्यः(९१)सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् । ८ । ३ । ७० ।**

परिनिविभ्यः परेषामेषां सस्य षः स्यात् । नि-षेधति ।

**प्राक्सितादड्व्यवायेऽपि । ८ । ३ । ६३ ।**

---

(८८) नानुवर्त्तते इति स्तन्भेरितिसूत्रे इति शेषः अननुवृत्तेः फलमाह बाङ्कप्रतीति रघुवंशपद्यमेतत् ।

(८९) आलम्बनमाश्रयणं यथा यष्टिमवष्टभ्यास्ते, आविदूर्य्यं सामीप्यम् अव-ष्टब्धा गौः निरुद्धा सती समीपे आस्ते इत्यर्थः । न नञ्पूर्व्वादिति(६५२ पृ०) निषेधे सत्यपि निपातनात् अविदूराद्भावप्रत्ययइति । मनो० ।

(९०) वि-ष्वणति मांसं सशब्दं भुङ्क्ते इत्यर्थः अन्यत्र वि-स्वनति वीणेति ।

(९१) षेञ् सेवने, षिञ् बन्धने, क्तान्तः सय इत्यजन्तः प्रत्ययविशिष्टग्रहणात् त्रिषितः विषय इत्यत्रैव षत्वं वि-षिनोतीत्यादौ तु न । षिवु तन्तु-सन्ताने, षह शक्तौ, सुट् आगमः परिष्करोतीत्यादौ षत्वम् । स्तुस्वञ्जो-स्तूपसर्गात् (७२७पृ०) इत्यनेनैव सिद्धे पर्य्यादिपूर्व्वयो रेतयोः "अड् अव्यवाये सितादीनां वेति (७८९पृ०) विकल्पार्थं पुनर्व्वचनम् ।

सेवसितेत्यत्र सितशब्दात्(९२)प्राक् ये सुनोत्यादय(३२७पृ०)स्तेषा मड्व्यवायेऽपि षत्वं स्यात्। न्यषेधत्। न्यषेधीत्। न्यषेधिष्यत्।

**स्थादिष्वभ्यासेन चाभ्यासस्य। ८। ३। ६४।**

प्राक् सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात्। एषामेव (९३) चाभ्यासस्य न तु सुनोत्यादीनाम्। नि-षिषेध। नि-षिषिधतुः।

**सेधतेर्गतौ। ८। ३। ११३।**

गत्यर्थस्य सेधतेः षत्वं न स्यात्। गङ्गां वि-सेधति ११। षिधू शास्त्रे माङ्गल्ये च। शास्त्रं शासनम्।

**स्वरतिसूतिसूयतिधूञूदितो वा। ७। २। ४४।**

---

(९२) क्तान्तात् षिञ बन्धने इत्यतः प्राक् अष्टमाध्यायतृतीयपादस्थपञ्चषष्टसूत्रमारभ्य तत्रत्यसप्ततितमसूत्रपर्य्यन्तसूत्रषट्कनिर्द्दिष्टा इत्यर्थः।

(९३) अत्रेदं बोध्यम् स्थादिषु द्वे वाक्ये तत्र यद्यपि नि-षिषेधेत्यादौ पूर्व्वभागस्योपसर्गादित्यनेन (३२७पृ०) सिद्धिः द्वितीयस्य तु आदेशप्रत्ययोरिति (९५पृ०) सिद्धिस्तथापि आद्यं वाक्यं फलत्रयार्थम् अभि-षिषेणयिषतीत्यादौ अषोपदेशस्यापि षत्वार्थम् अधि-तष्ठावित्यादौ अवर्णान्तादपि द्वितीयस्य षत्वार्थं, षणि निषिद्धप्रतिप्रसवार्थञ्च तेन स्तौतिण्योरिति (३२०४पृ०) नियमेन निवर्त्तितमपि षत्वम् अभिषिषिक्षतीत्यादावनेन स्यादेव। अभ्यासस्येति द्वितीयं वाक्यं स्थादिष्वभ्यासस्य षत्वं न तु सुनोतीत्यादिष्विति नियमार्थं तत्फलन्तु अभिसुसूषतीत्यादौ अभ्यासस्य न षत्वम् द्वितीयस्य तु स्तौतिण्योरेवेति नियमात् नेति विशेषः। अभिषिषासतीत्यादौ तु षणोऽसम्भवेन आदेशप्रत्यययोरिति षत्वम् पूर्व्वस्य तु न उक्तनियमादिति एवमन्यत्राप्यूह्यम्। मनो०।

स्वरत्यातेरूदितश्च परस्य वलादेरार्द्धधातुकस्य इड् वा स्यात्।

**झषस्तथोर्द्धोऽधः। ८। २। ४०।**

झषः परयोस्तथोर्धः स्यात् न तु दधातेः। जश्त्वम्। सिषेद्ध-सिषेधिथ। सेद्धा-सेधिता। सेत्स्यति-सेधिष्यति। असैत्सीत्।

**झलोझलि। ८। २। २६।**

झलः परस्य सस्य(६४) लोपः स्यात् झलि। असैद्धाम्। असैत्सुः। असैत्सीः। असैद्धम्। असैद्ध। असैत्सम्। असैत्स्व। असैत्स्म। पक्षे असेधीत्। असेधिष्टामित्यादि १२। खाद्द भक्षणे। ऋकार इत्। खादति। चखाद १३। खद स्थैर्य्ये हिंसायाञ्च चाद्भक्षणे। स्थैर्य्ये अकर्म्मकः। खदति।

**अत उपधायाः। ७। २। ११६।**

उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे। चखाद।

**णलुत्तमो वा। ७। १। ६१।**

उत्तमो णल् वा णित् स्यात्। चखाद-चखद।

**अतो हलादेर्लघोः। ७। २। ७।**

---

(६४) सस्य लोपइति तत्र प्रत्यासत्तेः झलोझलि सस्येति निर्दिष्टानां तयोः-स्थानेकपदस्थत्वे एव लोपस्तेन सोमसुत् स्यातेत्यादौ नेति बोध्यम्।

हलादेर्लघोरकारस्य इडादौ परस्मैपदे परे सिचि वृद्धिर्वा स्यात्। अखादीत्-अखदीत् १४। बद स्थैर्ये। पवर्गीयादिः। बदति। बबाद॥ बेदिथ १५। गद व्यक्तायां वाचि। गदति।

**नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्राति-प्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च। ८। ४। १७।**

उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्यात् गदादिषु। प्र-णि-गदति। जगाद १६। रद विलेखने। विलेखनम्भेदनम्। रराद। रेदतुः १७। णद अव्यक्तशब्दे।

**णो नः। ६। १। ६५।**

धातोरादेर्णस्य नः स्यात्।

णोपदेशा (८५) स्त्वनर्दनाटिनाथ्नाधृनन्दनक्कनृनृतः। नाटेर्दीर्घोर्हस्य पर्युदासाद्घटादिर्णोपदेश एव। तवर्गचतुर्थान्तनाधतेर्न्दनर्दी च केचिन्नोपदेशतामाहुः।

**उपसर्गादसमासेऽपि णोपदेशस्य। ८। ४। १४।**

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्

---

(८५) नर्द शब्दे नट अवस्यन्दने चुरादिःनाटीति दीर्घनिर्देशात् णट नृता-विति घटादिर्नेह गृह्यते नाथृ नाधृ याच्ञादौ टु नदि समृद्धौ नक्क नाशने नृ नये नृती गात्रविक्षेपे एतद्भिन्ना णोपदेशा इत्यर्थस्तेनामेव णत्वनिमित्ते सति णत्वं नत्वं मामित्यारम्भफलम्।

समासेऽसमासेऽपि । प्र णदति । प्र णि नदति १८ । अर्द गतौ याचने च । अतआदेः (७२६९०) ।

तस्मान्नुड् द्विहलः । ७ । ४ । ७१ ।

द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् । आनर्द । आर्दीत् १९ । नर्द गर्द शब्दे । णोपदेशत्वाभावान्न णः । प्र नर्दति २० । गर्दति । जगर्द २१ । तर्द हिंसायाम् । तर्दति २२ । कर्द कुत्सिते शब्दे । कुत्सिते कौक्षे । कर्दति २३ । खर्द दन्दशूके । दंशहिंसादिरूपायां दन्दशूकक्रियायामित्यर्थः । खर्दति । चखर्द २४ । अति अदि बन्धने । अन्तति । आनन्त २५ । अन्दति । आनन्द २६ । इदि परमैश्वर्य्ये । इन्दति । इन्दाञ्चकार २७ । बिदि अवयवे । पवर्गद्वतीयादिः । बिन्दति । अवयवङ्करोतीत्यर्थः । भिदीति पाठान्तरम् २८ । गडि वदनैकदेशे । गण्डति २९ । अन्तत्यादयः पञ्चैते न तिङ्विषया इति काश्यपः । अन्ये तु तिङमपीच्छन्ति । णिदि कुत्सायाम् । निन्दति । प्र-णिन्दति ३० । टु नदि समृद्धौ ।

आदिर्ञिटुडवः । १ । ३ । ५ ।

उपदेशे धातोराद्या एते इतः स्युः । नन्दति । इदित्वान्नलोपो न । नन्द्यात् ३१ । चदि आह्लादे । चचन्द ३२ । त्रदि चेष्टायाम् । तत्रन्द ३३ । कदि क्रदि क्लदि आह्वाने रोदने च । चकन्द ३४ । चक्रन्द ३५ । चक्लन्द ३६ । क्लिदि परिदेवने । चिक्लिन्द ३७ । शुन्ध शुद्धौ । शुशुन्ध । नलोपः

शुभ्यात्। ३८। अथ (८६) कवर्गीयान्ता अनुदात्तेतो द्विचत्वारिंशत्। शीकृ सेचने। तालव्यादिः दन्त्यादिरित्येके। शीकते। शिशीके १। लोकृ दर्शने। लोकते। लुलोके २। श्लोकृ सङ्घाते। सङ्घातो ग्रन्थः स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्व्वा आद्ये अकर्म्मको द्वितीये सकर्म्मकः। श्लोकते ३। द्रेकृ ध्रेकृ शब्दोत्साहयोः। उत्साहो वृद्धिरौद्धत्यञ्च। दिद्रेके ४। दिध्रेके ५। रेकृ शङ्कायाम्। रेकते। ६। सेकृ ७ स्रेकृ ८ स्रकि ९ श्रकि १० श्लकि ११ गतौ। त्रयो दन्त्यादयः। द्वौ तालव्यादी। अषोपदेशत्वान्न षः। सिषेके। शकि शङ्कायाम्। शङ्कते। शशङ्के १२। अकि लक्षणे। अङ्कते। आनङ्के १३। वकि कौटिल्ये। वङ्कते १४। मकि मण्डने। मङ्कते १५। कक लौल्ये। लौल्यङ्गर्व्वश्चापल्यञ्च। ककते। चकके १६। कुक वृक आदाने। कोकते। चुकुके १७। वर्कते। ववृके १८। ऋदुपधेभ्यो लिटः कित्त्वं (८७)गुणात्पूर्व्वविप्रतिषेधेन। चक तृप्तौ प्रतिघाते च। चकते। चेके १९। ककि २० वकि २१ श्वकि २२ त्रकि २३ ढौकृ २४ त्रौकृ २५ ष्वष्क २६ वस्क २७ मस्क २८ टिकृ २९ टीकृ ३० तिकृ ३१ तीकृ ३२ रघि ३३ लघि ३४ गत्यर्थाः। कङ्कते। डुढौके।

(८६) प्रथमं माङ्गलिकतया तवर्गान्त एधतिरभिहितस्तदनुरोधेनैव कतिचित् तवर्गीयान्तानुक्त्वा मातृकापाठक्रमेण कवर्गीयप्रभृत्यन्तान् क्रमेणाह अथेति।

(८७) परमपि गुणं बाधित्वा नित्यत्वात् लिटः कित्त्वमित्याशयेनाह लिटः कित्त्वमिति। एतच्च प्रसङ्गादुक्तमपि क्ङिति इति कित्त्वस्य सिद्धेः।

तुतौके। सुब्धातुष्ठिवष्वक्कतीनां(६८)सत्वप्रतिषेधो वक्तव्यः*। ष्वक्कते। षष्वक्के। अत्र तृतीयन्त्यादिमेके। लघि भोजननिवृत्तावपि। अघि वघि मघि गत्याक्षेपे। आक्षेपो निन्दा। गतौ गत्यारम्भे चेत्यन्ये। अङ्घते। आनङ्घे ३५। वङ्घते ३६। मङ्घते ३७। मघि कैतवे च। राघृ लाघृ द्राघृ सामर्थ्ये। राघते ३८। लाघते ३९। ध्राघृ ४० इत्यपि केचित्। द्राघृ आयामे च। आयामो दैर्घ्यम्। द्राघते ४१। श्लाघृ कत्थने। श्लाघते ४२। अथ परस्मैपदिनः पञ्चाशत् ५०। फक्क नीचैर्गतौ। नीचैर्गतिर्मन्दगमनमसद्व्यवहारश्च। फक्कति। पफक्क १। तक हसने। तकति २। तकि कृच्छ्रजीवने। तङ्कति ३। बुक्क भषणे भषणं श्वरवः। बुक्कति ४। कख हसने। प्र-नि-कखति ५। ओखृ ६ राखृ ७ लाखृ ८ द्राखृ ९ ध्राखृ १० शोषणालमर्थयोः। ओखति। ओखाञ्चकार। शाखृ ११ श्लाखृ १२ व्याप्तौ। शाखति। उख १३ उखि १४ वख १५ वखि १६ मख १७ मखि १८ णख १९ णखि २० रख २१ रखि २२ लख २३ लखि २४ इख २५ इखि २६ ईखि २७ वल्गि २८ रगि २९ लगि ३० अगि ३१ वगि ३२ मगि ३३ तगि ३४ त्वगि ३५ श्रगि ३६ श्लगि ३७ इगि ३८ रिगि ३९ लिगि ४० गत्यर्थाः। कवर्गद्वितीयान्ताः पञ्चदश। तृतीयान्ता

---

(६८) सुब्धात्विति तेन षण्डमाचष्टे इत्याख्याने णिचि षण्डयतीत्यादौ न सत्वम् वस्तुतउपदेश इत्युक्तेः तस्योपदेशाभावात् सुब्धात्वित्यंशो भाष्यकृता प्रत्याख्यातः।

स्वयोदश। इह खान्तेषु रिख ४१ लख ४२ लिखि ४३ शिखि ४४ इत्यपि चतुरः। केचित् पठन्ति।

## अभ्यासस्यासवर्णे। ६।४।७८।

अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि। उवोख। सन्निपातपरिभाषया इजादेरि (७२२९०)त्याम्न। ऊखतुः। ऊखुः। इह सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाद्ध्रस्वः प्राप्तो न भवति सकृत्प्रवृत्तत्वात्। आङ्गत्वाद्धि पर्जन्यवल्लक्षणप्रवृत्तत्या ह्रस्वे कृते ततो दीर्घः वर्णादाङ्गम्बलीय इति न्यायात्परत्वाच्च। उङ्खति। ववखतुः। वङ्खति। मेखतुः। त्वगि कम्पने च। युगि ४५ जुगि ४६ वुगि ४७ वर्ज्जने। युङ्गति। घघ हसने। घघति। जघाघ ४८। मघि मण्डने। मङ्घति ४९। शिघि आघ्राणे। शिङ्घति ५०। अथ चवर्गीयान्ताः। तत्रानुदात्तेत एकविंशतिः। वर्च दीप्तौ। वर्चते १। षच सेचने सेवने च। सचते। सेचे। सचिता २। लोचृ दर्शने। लोचते। लुलोचे ३। शच व्यक्तायां वाचि। शेचे ४। श्वच ५ श्वचि ६ गतौ। श्वचते। श्वञ्चते। कच बन्धने। कचते ७। कचि ८ काचि ९ दीप्तिबन्धनयोः। चकञ्चे। चकाञ्चे। मच १० मुचि ११ कल्कने। कल्कनं दम्भः शाठ्यं च कथनमित्यन्ये। मेचे। मुमुञ्चे। मचि धारणोच्छ्रायपूजनेषु ममञ्चे १२। पचि व्यक्तीकरणे। पञ्चते १३। ष्टुच प्रसादे। स्तोचते। तुष्टुचे १४। ऋज गतिस्थानार्ज्जनोपार्ज्जनेषु। अर्ज्जते। नुड्विधौ (७३२९०)ऋकारैकदेशो रेफो हल्त्वेन गृह्यते तेन द्विहल्त्वा-

लुट्। आप्टजे १५। ऋजि १६ भृजी १७ भर्ज्जने। ऋञ्जते। उपसर्गादृतीति (४५पृ०) वृद्धिः। प्रार्ञ्जते। ऋञ्जाञ्चक्रे। आर्ञ्जिष्ट। भर्ज्जते। बभृजे। अभर्ज्जिष्ट। एजृ १८ भ्रेजृ १९ भ्राजृ २० दीप्तौ। एजाञ्चक्रे। ईज गतिकुत्सनयोः। ईजाञ्चक्रे २१। अथ द्विसप्ततिर्व्रज्यन्ताः (७५५१पृ०) परस्मैपदिनः। शुच शोके। शोचति १। कुच तारे शब्दे। कोचति २। कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः। अनिदितामिति (१७८पृ०) नलोपः। कुच्यात् ३ क्रुच्यात् ४। लुञ्च अपनयने। लुच्यात् ५। अञ्चु गतिपूजनयोः। अच्यात्। गतौ तु (१८१पृ०) नलोपः। पूजायान्तु अञ्च्यात् ६। वञ्चु ७ चञ्चु ८ तञ्चु ९ त्वञ्चु १० म्रुञ्चु ११ म्लुञ्चु १२ म्रुचु १३ म्लुचु १४ गत्यर्थाः। वच्यात्। चच्यात्। तच्यात्। त्वच्यात्। अम्रुञ्चीत्। अम्लुञ्चीत्।

जृस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च। ३। १। ५८।

एभ्यश्च्लेरङ् वा स्यात्। अम्रुचत्-अम्रोचीत्। अम्लुचत्-अम्लोचीत्। ग्रुचु १५ ग्लुचु १६ कुजु १७ खुजु १८ स्तेयकरणे। जुग्रोच। अग्रुचत्-अग्रोचीत्। जुग्लोच। अग्लुचत्-अग्लोचीत्। अकोजीत् अखोजीत्। ग्लुञ्चु षस्ज गतौ। अङ्। अग्लुचत्-अग्लुञ्चीत् १९। सस्य श्चुत्वेन शः जश्त्वेन जः। सज्जति। अयमात्मनेपद्यपि। सज्जते २०। गुजि अव्यक्ते शब्दे। गुञ्जति। गुञ्ज्यात् २१। अर्च पूजायाम्। आनर्च २२। म्लेछ अव्यक्ते शब्दे। अस्फुटेऽपशब्दे चेत्यर्थः।

म्लेच्छति। मिम्लेच्छ २३। लछ लाछि लक्षणे। ललच्छ २४। ललाञ्छ २५। वाछि इच्छायाम्। वाञ्छति २६। आछि आयामे। आञ्छति। अतआदेरित्यत्र (७२६७०) तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थम् तेन दीर्घभावान्न नुट्। आञ्छ। तपरकरणं मुखसुखार्थमिति मते तु नुट्। आनाञ्छ २७। ह्रीछ लज्जायाम्। जिह्रीच्छ २८। हुर्छा कौटिल्ये। कौटिल्यमपसरणमिति मैत्रेयः। उपधायाञ्चेति(७२४७०)दीर्घः। हूर्छति२९। मुर्छा मोहसमुच्छ्राययोः। मूर्छति ३०। स्फुर्छा विस्तृतौ। स्फूर्छति ३१। युछ प्रमादे। युच्छति (९९) ३२। उछि उञ्छे। "उञ्छः कणश आदानम् कणिशाद्यर्जनं शिलमिति" यादवः। उञ्छति। उञ्छाञ्चकार ३३। उछी विवासे। विवासः समाप्तिः प्रायेणायं विपूर्वः। व्युच्छति ३४। ध्रज ध्रजि धृज धृजि ध्वज ध्वजि गतौ। ध्रजति ३५ ध्रञ्जति ३६ धर्जति ३७ धृञ्जति ३८ ध्वजति३९ ध्वञ्जति ४०। कूज अव्यक्ते शब्दे। चुकूज ४१। अर्ज षर्ज अर्जने। अर्जति। आनर्ज ४२। सर्जति। ससर्ज ४३। गर्ज शब्दे। गर्जति ४४। तर्ज भर्त्सने। तर्जति। ततर्ज ४५। कर्ज व्यथने। चकर्ज ४६। खर्ज पूजने च। चखर्ज ४७। अज गतिक्षेपणयोः। अजति।

(९९) युच्छतीति अन्तरङ्गत्वात् तुकि कृते लघूपधत्वाभावात् न गुणः वर्णादाङ्गस्य बलीयस्त्वं तु युगपत्प्राप्तिस्थाने समानाश्रये एवेति कैयटादिभिर्व्यवस्थापितमिति न तस्यात्र प्रवृत्तिः। मनो०।

## अजेर्व्यघञपोः। २। ४। ५६।

अजेर्वी (१००) त्ययमादेशः स्यादार्द्धधातुकविषये (१०१) घञ-मपञ्च वर्जयित्वा। वलादावार्द्धधातुके वेष्यते। विवाय। विव्यतुः। विव्युः। अत्र वकारस्य हलुपरत्वादुपधायाश्चेति (७३४पृ०)दीर्घे प्राप्तेऽचः परस्मिन्निति (२४पृ०) स्थानिवद्भावे-नाच्परत्वम्। नच नपदान्तेति (२५पृ०) निषेधः स्वरदीर्घयलो-पेषु लोपाजादेश एव न स्थानिवदित्युक्तेः। थलि "एका-च(७२५पृ०)इतीण्निषेधे प्राप्ते।

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि। ७। २। १३।

एभ्यो लिटि इट् न स्यात्। क्रादीनाञ्चतुर्णां (१०२) ग्रहणं नियमार्थं प्रकृत्याश्रयः प्रत्ययाश्रयो वा यदिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्यएव नान्येभ्यइति। ततश्चतुर्णामयलि भार-द्वाज (१०३) नियमप्रापितस्य वमादिषु क्रादिर्नियमप्रापितस्य चेटोनिषेधार्थम् (१०४)।

---

(१००) अजेर्वी दीर्घान्त आदेशः ह्रस्वान्तत्वे संवीतिरिति न सिध्येत्।

(१०१) आर्द्धधातुके विषयेइति तेन यङुत्पत्तेः प्रागेव वीभावे हलादित्वसम्भवात् यङि वेवीयते इति सिद्धम् परसप्तम्यां तु नैतत्सिध्येदिति भावः। मनो०।

(१०२) इ इति इङ्इणोर्ग्रहणम् क सृ भृ एषाम् एकाच उपदेशे इति (७२५पृ०) प्रकृत्याश्रये इङ्इणोस्तु श्र्युकः कितीति(७८७पृ०) प्रत्यया-श्रये च निषेधे प्राप्ते नियमार्थमिदमित्याह क्रादीनामिति।

(१०३) भारद्वाजेति ऋतो भारद्वाजस्येति (७५८पृ०) ऋदन्ताश्रयस्य थला-श्रयस्य चेत्यर्थः।

(१०४) निषेधार्थमिति। नेड् वशी(७३३८पृ०)त्युपक्रमात् नञा प्रापितस्यैवाभाव-स्यायं नियमो न तु विभाषाबललभ्यस्य वैकल्पिकाभावस्य तेन सिषिधिव

**अचस्तास्वत्थल्यनिटोनित्यम्। ७। २। ६१।**

उपदेशे (१०५) ऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थलइड् न स्यात्।

**उपदेशेऽत्वत: (१०६)। ७। २। ६२।**

उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इड् न स्यात्।

**ऋतोभारद्वाजस्य। ७। २। ६३।**

तासौ नित्यानिटः ऋदन्तस्यैव (१०७) थलो नेट् भारद्वाजस्य मतेन। तेनान्यस्य स्यादेव। अयमत्र संग्रहः।

शिषिच्छेत्युभयम् तत्र इङ्इञोः प्रकृत्याश्रयस्य नियमासम्भवस्तयोरुदात्तत्वेनेड्निषेधाप्रसक्तेः थलोऽकित्त्वेन च प्रत्ययाश्रयस्याप्यसम्भवोऽतस्तद्विषये न नियमः किन्तु वमसेध्वेवह्विमहीनां कित्त्वेन तत्रैव क्रादीनां त्रयाणां नियमः।

(१०५) उत्तरसूत्रादुपदेशे इत्यपकृष्यते तच्चाजन्तविशेषणमित्याह उपदेशे इति नित्यमित्यनिटो विशेषणम्। क्व नित्यमनिडित्यपेक्षायां तासि च क्लृपः (उ८०पृ०) इत्यतस्तासीति पदमनुवर्त्त्य सप्तम्या विपरिणमय्याह तासाविति। सूत्रे तास इव थल इट् न स्यादिति तास्वदिति षष्ठ्यर्थे वतिः।

(१०६) नित्यानिट इत्यनुवर्त्तनात् क्रमेस्तासौ स्नुक्रमोरनात्मनेपदनिमित्ते (उ६४पृ०) इत्यनेन परस्मैपदे सेट्कतया नित्यानिट्कत्वाभावात् चक्रमिथेत्येव भवति। उपदेशे किं चकर्षिथेत्येव। अत्वतः किं बिभेदिथेति। तपरः किं रराधिथेति। तासि किं जिघत्सतीत्यादौ सनि अनिट्कत्वेऽपि जघसिथेत्येव। नित्यानिटः किं वेट्कस्य मा भूत् आनञ्जिथेति।

(१०७) तपरकरणात् ह्रस्वान्तस्यैवायं नियमः। अचस्तास्वदित्येव प्राप्तत्वात् न निषेधविधिः। इङ्इञो च यद्यपि सेट्कौ तथापि इङः परस्मैपदित्वाभावेन थलोऽसम्भवः इञस्तु छन्दसि बभूथेत्यादिना (उ५२२पृ०) ववर्थेति निपातनात् भाषायामिटा भाव्यमित्यतो नियमोऽयमित्याह ऋदन्तस्यैवेति।

अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम्।
ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड्भवेत्॥

न च (१०८) सुद्रादीनामपि थलि विकल्पः शङ्क्यः अचस्तास्वदिति उपदेशेऽत्वतइति च योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्त्तकः अनन्तरस्येति न्यायात्। विवयिथ-विवेथ-आजिथ। विव्यथुः। विव्य। विवाय-विवय। विव्यिव। विव्यिम। वेता-अजिता। वेष्यति- अजिष्यति। अजतु। आजत्। अजेत्। वीयात्।

## सिचि वृद्धिः परस्मैपदेषु।७।२।१।

इगन्ताङ्गस्य वृद्धिः स्यात्परस्मैपदे परे सिचि। अवैषीत्-आजीत्। अवेष्यत्-आजिष्यत् ४८। तेज पालने। तेजति ४९। खज मन्थे। खजति ५०। खजि गतिवैकल्ये। खञ्जति ५१। एजृ कम्पने। एजाञ्चकार ५२। टु ओ स्फूर्ज्जा वज्रनिर्घोषे। स्फूर्ज्जति। पुस्फूर्ज्ज ५३। क्षि क्षये (१०९) अकर्म्मकः। अन्तर्भावितण्यर्थस्तु सकर्म्मकः। क्षयति।

(१०८) ननु सुद्रुप्रभृतीनां थलि भारद्वाजस्य नियमादिट् स्यात् न च क्रादिसूत्रे चतुर्णां ग्रहणेनास्य बाध उचितः येन नाप्राप्तन्यायेन वमादौ क्रादिनियमप्रापितस्यैव बाधौचित्यादित्याशङ्क्याह नचेति समाधत्ते अचस्तास्वदिति द्वयोरनन्तरमस्य सूत्रस्यारम्भात् योऽयं तासौ नित्यानिटस्थलीति निषेधः स भारद्वाजमते ऋदन्तस्यैव नान्यस्येति नियमात् सर्व्वेष्टसिद्धिः। मनो०।

(१०९) क्षि क्षये इति अस्याजन्तेषु पाठस्योचितत्वेऽपि प्रसङ्गादत्रोक्तिः

चिच्चाय। चिच्चियतुः। चिच्चियुः। चिच्चयिथ-चिच्चेथ। चिच्चियिव। चिच्चियिम। चेता।

## अकृत्सार्वधातुकयोर्दीर्घः। ७। ४। २५।

अजन्त(११०)स्याङ्गस्य दीर्घः स्याद्यादौ प्रत्यये परे न तु कृत्सार्वधातुकयोः। चीयात्। अचैषीत् ५४। चीज अव्यक्ते शब्दे कूजिना सहायम्पठितुं युक्तः। चिचीज ५५। लज ५६ लजि ५७ भर्जने। लाज ५८ लाजि ५९ भर्त्सने च। जज ६० जजि ६१ युद्धे। तुज हिंसायाम्। तोजति। तुतोज ६२। तुजि पालने ६३। गुज ६४ गजि ६५ गृज ६६ गृजि ६७ मुज ६८ मुजि ६९ शब्दार्थाः। गज मदने च। ७० वज ७१ व्रज गतौ। वदव्रजेति (७२६पृ०) वृद्धिः। अव्राजीत् ७२। अथ टवर्गीयान्ताः शाड्यन्ताः (७५२पृ०) अनुदात्तेतः षट्त्रिंशत्। अट्ट अतिक्रमहिंसयोः। दोपधोऽयम् (१११)। टोपध इत्येके। अट्टते। आनट्टे १। वेष्ट वेष्टने। विवेष्टे २। चेष्ट चेष्टायाम्। अचेष्टिष्ट ३। गोष्ट लोष्ट सङ्घाते। जुगोष्टे ४।

---

(११०) दीर्घग्रहणेनाचश्चेति (२५पृ०) परिभाषोपस्थानादाहाजन्तस्येति अयङ् यीत्यतः (७२१०पृ०) यीत्यनुवर्त्तते।

(१११ दोपधत्वेन न न्द्राः इति (७११५पृ०) द्वित्वनिषेधात् दकारं विहाय टिशब्दस्य द्वित्वे दकारस्य ष्टुत्वे चर्त्त्वे च कृते अट्टिटिषते इति आट्टिटदिति च सिद्धम् न च परत्वात् पूर्व्वं ष्टुत्वापत्तिरसिद्धत्वात् पूर्व्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति न्यायात् टोपधत्वे तु पूर्व्वत्रासिद्धमद्विर्व्वचने इति पूर्व्वत्रासिद्धत्वाभावात् द्वित्वे हलादिशेषे च आटिट्टिषते आटिट्टदिति भेदः। मनो०।

लुलोटे ५। घट्ट चलने। जघट्टे ६। स्फुट विकसने। स्फोटते। पुस्फुटे ७। अटि गतौ। अण्टते। आनण्टे ८। वटि एकचर्य्यायाम् (११२)। ववण्टे ९। मठि कठि शोके। शोक इहाध्यानम्। मण्ठते १०। कण्ठते ११। मुठि पालने। मुण्ठते १२। हेठ विबाधायाम्। विबाधा शाठ्यम्। जिहेठे १३। एठ च। एठाञ्चक्रे १४। हिडि गत्यनादरयोः। हिण्डते। जिहिण्डे १५। कुडि सङ्घाते। जुकुण्डे १६। कुडि दाहे। चुकुण्डे १७। वडि १८ विभाजने मडि १९ च। ववण्डे। भडि परिभाषणे। परिहासः सनिन्दोपालम्भश्च परिभाषणम्। बभण्डे २०। पिडि सङ्घाते। पिपिण्डे २१। मुडि मार्ज्जने। मार्जनं शुद्धिर्न्यग्भावश्च। मुमुण्डे २२। तुडि तोडने। तोडनं दारणं हिंसनञ्च। तुतुण्डे २३। हुडि वरणे। वरणं स्वीकारः। हरणमित्येके। जुहुण्डे २४। चडि कोपे। चण्डते २५। शडि रुजायां सङ्घाते च। शण्डते २६। तडि ताडने। तण्डते २७। पडि गतौ। पण्डते २८। कडि मदे। कण्डते २९। खडि मन्थे ३०। हेडृ होडृ अनादरे। जिहेडे ३१। जुहोडे ३२। बाडृ आप्लाव्ये। बमादिः। आप्लाव्यमाप्लवः। बाडते ३३। द्राडृ ध्राडृ विशरणे। द्राडते ३४। ध्राडते ३५। शाडृ श्लाघायाम्। शाडते ३६। अथ आ टवर्गीयान्तसमाप्तेः परस्मैपदिनः। शौटृ गर्व्वे। शौटति। शुशौट १। यौटृ बन्धे। यौटति २। म्लेटृ म्रेडृ उन्मादे। द्वितीयो

(११२) एकचर्य्या असहायगमनं वण्टते सहायं विना चरतीत्यर्थः।

डान्तः। टान्तमध्ये पाठस्त्वर्थसाम्यान्नाथतिवत्। स्नेटति स्नेडति ४। कटे वर्षावरणयोः चटे इत्येके। चकाट। सिचि 'अतो हलादेर्लघोरिति (७४०सू०) वृद्धौ प्राप्तायाम्।

**ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्।७।२।५।**

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि। अकटीत् ६। अट पट गतौ। आट। आटतुः। आटुः ७। पपाट। पेटतुः। पेटुः ८। रट परिभाषणे। रराट ९। लट बाल्ये। ललाट १०। शट रुजाविशरणगत्यवसादनेषु। शशाट ११। वट वेष्टने। ववाट। ववटतुः। ववटुः। ववटिथ १२। किट खिट त्रासे। केटति १३। खेटति १४। शिट षिट अनादरे। शेटति। शिशेट १५। सेटति। सिषेट १६। जट १७ झट १८ सङ्घाते। भट भृतौ १९। तट उच्छ्राये २०। खट काङ्क्षायाम् २१। णट नृतौ २२। पिट शब्दसङ्घातयोः २३। हट दीप्तौ २४। षट अवयवे २५। लुट २६ विलोडने। डान्तोऽयमित्येके २७। चिट परप्रेष्ये २८। विट शब्दे २९। बिट ३० आक्रोशे। वलादिः। हिटइत्येके ३१। इट किट कटी गतौ। एटति ३२। केटति ३३। कटति ३४। ईकारः श्वीदितो निष्ठायामिति (७३५०सू०) इण्निषेधार्थः केचित्तु इदितं मत्वा नुमि कृते कण्टतीत्यादि वदन्ति। अन्ये तु इ ई इति प्रश्लिष्य। अयति। * इयाय। इयतुः (११३)। इयुः। इययिथ-इयेथ। इयाय-इयय।

---

* अयमुदयति मुद्राभञ्जनः पद्मिनीनामित्याद्यासादाहरणम्।

(११३) इयतुरित्यत्र द्वित्वे कृते एरनेकाचः (७३१८सू०) इति यणं

दीर्घस्य तु इजादेश्च (७२१४०) इत्यामि अयाञ्चकारेत्यादि उदाहरन्ति। मडि भूषायाम् ३५। कुडि वैकल्ये। कुण्डति। कुण्डत इति तु दाण्डे गतम् ३६। मुण्ड ३७ मर्द्दने। चडि अल्पीभावे ३८। मुडि खण्डने। मुण्डति ३९। पुडि चेत्येके। पुण्डति ४०। रुटि लुटि स्तेये। रुण्टति ४१। लुण्ठति ४२। रुठि ४३ लुठि ४४ इत्येके। रुडि ४५ लुडीत्यपरे ४६। स्फुटिर् विशरणे। इरित्त्वादङ्‌वा। अस्फुटत्-अस्फोटीत् ४७। स्फुटीत्यपि केचित्। इदित्त्वान्नुम्। स्फुण्टति ४८। पठ व्यक्तायां वाचि। पेठतुः। पेठिथ। अपटीत्-अपाठीत् ४९। वठ स्थौल्ये। ववठतुः। ववठिथ ५०। मठ मदनिवासयोः ५१। कठ कृच्छ्रजीवने ५२। रठ परिभाषणे ५३। रठेत्येके ५४। हठ प्लुतिशठत्वयोः। बलात्कारे इत्येके। हठति। उञ्झठ ५५। रुठ ५६ लुठ ५७ उठ ५८ उपघाते। ओठति। ऊठेत्येके। ऊठति। ऊठाञ्चकार ५९। पिठ ६० हिंसासंक्लेशनयोः। शठ कैतवे च ६१। शुठ प्रतिघाते। शोठति ६२। शठीति स्वामी। शुण्ठति। कुठि च। कुण्ठति ६३। लुठि आलस्ये प्रतिघाते च ६४। शुठि शोषणे ६५। रुठि ६६ लुठि ६७ गतौ। चुडु भावकरणे भावकरणमभिप्रायसूचनम्। चुड्डति। चुचुड्ड ६८। अड्ड अभियोगे।

---

बाधित्वा अन्तरङ्गत्वात् सवर्णदीर्घे अचि श्नुभ्रुवा (११८४) मितीयङ्। केचित्तु वर्णादाङ्गस्य बलीयस्त्वेन सवर्णदीर्घं बाधित्वा यणेव अभ्यासोत्तरेकारस्य सवर्णदीर्घयणौ प्रति स्थानित्वेन समानाश्रयतया वर्णादाङ्गं बलीय इति न्यायस्यात्र प्रवृत्तेरित्याहुः फलतोऽत्रैवस्मनो०।

अड्डति । आनड्ड ६९ । कड्ड कार्कश्ये । कड्डति ७० । चुड्डादयस्त्रयो दोपधाः तेन क्विपि । चुत् । अत् । कत् । इत्यादि । क्रीडृ विहारे । चिक्रीड ७१ । तुडृ तोडने । तोडति । तुतोड ७२ । तूडृ इत्येके ७३ । हुडृ हूडृ होडृ गतौ । हुड्यात् ७४ । हूड्यात् ७५ । होड्यात् ७६ । रौडृ अनादरे ७७ । रोडृ ७८ लोडृ ७९ उन्मादे । अड उद्यमे । अडति । आड । आडतुः आडुः ८० । लड विलासे । लडति ८१ । डलयोरैकत्वस्मरणाल्ललतीति स्वाम्यादयः । कड मदे । कडति ८२ । कडि इत्येके । कण्डति ८३ । गडि वदनैकदेशे (११४) । गण्डति ८४ । इति टवर्गीयान्ताः । अथ पवर्गीयान्ताः । तत्रानुदात्तेतः स्तोभत्यन्ताः (उ०५७पृ०) चतुस्त्रिंशत् । तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः । आद्योऽनुदात्तः । क्षीरस्वामी त्वयं सेडिति बभ्राम । तेपते । तितिपे । क्रादि (उ४८पृ०) नियमादिट् । तितिपिषे । तेप्ता । तेप्स्यते ।

## लिङ्सिचावात्मनेपदेषु । १ । २ । ११ ।

इक्समीपाद्धलः परौ झलादी (११५) लिङ् आत्मनेपदे परे सिच्चेत्येतौ कितौ स्तः । किच्चान्न गुणः । तिप्सीष्ट । तिप्सीयास्ताम् । तिप्सीरन् । लुङि, झलो झलीति (उ४०पृ०) सलोपः । अतिप्त । अतिप्साताम् । अतिप्सत[1] । तेपते । तितेपे[2] । तिष्टिपे

---

(११४) गडीति टवर्गीयान्तप्रकरणादत्रैव पाठो न्याय्य इति मनो० ।

(११५) इको झलित्यतो (उ१९९पृ०) झलित्यनुवर्त्त्य प्रत्ययेऽलग्रहणे तदादिग्रहणमित्याशयेनाह झलादी इति ।

तिष्टिपाते। तिष्टिपिरे ३। तिष्टेपे। तिष्टेपाते। तिष्टेपिरे ४। तेपृ कम्पने च। ग्लेपृ दैन्ये। ग्लेपते ५। टुवेपृ कम्पने। वेपते ६। केपृ ७ गेपृ ८ ग्लेपृ ९ च। चात्कम्पने गतौ च सूत्रविभागादिति स्वामी। मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पने इत्यपेक्षतइत्याह। ग्लेपेरर्थभेदात् पुनः पाठः। मेपृ १० रेपृ ११ लेपृ १२ गतौ। त्रपूष लज्जायाम्। त्रपते।

## तॄफलभजत्रपश्च। ६। ४। १२२।

एषामतएकारोऽभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च। त्रेपे। त्रेपाते। त्रेपिरे। ऊदित्त्वाद्विट्। त्रपिता-त्रप्ता। त्रपिषीष्ट-त्रप्सीष्ट १३। कपि चलने। कम्पते। चकम्पे १४। रबि १५ लबि १६ अबि १७ शब्दे। ररम्बे। ललम्बे आनम्बे। लबि अवस्रंसने च। कबृ वर्णे। चकबे १८। क्लीबृ धार्ष्ट्ये। चिक्लीबे १९। क्षीबृ मदे। क्षीबते २०। शीभृ कत्थने। शीभते २१। चीभृ च२२। रेभृ शब्दे। रिरेभे २३। अभिरभी क्वचित्पठ्येते। अम्भते २४। रम्भते २५। ष्टभि २६ स्कभि २७ प्रतिबन्धे। स्तम्भते। उत्तम्भते। उदःस्थास्त-म्भोरिति (६१ष्टु०) पूर्वसवर्णः। विष्टम्भते। स्तन्भेरिति (उ३६ष्टु०) षत्वन्तु न भवति स्तुविधौ निर्द्दिष्टस्य सौत्रस्यैव तत्र ग्रह-णात्। तद्वीजन्तु स्थास्तम्भोरिति (६१ष्टु०) पवर्गीयोपधपाठः स्तन्भेरिति तवर्गीयोपधपाठश्चेति माधवः। केचिदस्य टकार औपदेशिक इत्याहुः। तम्भते ष्टम्भते टष्टम्भे। जभि जृभि गात्रविनामे।

रधिजभोरचि। ७। १। ६१।

एतयोर्नुमागमः स्यादचि। जम्भते। जजम्भे। जम्भिता। अजम्भिष्ट २८। जृम्भते। जजृम्भे २९। गल्भ कत्थने। जगल्भे ३०। वल्भ भोजने। दन्त्योष्ठ्यादिः। ववल्भे ३१। गल्भ धार्ष्ट्ये। गल्भते ३२। श्र (स्र) म्भु प्रमादे। तालव्यादिर्दन्त्यादिश्च। श्रम्भते। स्रम्भते वा ३३। ष्टुभु स्तम्भे। स्तोभते। वि-ष्टोभते। तुष्टुभे। व्यष्टोभिष्ट ३४।

अथ परस्मैपदिनः। गुपू रक्षणे।

गुपूधूपविच्छिपणिपनिभ्य आयः। ३। १। २८।

एभ्यः आयप्रत्ययः स्यात् स्वार्थे। पुगन्तेति (७।३।८६) गुणः।

सनाद्यन्ता धातवः। ३। १। ३२।

सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषान्ते धातुसंज्ञाः स्युः। धातुत्वाल्लडादयः। गोपायति।

आयादय आर्द्धधातुके वा। ३। १। ३१।

आर्द्धधातुकविवक्षायामायादयो वा स्युः।

कास्प्रत्ययादाममन्त्रे लिटि। ३। १। ३५।

कासधातोः प्रत्ययान्तेभ्यश्चाम् स्याल्लिटि नतु मन्त्रे। कास्यनेकाज्ग्रहणं कर्त्तव्यम् *। सूत्रे प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमित्यर्थः।

अतो लोपः। ६। ४। ४८।

आर्द्धधातुकोपदेशकाले यदकारान्तन्तस्याकारस्य लोपः स्या-

दाईधातुके परे। गोपायाञ्चकार-गोपायाम्बभूव-गोपायामास-जुगोप। जुगुपतुः। ऊदित्त्वादिट् (७२८पृ०)। जुगोपिथ-जुगोप्थ। गोपायिता-गोपिता-गोप्ता। गोपाय्यात्-गोप्यात्। अगोपायीत्-अगोपीत्-अगौप्सीत् १। धूप सन्तापे। धूपायति। धूपायाञ्चकार-दुधूप। धूपायितासि-धूपितासि २। जप ३ जल्प ४ व्यक्तायां वाचि। जप मानसे च। चप ५ सान्त्वने। षप समवाये। समवायः सम्बन्धः सम्यगवबोधो वा। सपति ६। रप ७ लप ८ व्यक्तायां वाचि। चुप मन्दायाङ्गतौ। चोपति। चुचोप। चोपिता ९। तुप १० तुम्प ११ त्रुप १२ त्रुम्प १३ तुफ १४ तुम्फ १५ त्रुफ १६ त्रुम्फ १७ हिंसार्थाः। तोपति। तुतोप। तुम्पति। तुतुम्प। तुतुम्पतुः। संयोगात्परस्य लिटः (७२४पृ०) कित्त्वाभावान्नलोपो (७१७८पृ०) न। किदाशिषीति (७१८पृ०) कित्त्वान्नलोपः। तुप्यात्। प्रात् तुम्पतौ गवि कर्त्तरीति (४८७पृ०) पारस्करादिगणे * पाठात् सुट्। प्र-स्तुम्पति गौः। प्रतिपा निर्देशाद्यङ्लुकि न। प्र-तोतुम्पीति। त्रोपति। त्रुम्पति। तोफति। तुम्फति। त्रोफति। त्रुम्फति। इहाद्यौ द्वौ पञ्चमषष्ठौ च नीरेफाः। अन्ये सरेफाः। आद्याश्चत्वारः प्रथमान्ताः ततो द्वितीयान्ताः। अष्टावप्युकारवन्तः। पर्प रफ रफि अर्ब पर्ब लर्ब बर्ब मर्ब कर्ब खर्ब गर्ब शर्ब षर्ब चर्ब गतौ। आद्यः प्रथमान्तः ततो द्वौ द्वितीयान्तौ तत एकादश तृतीयान्ताः। द्वितीयतृतीयौ मुक्त्वा सर्व्वे रोपधाः। पर्पति। पपर्प १८। रफति १९। रम्फति २०। अर्बति। आनर्ब २१। पर्बति २२।

---

* पारस्करादिगणे प्रादित्यादि न गणसूत्रं प्रमादात् खनितम्।

लर्बति २३। बर्बति २४। पवर्गीयादिरयम्। मर्बति २५। कर्बति २६। खर्बति २७। गर्बति २८। ग्रर्बति २९। सर्बति ३०। चर्बति ३१। कुवि आच्छादने। कुम्बति ३२। लुबि तुबि अर्दने। लुम्बति ३३। तुम्बति ३४। चुबि वक्त्र-संयोगे। चुम्बति ३५। षृभु षृन्भु हिंसार्थौ। सर्भति। ससर्भ। सर्भिता ३६। सृम्भति। ससृम्भ। सृभ्यात् ३७। षिभु षिम्भु इत्येके। सेभति ३८। सिम्भति ३९। शुभ ४० शुम्भ ४१ भाषणे। भासने इत्येके हिंसायामित्यन्ये।

अथानुनासिकान्ताः। तत्र कम्यन्ता (७६०पृ०) अन-दात्तेतो दश। घिणि घुणि घृणि ग्रहणे। नुम्। णत्वम्। घिण्णते। जिघिण्णे १। घुण्णते। जुघुण्णे २। घृण्णते जघृण्णे ३। घुण घूर्ण भ्रमणे। घोणते४। घूर्णते५। इमौ तुदादौ(७१५२पृ०) परस्मैपदिनौ। पण व्यवहारे स्तुतौ च। पन च। स्तुतावित्येव सम्बध्यते पृथङ्निर्देशात्। पनिसाहचर्य्यात्पणेरपि(७५७पृ०सू०) स्तुतावेवायप्रत्ययः। व्यवहारे तु। पणते। पेणे। पणिते-त्यादि। स्तुतावनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्ता-न्नात्मनेपदम्। पणायति। पणायाञ्चकार। पेणे। पणायि-तासि। पणितासे। पणाय्यात्। पणिषीष्ट ६। पनायति। पनायाञ्चकार। पेने ७। भाम क्रोधे। भामते। बभामे ८। क्षमू ष सहने। क्षमते। चक्षमे। चक्षमिषे-चक्षंसे। चक्षमिध्वे। चक्षन्ध्वे। चक्षमिवहे।

म्वोश्च। ८। २। ६५।

मान्तस्य धातोर्म्स्य नकारादेशः स्यान्मकारे वकारे च परे । णत्वम् । चङ्क्रण्वहे । चङ्क्रमिमहे-चङ्क्रण्महे । चमिष्यते-चंस्यते । चमेत । आशिषि । चमिषीष्ट-चंसीष्ट । अच-मिष्ट-अचंस्त ६ । कमु १० कान्तौ । कान्तिरिच्छा ।

## कमेर्णिङ् । ३ । १ । ३० ।

स्वार्थे । ङित्त्वात्तङ् । कामयते ।

## अयामन्ताल्वाय्येत्न्विष्णुषु । ६ । ४ । ५५ ।

आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । वक्ष्यमाणलोपापवादः । कामयाञ्चक्रे । आयादय आर्द्ध-धातुके (७५७४०) वा । चकमे । कामयिता-कमिता । काम-यिष्यते-कमिष्यते ।

## णि श्रि द्रु स्रुभ्यः कर्त्तरि चङ् । ३ । १ । ४८ ।

ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्र्थे लुङि परे । काम्-इ अ तेति स्थिते ।

## णेरनिटि । ६ । ४ । ५१ ।

अनिडादावार्द्धधातुके परे णेर्ल्लोपः स्यात् । परत्वात् एरने-काचः (११८४०) इति यणि प्राप्ते । ण्यल्लोपावियङ्यण्गुणवृद्धि-दीर्घेभ्यः पूर्वविप्रतिषेधेनेति * वार्त्तिकम् । णिलोपस्य तु पाच-यते पाक्तिरित्यादि क्तिजन्तेष्ववकाश इति भावः । वस्तुतस्त्वनि-टीति वचनसामर्थ्यादार्द्धधातुकमात्रमस्य विषयः । तथाचेय-

ङादेरपवाद एवायम्। इयङ्। अततक्षत। यण्। आटिटत्। गुणः। कारणा। वृद्धिः। कारकः। दीर्घः कार्य्यते।

**णौ चङ्युपधाया ह्रस्वः। ७। ४। १।**

चङ्परे णौ यदङ्गन्तस्योपधाया ह्रस्वः स्यात्।

**चङि। ६। १। ११।**

चङि परे अनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य।

**सन्वल्लघुनि चङ्परेऽनग्लोपे। ७। ४। ९३।**

चङ्परे इति बहुव्रीहिः। स चाङ्गस्येति च द्वयमप्यावर्त्तते। अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत् तत्परं यल्लघु तत्परो योऽङ्गस्याऽभ्यासस्तस्य सनीव कार्य्यं स्यात् णावग्लोपेऽसति। अथवाऽङ्गस्येति नावर्त्तते। चङ्परे णौ यदङ्गन्तस्य योऽभ्यासो लघुपरस्तस्येत्यादि प्राग्वत्।

**सन्यतः। ७। ४। ७९।**

अभ्यासस्यात इकारः स्यात्सनि।

**दीर्घो लघोः। ७। ४। ९४।**

लघोरभ्यासस्य दीर्घः स्यात्सन्वद्भावविषये (११६)। अचीक-

---

(११६) लघुनि चङ्परेऽनग्लोपे इति सर्वमिहानुवर्त्तते तदाह सन्वद्भावेति। तेन हलादेरिति प्राचीनोक्तं निर्मूलत्वादुपेक्ष्यमित्यपि ध्वनयति मूहि

मत। णिङभावपक्षे। कमेश्च्लेश्चङ् वक्तव्यः *। णेरभावान्न दीर्घसन्वद्भावौ। अचकमत। संज्ञायाः(११७)कार्य्यकालत्वादङ्गं यत्र द्विरुच्यते तत्रैव दीर्घः सन्वच्च नानेकाच्चिति माधवः।

चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते।
किन्त्वस्यावयवः कश्चित्तस्मादेकाच्चिदं द्वयम्॥
वस्तुतो(११८) ऽङ्गस्याऽवयवो योऽभ्यास इति वर्णनात्।
ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे॥
चकास्तौ तूभयमिदं न स्यात्स्याच्च व्यवस्थया (११९)।
णौ र्विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा॥

---

सुनित्ययोर्क्ति विना हलादेरिति पूरयितुमुचितं न वा वृत्तिकारादिभिरप्युक्तम्। मनो०।

(११७) संज्ञाया इति सन्वल्लघुनीति (७।४।९३)दीर्घो लघोरिति (७।४।९४) सूत्रद्वयेऽङ्गस्येत्यनुवर्त्तते अभ्यासस्येति च(७।४।५८)तत्र चाभ्याससंज्ञा कार्य्यकाला तेनैकाचो द्वे तयोः पूर्व्वस्येति फलितम् द्वे इत्यत्र च उच्चारणे इति विशेष्यसमर्पकमध्याहर्त्तव्यं तच्च कृदन्तं तद्योगादङ्गस्येति कर्म्मणि षष्ठी तेनाङ्गं यत्र द्विरुच्यते तत्र पूर्व्वस्य दीर्घसन्वद्भावौ विधीयमानावेकाच्येव फलितौ। तदिदं माधवमतं श्लोकद्वयेनोपनिबद्धम् और्णुनवदित्यादौ दीर्घो लघो (७।४।९४) रित्यभ्यासस्य दीर्घो न भवति चङ्परे णौ यदङ्गं तस्य योऽभ्यास इति सूत्रार्थात् अत्र तदङ्गावयवस्याभ्यासो न त्वङ्गस्येति माधवोक्तम्।

(११८) अयाधिकारपक्षएवाभ्यर्हितत्वात् वृत्त्यादिषु स्वीकृतत्वाच्चेत्याह वस्तुत इति ऊर्णोः दीर्घः स्यादित्यनुषज्यते सन्वद्भावस्त्विह नोपयुज्यते णौ कृतस्य स्थानिवद्भावेन नुशब्दस्य द्वित्वे सत्यभ्यासे ऽवर्णाभावादिति भावः। मनो०।

(११९) व्यवस्थयेति चङ्परे णौ यल्लघु इति व्याख्याने येन नाव्यवधानन्या-

इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात्।

णेरग्लोपेऽपि (१२०) सम्बन्धस्त्वगितामपि सिद्धये॥

अथ क्रमन्ता (७६४४०) स्विंशत्परस्मैपदिनः। अण १ रण २ वण ३ भण ४ मण ५ कण ६ क्वण ७ व्रण ८ भ्रण ९ ध्वण १० शब्दार्थाः। अणति। रणति। वणति। वकारादित्वादेत्वाभ्यासलोपौ न। ववणतुः। ववणिथ। धणिरपि कैश्चित्पठ्यते। धणति। ओणृ अपनयने। ओणति। ओणाञ्चकार ११। शोणृ वर्णगत्योः। शोणति। शुशोण १२। श्रोणृ सङ्घाते। श्रोणति १३। श्लोणृ च १४। शोणादयस्त्रयोऽमी तालव्योष्मादयः। पैणृ गतिप्रेरणश्लेषणेषु। लैणृ इति क्वचित्पठ्यते। पिपैण १५। भ्रन शब्दे। उपदेशे नान्तोयं रषाभ्यामिति (१०६४०) णत्वम्। भ्रणति। नोपदेशफलं यङ्लुकि दंभ्रन्ति१६। रणोत्यपि केचित्। रेणतुः। रेणिथ। कनी दीप्तिकान्तिगतिषु। चकान १७। ष्टन १८ वन १९ शब्दे स्तनति। वनति। वन२० षण २१ सम्भक्तौ। वनेरर्थभेदात्पुनः पाठः। सनति ससान। सेनतुः।

## ये विभाषा। ६। ४। ४३।

जनसनखनामात्त्वं वा स्याद्यादौ क्ङिति। सायात्-सन्यात्।

---

येन एकवर्णव्यवधाने अपीपचदित्यादावेव भाव्यं नत्वनेकव्यवधाने इति। मनो०।

(१२०) चङ्परे इत्यावर्त्याग्लोपविशेषणतयापि योजितं तस्य फलमाह णेरिति अगितामिति पठिकमिशक्रिप्रभृतीनामित्यर्थः।

अम गत्यादिषु। कनी दीप्तिकान्तिप्रतीत्यत्र गतेः पदयोः शब्दसम्बन्धयोरादिशब्देन ग्रहः। अमति। आम २२। द्रम २३ हम्म २४ मोम्ह २५ गतौ। द्रमति। दद्राम ह्म्यन्तेति(७५२४०) न वृद्धिः। अद्रमीत्। हम्मति जहम्म। मीमति। मिमीम। अयं शब्दे च। चमु २६ छमु २७ जमु २८ झमु २९ अदने।

## ष्ठिवुक्लमुचमां शिति। ७। ३। ७५।

एषामचो दीर्घः स्याच्छिति। आङि चम इति वक्तव्यम् *। आचामति। आङि किम् चमति वि-चमति। अचमीत्। जिमिङ्गेचित्यटन्ति जेमति। क्रमु पादविक्षेपे।

## वा भ्राशभ्लाशभ्रमुक्रमुक्लमु त्रसिचुटिलषः।३।१।७०।

एभ्यः श्यन्वा स्यात्कर्त्रर्थे सार्वधातुके परे।

## क्रमः परस्मैपदेषु। ७। ३। ७६।

क्रमेर्दीर्घः स्यात्परस्मैपदे परे शिति। क्राम्यति-क्रामति। चक्राम। क्राम्यतु-क्रामतु।

## स्नुक्रमोरनात्मनेपदनिमित्ते। ७। २। ३६।

अत्रैवेट्। अक्रमीत् ३०। अथ रेवत्यन्ताः (७६७४०) अनुदात्तेतः। अय १ वय २ पय ३ मय ४ चय ५ तय ६ णय ७ गतौ। अयते

दयायासश्च। ३। १। ३७।

दय अय आस् एभ्य आम् स्याल्लिटि। अयाञ्चक्रे। अयिता। अयिषीष्ट।

विभाषेटः। ८। ३। ७९।

इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटान्धस्य वा मूर्द्धन्यादेशः स्यात्। अयिषीढ्वम्–अयिषीध्वम्। आयिष्ट। आयिढ्वम्---आयिध्वम्।

उपसर्गस्यायतौ। ८। २। १९।

अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात्। प्लायते। पलायते। निस्दुसो रुत्वस्यासिद्धत्वान्न लत्वम्। निरयते। दुरयते। निर्दुरोस्तु निलयते दुलयते। प्रत्यय इति त्विणो रूपम्। अथ कथमुदयति विततोर्द्ध्वरश्मिरज्जाविति माघः इट किट कटी इत्यत्र प्रश्लिष्टस्य एर्भविष्यति। यद्वा अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् चक्षिङोङित्करणात् ज्ञापकात्। वादित्वात्। ववये। पेये। मेये। चेये। तेये। प्र-णयते। नेये। दय दानगतिरक्षणहिंसादानेषु। आदाने ग्रहणम्। दयाञ्चक्रे ९। रय ६ गतौ। ऊयी तन्तुसन्ताने। ऊयाञ्चक्रे १०। पूयी विसरणे दुर्गन्धे च। पूयते। पूपूये ११। क्नूयी शब्दे उन्दे च। चुक्नूये १२। क्ष्मायी विधूनने। चक्ष्माये १३। स्फायी १४ ओ प्यायी १५ वृद्धौ। स्फायते। पस्फाये। प्यायते।

लिड्यङोश्च । ६ । १ । २९ ।

लिटि यङि च प्यायः पीभावः स्यात्। पुनः प्रसङ्गविज्ञानात्पीशब्दस्य द्वित्वम्। एरनेकाचइति (११८७०) यण्। पिप्ये। पिप्याते। पिप्यिरे।

दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् । ३ । १ । ६१ ।

एभ्यश्च्लेश्चिण्वा स्यात् एकवचने तशब्दे परे।

चिणो लुक् । ६ । ४ । १०४ ।

चिणः परस्य तशब्दस्य लुक् स्यात्। अप्यायि-अप्यायिष्ट। तायृ सन्तानपालनयोः। सन्तानः प्रबन्धः। तायते। तताये। अतायि-अतायिष्ट १६। शल १७ चलनसंवरणयोः। वल १८ वल्ल १९ संवरणे सञ्चरणे च। ववले ववल्ले। मल मल्ल धारणे। मेले २०। ममल्ले २१। भल भल्ल परिभाषणहिंसादानेषु। बभले २२। बभल्ले २३। कल शब्दसंख्यानयोः। कलते। चकले २४। कल्ल अव्यक्ते शब्दे। कल्लते २५। अशब्द इति स्वामी। अशब्दस्तूष्णींभाव इति च। तेवृ देवृ देवने। तितेवे २६। दिदेवे २७। षेवृ गेवृ ग्लेवृ पेवृ मेवृ म्लेवृ सेवने। परिनिविभ्य इति (७३८७०) षत्वम्। परिषेवते। सिषेवे २८। अयं सोपदेशोऽपीति न्यासकारादयः। तद्भाष्यविरुद्धम् (१२१)। गेवते। जिगेवे २९। जिग्लेवे ३०।

---

(१२१) यदि सोपदेशः स्यात्तदा स्यायतिरिवायमपि सोपदेशलक्षणे पर्युदस्येत तदकरणान्नायं सोपदेश इति भावः। तत्त्व०।

पिपेवे ३१। सेवते ३२। स्लेवते ३३। येट ३४ खेट ३५ क्लेट ३६ इत्यप्येके। रेट प्लवगतौ। प्लवगतिः प्लुतगतिः। रेवते ३७। अथावत्यन्ताः (उ०१०२०) परस्मैपदिनः। मव्य बन्धने। ममव्य १। सूर्क्ष्य २ ईर्क्ष्य ३ ईर्ष्य ४ ईर्ष्यार्थाः। हय गतौ। अहयीत् ५। यान्तत्वान्न (उ५३१०२०) वृद्धिः। शुच्य अभिषवे। अवयवानां शिथिलीकरणं सुरायाः सन्धानं वाऽभिषवः स्नानञ्च। शुशुच्य ६। चुच्य ७ इत्येके। हर्य्य गतिकान्त्योः। जहर्य्य ८। अल भूषणपर्य्याप्तिवारणेषु। अलति। आल।

## अतो ल्रान्तस्य। ७। २। २।

ल्रेति लुप्तषष्ठीकम् (१२२) अतः समीपौ यौ ल्रौ तदन्तस्यातो (१२३) वृद्धिः स्यात्परस्मैपदे परे सिचि। नेटीति (उ३६२०) निषेधस्यातो हलादेरिति (उ४०२०) विकल्पस्य चापवादः। मा भवानालीत् ६। अयं स्वरितेदित्येके। तन्मते अलते इत्याद्यपि। ञि फला विसरणे। तृफलेति (उ५६२०) एत्वम्। फेलतुः। फेलुः। अफालीत् १०। मील

(१२२) यद्यप्यवयवरचनेनान्तशब्देन बहुव्रीहिरङ्गं चान्यपदार्थः तर्ह्यन्तग्रहणमनर्थकं विशेषणेन तदन्तविधेः सिद्धत्वात् अथ समीपवाचिनान्तशब्देन षष्ठीसमासे रेफलकारसमीपभूतस्यातो वृद्धिरित्यर्थो लभ्येत तर्हि स्वृप्रभृतिषु स्यात् अथ ल्रं च तदन्तश्चेति कर्मधारयस्तर्हि पूर्वनिपातः स्यादित्यत आह लुप्तेति. अत इति तस्यावृत्तम्। मनो०।

(१२३) तदन्तस्याङ्गस्येत्यर्थः ल्रान्तस्याङ्गस्येत्युक्ते अचक्षीदित्यादौ स्यात् तत्राप्यलकारस्याकारसमीपभूतत्वेऽपि तदन्तस्यानङ्गत्वात् वितीय-

११ प्रमील १२ स्मील १३ क्ष्मील १४ निमेषणे। निमेषणं सङ्कोचः। द्वितीयस्तालव्यादिः। तृतीयो दन्त्यादिः। पील १५ प्रतिष्टम्भे। प्रतिष्टम्भो रोधनम्। नील वर्णे। निनील १६। शील समाधौ। शीलति १७। कील १८ बन्धने। कूल १९ आवरणे। शूल २० रुजायां सङ्घोषे च। तूल निष्कर्षे। निष्कर्षो निष्कोषणम्। तच्च अन्तर्गतस्य वहिर्निःसारणम्। तुतूल २१। पूल २२ सङ्घाते। मूल २३ प्रतिष्ठायाम्। फल निष्पत्तौ। फेलतुः। फेलुः २४। चुल्ल २५ भावकरणे। भावकरणमभिप्रायाविष्कारः। फुल्ल२६विकसने। चिल्ल२७ शैथिल्ये भावकरणे च। तिल गतौ। तेलति २८। तिल्लेत्येके। तिल्लति २९। वेल्ल ३० चेल्ल ३१ केल्ल ३२ खेल्ल ३३ क्ष्वेल्ल ३४ वेल्ल ३५ चलने पञ्च ऋदितः षष्ठो लोपधः। पेल्ल ३६ फेल्ल ३७ शेल्ल ३८ गतौ। षेल्ल ३९ इत्येके। स्खल सञ्चलने। चस्खाल। अस्खालीत् ४०। खल ४१ सञ्चये। गल अदने। गलति। अगालीत् ५२। षल गतौ। सलति ४३। दल ४४ विसरणे। श्वल श्वल्ल आशुगमने। शश्वाल। अश्वालीत् ४५। शश्वल्ल। अश्वल्लीत् ४६। खोल्ट खोर्ऋ गतिप्रतिघाते। खोलति ४७। खोरति ४८। धोर्ऋ गतिचातुर्य्ये। धोरति ४९। त्सर छद्मगतौ। तत्सार। अत्सारीत् ५०। क्मर हूर्छने। चक्मार ५१। अभ्र ५२ वभ्र ५३ मभ्र ५४ चर ५५ गत्यर्थाः। चरतिर्भक्षणेऽपि। अभ्रति। आनभ्र। मा भवानभ्रीत्। अङ्गान्तरेफस्यातः समीपत्वाभावान्न वृद्धिः। ष्ठिवु निरसने।

---

स्याद्वृत्तेऽप्यकारसमीपवर्त्तित्वाभावान्नेति बोध्यम्।

ष्ठिवुक्लम्विति (७६४सू०) दीर्घः। ष्ठीवति। अस्य द्वितीयस्थकार ठकारो वेति वृत्तिः। तिष्ठेव। तिष्ठिवतुः। तिष्ठिवुः टिष्ठेव। टिष्ठिवतुः। टिष्ठिवुः। हलि चेति (१५७सू०) दीर्घः। ष्ठीव्यात् ५६। जि जये। अयमजन्तेषु पठितु युक्तः। जय उत्कर्षप्राप्तिः। अकर्म्मकोऽयम्। जयति।

## सन्लिटोर्ज्जेः। ७। ३। ५७।

जयतेः सन्लिण्निमित्तो योऽभ्यासस्ततःपरस्य कुत्वं स्यात्। जिगाय। जिग्यतुः। जिग्युः। जिगयिथ—जिगेथ। जिग्यिव। जिग्यिम। जेता। जीयात्। अजै-षीत् ५७। जीव प्राणधारणे। जिजीव ५८। पीव मीव तीव णीव स्थौल्ये। पिपीव ५९। मिमीव ६०। तितीव ६१। निनीव ६२। क्षीवु ६३ क्षेवु ६४ निरसने। उर्व्वी ६५ तुर्व्वी ६६ थुर्व्वी ६७ दुर्व्वी ६८ धुर्व्वी ६९ हिंसार्थाः। ऊर्व्वाञ्चकार। उपधायां चेति(७२४सू०)दीर्घः। तुतूर्व्व। गुर्व्वी उद्यमने। गूर्वति। जुगूर्व ७०। मुर्व्वी ७१ बन्धने। पूर्व ७२ पर्व ७३ मर्व ७४ पूरणे। चर्व अदने ७५। भर्व ७६ हिंसायाम्। कर्व ७७ खर्व ७८ गर्व ७९ दर्पे। अर्व शर्व षर्व हिंसायाम्। आनर्व ८०। शर्वति ८१। सर्वति ८२। इवि व्याप्तौ॥ इन्वति। इन्वाञ्चकार ८३। पिवि ८४ मिवि८५ णिवि ८६ सेचने। तृतीयो मूर्द्धन्योष्मादिरित्येके। सेवन इति तरङ्गिण्याम्। पिन्वति। पिपिन्व। हिवि ८७ दिवि ८८ धिवि ८९ जिवि ९०प्रीणनार्थाः। हिन्वति। दिन्वा

**धिन्विकृण्व्योर च। ३।१।८०।**

अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च शब्विषये। अतो लोपः(३५७४०)तस्य स्थानिवद्भावाल्लघूपधगुणो न। उप्रत्ययस्य पित्त्वे गुणः। धिनोति। धिनुतः। धिन्वन्ति।

**लोपश्चास्यान्यतरस्यां म्वोः। ६।४।१०७।**

असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यात् मवयोः परयोः। धिन्वः—धिनुवः। धिन्मः—धिनुमः। मिपि तु परत्वाद्गुणः। धिनोमि।

**उतश्च प्रत्ययादसंयोगपूर्वात्। ६।४।१०६।**

असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात्परस्य हेर्लुक् स्यात्। धिनु। नित्यत्वादुकारलोपात्पूर्वमाट्। धिनवाव। धिनवाम। जिन्वति। इत्यादि। रिवि रवि धवि गत्यर्थाः। रिण्वति ९१। रण्वति ९२। धन्वति ९३। कृवि हिंसाकरणयोश्च। चकाराद्गतौ। कृणोति ९४। इत्यादि धिनोतिवत्। अयं स्वादौ च। मव बन्धने। मवति। मेवतुः मेवुः। अमवीत्-अमावीत् ९५। अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु (१२४)। अवति। आव। मा

(१२४) एकोनविंशतिरर्थाः कान्तिः शोभा तृप्तिरिच्छानाशः स्वाम्यर्थः स्वामित्वं दीप्तिस्तेजः। हिंसा हननमादानं ग्रहणं न तु दानं 'भागे वृद्धौ ग्रहे वधे,, इति वोपदेवैकवाक्यत्वात्।

भवानवीत् ८६। धावु गतिशुद्ध्योः। स्वरितेत्। धावति। धावते। दधाव। दधावे (१)। अथोष्मान्ता आत्मनेपदिनः। धक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु। धुक्षते। दुधुक्षे १। धिक्षते। दिधिक्षे २। वृक्ष वरणे। वृक्षते। ववृक्षे ३। शिक्ष विद्योपादाने। शिक्षते ४। भिक्ष भिक्षायामलाभे लाभे च। भिक्षते ५। क्लेश अव्यक्तायां वाचि। बाधने इति दुर्गः। क्लेशते। चिक्लेशे ६। दक्ष वृद्धौ शीघ्रार्थे च। दक्षते। ददक्षे ७। दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु। दीक्षते। दिदीक्षे ८। ईक्ष दर्शने। ईक्षाञ्चक्रे ९। ईष गतिहिंसादर्शनेषु। ईषाञ्चक्रे १०। भाष व्यक्तायां वाचि। भाषते ११। वर्ष स्नेहने। दन्त्योष्ठ्यादिः। ववर्षे १२। गेषृ १३। अन्विच्छायाम्। ग्लेषृ १४ इत्येके। अन्विच्छा अन्वेषणम्। जिगेषे। पेषृ प्रयत्ने। पेषते १५। जेषृ १६ णेषृ १७ एषृ १८ प्रेषृ १९ गतौ। जेषते। नेषते। एषाञ्चक्रे। पिप्रेषे। रेषृ २० हेषृ २१ ह्रेषृ २२ अव्यक्ते शब्दे। आद्यो [वृकशब्दे ततो द्वौ अश्वशब्दे। रेषते। हेषते। ह्रेषते। कासृ शब्द-कुत्सायाम्। कासाञ्चक्रे २३। भासृ दीप्तौ। बभासे २४। णासृ रासृ शब्दे। नासते २५। प्र-णासते २६। णस कौटिल्ये। नसते २७। भ्यस भये। भ्यसते। बभ्यसे २८। आङः शसि इच्छायाम्। आ-शंसते। आ-शशंसे २९। ग्रसु ३० ग्लसु ३१ अदने। जग्रसे। जग्लसे। ईह चेष्टायाम्। ईहाञ्चक्रे ३२। वहि ३३ महि ३४ वृद्धौ। वंहते। ववंहे। मंहते। अहि गतौ। अंहते। आनंहे। ३५। गर्ह गल्ह

कुत्सायाम्। जगर्हे ३६। जगर्ल्हे ३७। बर्ह ३८ बल्ह ३९ प्राधान्ये। औष्ठ्यादी। वर्ह ४० वल्ह ४१ परिभाषणहिंसाच्छादनेषु। दन्तोष्ठ्यादी। केचित्तु पूर्व्वयोर्दन्तोष्ठ्यादितामनयोरौष्ठ्यादितां चाहुः। प्लिह गतौ। पिप्लिहे ४२। वेह ४३ जेह ४४ बाह्ह ४५ प्रयत्ने। आद्यो दन्तोष्ठ्यादिः। अन्त्यः केवलोष्ठ्यादिः। उभावप्योष्ठ्यादी इत्येके। दन्तोष्ठ्यादी इत्यपरे। जेहतिर्गत्यर्थोऽपि। बबाहे। द्राह्ह ४६ निद्राक्षये। निक्षेपे इत्येके। काशृ दीप्तौ। चकाशे ४७। ऊह वितर्के। ऊहाञ्चक्रे ४८। गाह्ह विलोड़ने। गाहते। जगाहे। जगाहिषे-जघाक्षे। जगाहिढ्वे जगाहिध्वे-जघाढ्वे। गाहिता।

ढो ढे लोपः। ८। ३। १३।

ढस्य लोपः स्याड्ढे परे। गाढा। गाहिष्यते-घाक्ष्यते। गाहिषीष्ट-घाक्षीष्ट। अगाहिष्ट-अगाढ। अघाक्षाताम्। अघाक्षत। अगाढाः। अघाढ्वम्। अघाक्षि ४९। गृहू ग्रहणे। गर्हते। जगृहे। ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन। जगृहिषे-जघृक्षे। जघृढ्वे। गर्हिता-गर्ढा। गर्हिष्यते-घर्क्ष्यते। गर्हिषीष्ट-घृक्षीष्ट। लुङि। अगर्हिष्ट। इडभावे।

शल इगुपधादनिटः क्सः। ३। १। ४५।

इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात्। अघृक्षत्

## क्सस्याचि। ७।३।७२।

अजादौ तङि क्सस्य लोपः स्यात्। अलोऽन्त्यस्य (२१पृ०)। अघुक्षाताम्। अघुक्षत ५०। ग्लह च। ग्लहते ५१। घुषि कान्तिकरणे। घुंषते। जघुंषे। केचिद्घुषेत्यदुपधं पठन्ति ५२। अथार्हत्यन्ताः(७७७पृ०)परस्मैपदिनः। घुषिर् विशब्दने विशब्दनम्प्रतिज्ञानम्। ततोऽन्यस्मिन्नर्थे इत्येके। शब्दे इत्यन्ये पेठुः। घोषति। जुघोष। घोषिता। इरित्त्वादङ्वा (७२६पृ०)। अघुषत्--अघोषीत् १। अक्षू व्याप्तौ।

## अक्षोऽन्यतरस्याम्। ३।१।७५।

अक्षो वा श्नुप्रत्ययः स्यात्कर्त्रर्थे सार्वधातुके परे। पक्षे शप्। अक्ष्णोति अक्ष्णुतः। अक्ष्णुवन्ति। अक्षति। अक्षतः। अक्षन्ति। आनक्ष। आनक्षिथ—आनष्ठ। अक्षिता—अष्टा। अक्षिष्यति। स्कोरिति (१६६पृ०) कलोपः। षढोः कः सि (१२१पृ०)। अक्ष्यति। अक्ष्णोतु। अक्ष्णुहि। अक्ष्णवानि। आक्ष्णोत्। आक्ष्णवम्। अक्ष्णुयात्। अक्ष्यात्। ऊदित्त्वा-द्वेट्। नेटि (७२६पृ०)। मा भवानक्षीत्। अक्षिष्टाम्। अक्षिषुः। इडभावे तु मा भवानाक्षीत्। आष्टाम्। आक्षुः २। तक्षू २ त्वक्षू ४ तनूकरणे

## तनूकरणे तक्षः। ३।१।७६।

श्नुः स्याद्वा शब्विषये। तक्ष्णोति-तक्षति काष्ठम्। ततक्षिथ-ततष्ठ। अतक्षीत्—अताक्षीत्। अतक्षिष्टाम्-अताष्टाम्। तनूकरणे किम् वाग्भिः सन्तक्षति भर्त्सयतीत्यर्थः।

उक्ष सेचने। उक्षाञ्चकार ५। रक्ष ६ पालने। णिक्ष चुम्बने। प्र णिक्षति ७। तृक्ष स्तृक्ष णक्ष गतौ। तृक्षति ८। स्तृक्षति। नक्षति १०। वक्ष ११ रोषे। सङ्घाते इत्येके। मृक्ष १२ सङ्घाते। म्रक्ष १३ इत्येके। तक्ष १४ त्वचने। त्वचनम् संवरणम् त्वचो ग्रहणञ्च। पक्ष परिग्रहे इत्येके। सूर्क्ष आदरे। सुसूर्क्ष १५। अनादर इति तु क्वाचित्कोऽपपाठः। अवज्ञावहेलनमसूर्क्षणमित्यमरः। काक्षि १६ वाक्षि १७ माक्षि १८ काङ्क्षायाम्। द्राक्षि १९ ध्राक्षि २० ध्वाक्षि २१ घोरवाशिते च। चूष पाने। चुचूष २२। तूष २३ तुष्टौ। पूष २४ वृद्धौ। मूष २५ स्तेये। लूष २६ रूष २७ भूषायाम्। शूष २८ प्रसवे। तालव्योष्मादिः। यूष २९ हिंसायाम्। जूष च ३०। भूष अलङ्कारे। भूषति ३१। ऊष रुजायाम्। ऊषाञ्चकार ३२। ईष ३३ उञ्छे। कष ३४ खष ३५ शिष ३६ जष ३७ झष ३८ शष ३९ वष ४० मष ४१ रुष ४२ रिष ४३ हिंसार्थाः। तृतीयषष्ठौ तालव्योष्मादी सप्तमो दन्त्योष्मादिः। चकाष। चखाष। शिशेष। शिशेषिथ। शेष्टा। क्षः। अशिक्षत्। अशेक्ष्यत्। जेषतु। जझषतुः। शेषतुः। ववषतुः। मेषतुः।

## तीषसहलुभरुषरिषः। ७। २। ४८।

इच्छत्यादेः परस्य तादेरार्द्धधातुकस्येड्वा स्यात्। रोषिता-रोष्टा। रोषिष्यते। रेषिता-रेष्टा। रेषिष्यति। भष भर्त्सने। इह भर्त्सनं श्वरवः। भषति। बभाष ४४। उष दाहे। ओषति

उषविदजागृभ्योऽन्यतरस्याम् । ३ । १ । ३८ ।

एभ्यो लिट्याम् वा स्यात्। ओषाञ्चकार। उवोष। ऊषतुः। उवोषिथ ४५। जिषु ४६ विषु ४७ मिषु ४८ सेचने। जिजेष। क्रादिनियमादिट्। विवेषिथ। विवेषिव। वेष्टा। वेक्ष्यति। अविक्षत्। पुष पुष्टौ। पोषति। पोषिता। पोषिष्यति। अपोषीत् ४९। अनिट्केषु पुष्येति श्यना निर्देशादयं सेट्। अतो न क्सः। अङ्विधौ दैवादिकस्य ग्रहणान्नाङ्। श्रिषु श्लिषु प्रुषु प्लुषु दाहे। श्रेषति। शिश्रेष। श्रेषिता ५०। श्लेषति। शिश्लेष। श्लेषिता ५१। अयमपि सेट्। अनिट्सु दैवादिकस्यैव ग्रहणमिति कैयटादयः। यत्त्वनिट्कारिकायां न्यासे द्वयोर्ग्रहणमित्युक्तम् तद्भाष्योक्तिविरोधाद्ग्रन्थान्तरविरोधाच्चोपेक्ष्यम्। पुप्रोष ५२। पुप्लोष ५३। पृषु ५४ वृषु ५५ मृषु ५६ सेचने। मृषु सहने च। इतरौ हिंसासंक्लेशनयोश्च॥ पर्षति। पपर्ष। पृष्यात्। घृषु ५७ संघर्षे। हृषु ५८ अलीके। तुस ५९ ह्रस ६० ह्लास ६१ रस ६२ शब्दे। तुतोस। जह्रास। जह्लास। ररास। लस ६३ श्लेषणक्रीडनयोः। घस्लृ अदने। अयं (१२५) न सार्व्वत्रिकः लिट्यन्यतरस्यामित्यदेर्घस्लादेशविधानात्। ततश्च यत्र लिङ्गं वचनं वास्ति तत्रैवास्य प्रयोगः। अत्रैव (१२६) पाठः शपि

(१२५) यद्ययं सार्व्वत्रिकः स्यात्तदा लिट्यपि प्रयुज्येत ततश्च लिटोऽन्यतरस्यामिति (३।०८पृ०) विकल्पेनादेशविधानं व्यर्थं स्यादिति भावः।

(१२६) अत्रैवेति भ्वादौ परस्मैपदे पाठः तत्प्रयोगे लिङ्गमेवमुत्तरत्र।

परस्मैपदे लिङ्गम्। लृदित्करणमङि। अनिट्कारिकासु पाठो वलाद्यार्द्धधातुके। क्मरचि (१२७) तु विशिष्योपादानम्। घसति। घस्ता।

**सः स्यार्द्धधातुके। ७। ४। ४९।**

सस्य तः स्यात्सादावार्द्धधातुके। घत्स्यति। घसतु। अघसत्। घसेत्। लिङ्गाद्यभावादाशिष्यस्याप्रयोगः।

**पुषादिद्युताद्य्लृदितः परस्मैपदेषु। ३। १। ५५।**

श्यन्विकरणपुषादे(१२८) र्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात्परस्मैपदेषु। अघसत् ६४। जर्ज ६५ चर्च ६६ कर्च ६७ परिभाषणहिंसातर्जनेषु। पिसृ पेसृ गतौ। पिपिसतुः ६८। पिपेसतुः ६९। हसे हसने। एदित्त्वान्न वृद्धिः। अहसीत् ७०। णिश समाधौ। तालव्योष्मान्तः। प्र-णेशति ७१। मिश ७२ मश ७३ शब्दे रोषकृते च। तालव्योष्मान्तौ। शव गतौ। दन्त्योष्ठ्यान्तः। तालव्योष्मादिः। शवति। अशावीत्-अशवीत् ७४। शश प्लुतगतौ। तालव्योष्माद्यन्तः। शशाश। शेशतुः। शेशुः। शेशिथ ७५। शसु हिंसायाञ्च। दन्त्योष्मान्तः। न शसददेत्येत्त्वन्न(उ०२२५०)। शशसतुः। शशसुः। शशसिथ ७६। शन्सु स्तुतौ। अयन्दुर्गतावपीति दुर्गः। नृशंसो घातुकः क्रूर इत्यमरः। शशंस। आशिषि नलोपः। शस्यात्

(१२७) सुघसदः क्मरजिति (उ०२७४पृ०) सूत्रे अदोनिर्देशेऽपि पुनर्विशिष्य घसेर्ग्रहणं तत्प्रयोगे लिङ्गमित्यर्थः।

(१२८) पुषादिर्दिवादौ (उ०१२८पृष्ठादौ। द्युतादिस्तु भ्वाद्यन्तर्गणः (उ०७८) पृष्ठादौ च वक्ष्यमाणः।

७७। चह परिकल्कने। कल्कनं शाठ्यम्। अचहीत् ७८। मह पूजायाम्। अमहीत् ७९। रह ८० त्यागे। रहि गतौ। रंहति। रंह्यात् ८१। दृह ८२ दृहि ८३ बृह ८४ बृहि ८५ वृद्धौ। दर्हति। ददर्ह। ददृहतुः। दृंहति। वर्हति। बृंहति। बृहि शब्दे च। बृंहितङ्करिगर्ज्जितम्। बृहिर् इत्यके। अबृहत्—अवर्हीत् ८६। तुहिर्। ८७ दुहिर् ८८ उहिर् ८९ अर्दने। तोहति। तुतोह। अतुहत्—अतोहीत्। दोहति। अदुहत्—अदोहीत्। अनिट्-कारिकास्वस्य दुहेर्ग्रहणं नेच्छन्ति। ओहति। उवोह। ऊहतुः। ओहिता। मा भवानुहत्--औहीत् ८९। अर्ह पूजायाम्। आनर्ह ९०। अथ कृपूपर्य्यन्ता अनुदात्तेतः। द्युत दीप्तौ। द्योतते।

## द्युतिस्वाप्योः सम्प्रसारणम्। ७। ४। ६७।

अनयोरभ्यासस्य सम्प्रसारणं स्यात्। दिद्युते। दिद्युताते। द्योतिता।

## द्युद्भ्यो लुङि। १। ३। ९१।

द्युतादिभ्यो लुङः परस्मैपदं वा स्यात्। पुषादीतिसूत्रेण(७७६९०) परस्मैपदेऽङ्। अद्युतत्। अद्योतिष्ट १। श्विता वर्णे। श्वेतते। शिश्विते। अश्वितत्। अश्वेतिष्ट २। ञि मिदा स्नेहने। मेदते।

## मिदेर्गुणः। ७। ३। ८२।

मिदेरिको गुणः स्यादित्संज्ञकशकारादौ। एश (१२६) आदिशित्त्वाभावान्नानेन गुणः। मिमिदे। अमिदत्। अमेदिष्ट ३। ञि ष्विदा स्नेहमोचनयोः। मोहनयोरित्येके। स्वेदते। सिष्विदे। अस्विदत्। अस्वेदिष्ट ४। ञि क्ष्विदा चेत्येके। अक्ष्विदत्। अक्ष्वेदिष्ट ५। रुच दीप्तावभिप्रीतौ च। रोचते सूर्य्यः। हरये रोचते भक्तिः। अरुचत्। अरोचिष्ट ६। घुट परिवर्त्तने। घोटते। जुघुटे। अघुटत्। अघोटिष्ट ७। रुट ८ लुट ६ लुठ १० प्रतिघाते। अरुटत्। अरोटिष्ट। शुभ ११ दीप्तौ। क्षुभ १२ सञ्चलने। णभ १३ तुभ १४ हिंसायाम्। आद्योऽभावेऽपि। नभन्तामन्यके समे। मा भूवन्नन्यके सर्व्वे इति निरुक्तम्। अनभत्। अनभिष्ट। अतुभत्। अतोभिष्ट। इमौ दिवादौ क्र्यादौ च। स्रन्सु १५ ध्वन्सु १६ भ्रन्सु १७ अवस्रंसने। ध्वन्सु गतौ च। अङि नलोपः। अस्रसत्। "नास्रसत्करिणां ग्रैवमिति" रघुकाव्ये। अस्रंसिष्ट। भ्रन्शु १८ रित्यपि केचित्पेठुः। अत तृतीय एव तालव्यान्त इत्यन्ये। भ्रशु १६ भ्रन्शु अधःपतन इति दिवादौ। स्रन्भु विश्वासे। अस्रभत्। अस्रम्भिष्ट २०। दन्त्यादिरयम्। तालव्यादिस्तु प्रमादे गतः। वृतु वर्त्तने। वर्त्तते। ववृते।

(१२६) छिवुक्रमचमामित्यतः (७६४पृ०) शितीत्यनुवर्त्तते तत्र शश्चासौ इञ्चेति कर्म्मधारयात्सप्तमी न तु बहुव्रीहिरतो मिमिदे इत्यादावेशि न प्रसङ्ग इत्याह एश इति।

वृद्भ्यः स्यसनोः। १। ३। ९२।

वृतादिभ्यः परस्मैपदं वा स्यात्स्ये सनि च।

न वृद्भ्यश्चतुर्भ्यः (१३०)। ७। २। ५९।

एभ्यः सकारादेरार्द्धधातुकस्येण् न स्यात्तङानयोरभावे। वर्त्स्यति। वर्त्तिष्यते। अवृतत्। अवर्त्तिष्ट। अवर्त्स्यत्। अवर्त्तिष्यत २१। वृधु २२ वृद्धौ। शृधु २३ शब्दकुत्सायाम्। द्युतौ इतिवत्। स्यन्दू स्रवणे। स्यन्दते। सस्यन्दिषे सस्यन्त्से। सस्यन्दिध्वे-सस्यन्ध्वे। स्यन्दिता-स्यन्त्ता। वृद्भ्यः स्यसनोरिति परस्मैपदे कृते ऊदित्त्वलक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यात् न वृद्भ्यः इति निषेधः। स्यन्त्स्यति। स्यन्दिष्यते-स्यन्त्स्यते। स्यन्दिषीष्ट-स्यन्त्सीष्ट। द्युद्भ्यो लुङीति(७७सू०)परस्मैपदपक्षे अङ्। नलोपः। अस्यदत्। अस्यन्दिष्ट-अस्यन्त्त। अस्यन्त्साताम्। अस्यन्त्स्यत्। अस्यन्दिष्यत-अस्यन्त्स्यत।

अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु। ८। ३। ७२।

एभ्यः परस्याप्राणिकर्त्तृकस्य स्यन्दतेः सस्य षो वा स्यात्। अनु-ष्यन्दते—अनु-स्यन्दते वा जलम्। अप्राणिषु किम्।

(१३०) चतुर्भ्य इति चतुर्ग्रहणं तासि च क्लृप इति (७८०सू०) विशेषग्रहणात् क्लृपेर्निरासार्थम् अत्र गमेरित्यतः (७१०२सू०) परस्मैपदेष्वित्यनुवर्त्तते तत्र तस्मिन् तङानयोरभावे लक्षितमितीहापि तथैवानुक्तम्। मनो०।

अनु-स्यन्दते हस्ती। अप्राणिष्विति पर्य्युदासान्मत्स्योदके अनु-
ष्यन्देते इत्यत्रापि पक्षे षत्वं भवत्येव। प्राणिषु नेत्युक्तौ तु न
स्यात् (१३१) २४। कृपू सामर्थ्ये।

**कृपो रो लः। ८। २। १८।**

कृपः उः इति छेदः। कृपेति लुप्तषष्ठीकम् तच्चावर्त्तते कृपो
यो रेफस्तस्य लः स्यात् (१३२)। कृपेर्ऋकारस्यावयवो यो
रः रेफसदृशस्तस्य च लकारसदृशः स्यात्। कल्पते।
चक्लृपे। चक्लृपिषे-चक्लृप्से। इत्यादि स्यन्दिवत्।

**लुटि च कृपः। १। ३। ९३।**

लुटि स्यसनोश्च कृपेः परस्मैपदं वा स्यात्।

**तासि च कृपः। ७। २। ६०।**

कृपेः परस्य तासेः सकारादेरार्द्धधातुकस्य चेण् न स्यात्
तङानयोरभावे। कल्प्तासि। कल्प्तास्थः। कल्पितासे-
कल्प्तासे। कल्प्स्यति। कल्पिष्यते-कल्प्स्यते। कल्पिषीष्ट-
क्लृप्सीष्ट। अक्लृपत्। अकल्पिष्ट-अक्लृप्त। अकल्प्स्यत्।
अकल्पिष्यत--अकल्प्स्यत। इत् (१३३) इत्तः सम्पूर्णो द्युतादि-

---

(१३१) सूत्रे प्रसज्यप्रतिषेधाश्रयणेऽसमर्थसमासापत्तिर्वाक्यभेदापत्तिश्चेति। पर्य्युदासाश्रयणमिति।

(१३२) रशब्देन केवलरकारस्य लृकारावयवरकारस्य चोभयोर्ग्रहणादादेशेऽपि लकारे तथात्वैविध्यं तेन कल्पत इत्यत्र लकारादेशः क्लृप्त इत्यादौ लृकारादेश इति बोध्यम्।

(१३३) गणपाठे इदिति क्विबन्तपदं व्याख्यातुमाह इत्त इति तदर्थमाह सम्पूर्ण इति

इतादिश्चेत्यर्थः २५। अथ त्वरत्यन्तास्त्रयोदशानुदात्तेतः षितश्च। घट चेष्टायाम्। घटते। जघटे १। घटादयो मित इति (७८५पृ०) वक्ष्यमाणेन मित्संज्ञा। तत्फलं तु णौ मितां ह्रस्वः(७१७४पृ०) इति चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति(७२७१पृ०) च वक्ष्यते। घटयति। विघटयति (१३४)। कथं तर्हि-"कमलवनोद्घाटनं कुर्व्वते ये"। "प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिवे' त्यादि श्रृणु घट सङ्घातइति(७१७७पृ०) चौ रादिकस्येदम्। न च तस्यैवार्थविशेषे मित्त्वार्थमनुवादोऽयमिति वाच्यम् नान्ये मितोऽहेताविति (७१७४पृ०) निषेधात्। अहेतौ स्वार्थणिचि ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेत्यर्थः। व्यथ भयसञ्चलनयोः। व्यथते।

## व्यथो लिटि। ७। ४। ६८।

व्यथोऽभ्यासस्य सम्प्रसारणं स्याल्लिटि। हलादि (७१०पृ०) शेषाप (१३५) वादः। यस्य हलादिशेषेणानिवृत्तिः। विव्यथे २। प्रथ प्रख्याने। पप्रथे ३। प्रस विस्तारे। पप्रसे ४। म्रद ५ मर्द्दने। स्खद ६ स्खदने। स्खदनं विद्रावणम्। चजि गति-दानयोः। मित्त्वसामर्थ्यादनुपधात्वेऽपि चिण्णमुलोरिति(७२७१पृ०) पृ०) दीर्घविकल्पः। अचज्जि-अचाज्जि। चञ्जंचञ्जम्-चाञ्जंचा-

---

(१३४) अन्यत्र पठितानामपीह पाठोऽर्थविशेषनियमाय इह पठितानामप्युपसर्गादिनार्थान्तरपरत्वेऽपि मित्त्वमस्त्येवेति द्योतयन्नुदाहरति विघटयतीति।

(१३५) अभ्यासान्तर्गतस्य यकारस्य निवृत्तेरपवाद इत्यर्थः एतदेवाह यस्येति

ज्ञम् ७। दृच ८। गतिहिंसनयोः। योऽयं दृह्विशैव्रयोरनुदात्तेत्सु (७७१पृ०)पठितस्तस्येहार्थविशेषे मित्त्वार्थोऽनुवादः क्रप ६ कृपायाङ्गतौ च। कदि १० क्रदि ११ क्लादि १२ वैक्लव्ये। वैकल्य इत्येके। तयोऽप्यनिदित इति नन्दो। इदितइति स्वामी। कदिक्रदी इदितौ। क्रद क्लदेति चानिदिताविति मैत्रेयः। कदिक्रदिक्लदीनामाह्वानरोदनयोः(७४२पृ०)परस्मैपदिषूक्तानामप्यनरिह पाठो मित्त्वार्थ आत्मनेपदार्थश्च। ञि त्वरा १३ सम्भ्रमे। घटादयः षितः(ग०)। षित्त्वादङ् क्तस्(७४५२पृ०)वक्ष्यते।

अथ फणान्ताः(७८७पृ०)परस्मैपदिनः। ज्वर रोगे। ज्वरति जज्वार १। गड़ सेचने। गडति। जगाड़ २। हेड वेष्टने। हेडृ अनादरइत्यात्मनेपदिषु(७५२पृ०)गतः सएवोत्सृष्टानुबन्धोऽनूद्यते अर्थविशेषे मित्त्वार्थम्। परस्मैपदिभ्यो ज्वरादिभ्यः प्रागेवानुवादे कर्त्तव्ये तन्मध्येऽनुवादसामर्थ्यात्परस्मैपदम्। हेडति। जिहेड। हिडयति। अहिडि-अहीडि। अनादरे तु हेड़यति ३। वट ४ भट ५ परिभाषणे। वट वेष्टने भट भृताविति(७५१पृ०)पठितयोः परिभाषणे मित्त्वार्थोऽनुवादः। णट ६ नतौ। इत्यसेव पूर्व्वमपि(७५३पृ०)पठितः। तत्रायं विवेकः। पूर्व्वपठितस्य नाट्यमर्थो यत्कारिषु नटव्यपदेशो वाक्यार्थाभिनयो नाट्यम्। घटादौ तु नृत्तं नृत्यं चार्थो यत्कारिषु नर्त्तकव्यपदेशः पदार्थाभिनयो नृत्यम् गात्रविक्षेपमात्रं नृत्तम्। केचित्तु घटादौ णट नताविति पठन्ति। गतावित्यन्ये। णोपदेशपर्य्युदासवाक्ये भाष्यकृता नाटीति दीर्घपाठात् घटादिर्णोपदेश एव। ष्टक प्रतिघाते। स्तकति ७।

चक ८ तृप्तौ । तृप्तिप्रतीघातयोः पूर्व्वं (उ४३पृ०) पठितस्य तृप्ति-
माले मित्त्वार्थोऽनुवादः । आत्मनेपदिषु पठितस्य परस्मैपदि-
ष्वनुवादात्परस्मैपदम् । कखे हसने । एदित्त्वान्न (उ५३पृ०) वृद्धिः ।
अकखीत् ९ रगे १० शङ्कायाम् । लगे ११ सङ्गे । ह्रग १२
ह्लगे १३ षगे १४ ष्टगे १५ संवरणे । कगे १६ नोच्यते अस्या-
यमर्थ इति विशिष्य नोच्यते क्रियासामान्यार्थत्वात् अनेकार्थ-
त्वादित्यन्ये । अक १७ अग १८ कुटिलायाङ्गतौ । कण रण
गतौ । चकाण १९ । रराण २० । चण २१ शण २२ श्रण २३
दाने च । शण गतावित्यन्ये । श्रथ २४ क्नथ २५ क्रथ २६ क्लथ
२७ हिंसार्थाः । जासिनिप्रहणेति (२९८पृ०) सूत्रे क्राथेति
मित्त्वेऽपि वृद्धिर्निपात्यते । क्राथयति । मित्त्वन्तु निपातना-
त्परत्वात् चिण्णमुलोरिति (उ२७१पृ०) दीर्घं चरितार्थम् । अक्र-
थि-अक्राथि । क्रथङ्क्रथम् क्राथङ्क्राथम् । वन २८ च । हिंसा-
यामिति शेषः । वनु च नोच्यते । वनु इत्यपूर्व्व एवायन्धातुर्न्न तु
तानादिकस्य (उ१६पृ०) नुवादः उदित्करणसामर्थ्यात् तेन क्रिया-
सामान्ये वनतीत्यादि । प्र-वनयति २९ । अनुपसृष्टस्य तु मि-
त्त्वविकल्पो (उ८६पृ०) वक्ष्यते । ज्वल दीप्तौ । णप्रत्ययार्थ (उ२२०पृ०)
म्पठिष्यमाण एवायम् मित्त्वार्थमनूद्यते । प्र-ज्वलयति ३० । ह्वल
ह्मल चलने । प्र-ह्वलयति ३१ । प्र-ह्मलयति ३२ । स्मृ ३३
आध्याने । चिन्तायाम्पठिष्यमाणस्य (उ९७पृ०) आध्याने मित्त्वार्थो-
ऽनुवादः । आध्यानमुत्कण्ठापूर्व्वकं स्मरणम् । दॄ भये । दॄ
विदारणे इति (उ१६६पृ०) क्र्यादेरयं मित्त्वार्थोऽनुवादः । हेतान्तं
प्रेरयति दरयति । भयादन्यत्र । दारयति ३४ । धात्वन्तरमे-

वेदमिति मते तु हरतीत्यादि । केचित्तु टादौ अत्स्मृदृत्वरेति सूत्रे(उ१७१पृ०)च द इति दीर्घस्थाने ह्रस्वम्पठन्ति तन्नेतिमाधवः । नृ नये । क्र्यादिषु (उ१६६पृ०)पठिष्यमाणस्यानुवादः । नयादन्यत्र । नारयति ३५ । श्रा पाके । श्रै(उ८६पृ०)इति कृतात्वस्य श्रा इत्यादादिकस्य (उ१२०पृ०)च सामान्येनानुकरणम् लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषाभ्याम् । श्रपयति विक्लेदयतीत्यर्थः । पाकादन्यत्र । श्रापयति स्वेदयतीत्यर्थः ३६ । मारणतोषणनिशामनेषु ज्ञा ३७ । निशामनञ्चाक्षुषज्ञानमिति माधवः । ज्ञानमात्रमित्यन्ये । निशानेष्विति पाठान्तरम् निशानन्तीक्ष्णीकरणम् । एष्वेवार्थेषु जानातिर्मित् । ज्ञप मिच्चेति (उ१७२पृ०) चुरादौ । ज्ञापनं मारणादिकञ्च तस्यार्थः । कथं "विज्ञापना भर्त्तृषु सिद्धिमेतीति" "तज्ज्ञापयत्याचार्य्य"इति च शृणु माधवमतेऽचाक्षुषज्ञाने मित्त्वाभावात् । ज्ञानमात्रे मित्त्वमिति मते तु ज्ञा नियोग इति(उ१७४०)चौरादिकस्य धातूनामनेकार्थत्वात् । निशानेष्विति पठतां हरदत्तादीनाम्मते तु न काप्यनुपपत्तिः । कम्पने चलिः(ग०)३८ । चल कम्पने इति ज्वलादिः । (उ८८पृ०)चलयति शाखाम् । कम्पनादन्यत्र तु । शीलञ्चालयति अन्यथाकरोतीत्यर्थः । हरतीत्यर्थ इति स्वामी । सूत्रञ्चालयति क्षिपतीत्यर्थः । छदि ३९ ऊर्ज्जने (ग०) । छद अपवारणे (उ१८७पृ०)इति चौरादिकस्य स्वार्थे णिजभावे मित्त्वार्थोयमनुवादः अनेकार्थत्वादूर्ज्जनेऽर्थे ✱ वृत्तिः । छदन्तं प्रयुङ्क्ते छदयति बलवन्तं प्राणवन्तं वा करोतीत्यर्थः । अन्यत्र छादयति । अप-

✱ ऊर्ज्जबल प्राणनयोः (उ१७१पृ०) इत्यक्तार्थे ।

वारयन्तं प्रयुङ्क्ते इत्यर्थः। स्वार्थणिचि तु। छादयति बलीभवति प्राणीभवति अपवारयति वेत्यर्थः। जिह्वोन्मथने लडिः (ग०)४० । लड विलास इति(७५५पृ०)पठितस्य मित्त्वार्थो-ऽनुवादः। उन्मथनं क्षेपनम्। जिह्वाशब्देन षष्ठीतत्पुरुषः। लडयति जिह्वाम्। तृतीयातत्पुरुषो वा। लडयति जिह्वया। अन्ये तु जिह्वाशब्देन तद्व्यापारो लक्ष्यते। समाहारद्वन्द्वो-ऽयम्। लडयति शत्रुम्। लडयति दधि। अन्यत्र लाडयति पुत्रम्। मदी ४१ हर्षग्लेपनयोः। ग्लेपनन्दैन्यम्। दैवा-दिकस्य(७१४२पृ०)मित्त्वार्थोऽयमनुवादः। मदयति हर्षयति ग्लेप यतिवेत्यर्थः। अन्यत्र मादयति चित्तविकारमुत्पादयतीत्यर्थः। ध्वन ४२ शब्दे। भाष्ययं * मित्त्वार्थमनूद्यते। ध्वनयति घ-ण्टाम्। अन्यत्र ध्वानयति अस्पष्टाक्षरमुच्चारयतीत्यर्थः। अत्र भोजः दलिवलिस्खलिरणिध्वनित्रपिक्षपयश्चेति(ग०)पपाठ। तत्र ध्वनिरणी उदाहृतौ। दल विशरणे(७६५पृ०)वल संवरणे(७१६६पृ०) स्खल सञ्चलने(७६८पृ०)त्रपूष लज्जायामिति (७६६पृ०)गताः। तेषां णौ। दलयति। वलयति। स्खलयति। त्रपयति। क्षै क्षये इति (७८५पृ०)वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः। क्षपयति। स्वन ४३ अवतंसने। शब्दे इति (७८७पृ०) पठिष्यमाणस्यानुवादः। स्वनयति। अन्यत्र स्वानयति। घटादयो मितः (ग०)। मित्स-ञ्ज्ञा इत्यर्थः। जनी ४४ जॄष् ४५ क्नसु ४६ रञ्जो ४७ ऽमन्ताश्च ४८ (ग०)। मित इत्यनुवर्त्तते। जॄषिति षित्त्वनिर्द्देशाज्जीर्य्यतेर्ग्रहणम्। जॄणातेस्तु जारयति। केचित्तु जनी जॄ ष्णसु इति पठित्वा ष्णसु निरसने(७१३३पृ०)इति दैवा-

* भावी फणादिगणे (७८७पृ०) पठिष्यमाणः।

दिकमुदाहरन्ति। ज्वल ४९ ह्वल ५० ह्मल ५१ नमा ५२ मनुपसर्गाद्वा (ग०)। एषां मित्त्वं वा। प्राप्तविभाषेयम्। ज्वलयति-ज्वालयति। उपसृष्टे तु नित्यं मित्त्वम्। प्र-ज्वलयति। कथं तर्हि प्र-ज्वालयति उन्नामयतीति। घञन्तात्तत्करोतीति णौ। कथं संक्रामयतीति। मितां ह्रस्वः(७।१७४सू०)इतिसूत्रे "वा चित्तविरागे" इत्यतो (७।१६६सू०) वेत्यनुवर्त्त्य व्यवस्थितविभाषाश्रयणादिति वृत्तिकृत्। एतेन "रजो विश्रामयन् राज्ञाम्" "धुर्य्यान्विश्रामयेति स इत्यादि व्याख्यातम्। ग्ला ५३ स्ना ५४ वनु ५५ वमाश्च (ग०) ५६। अनुपसर्गादेषां मित्त्वं वा स्यात्। आद्ययोरप्राप्ते इतरयोः प्राप्ते विभाषा। न कम्यमिचमाम् (ग०)। अमन्तत्वात्(७८५सू०)प्राप्तं मित्त्वमेषान्न स्यात्। कामयते। आमयति। चामयति। शमो दर्शने (ग०)। शाम्यतिर्दर्शने मिन्न स्यात्। निशामयति रूपम्। अन्यत्र तु "प्रणयिनो निशमय्य वधूः कथाः"। कथं तर्हि "निशामय तदुत्पत्तिं विस्तराद्गदतो ममेति"। शम आलोचनइति(७।७६सू०) चौरादिकस्य धातूनामनेकार्थत्वाच्छ्रावणे वृत्तिः शाम्यतिवत्। यमोऽपरिवेषणे(ग०)। यच्छतिर्भोजनतोऽन्यत्र मिन्न स्यात्। आयामयति। द्राघयति व्यापारयति वेत्यर्थः। परिवेषणे तु। यमयति ब्राह्मणान् भोजयतीत्यर्थः। पर्य्यवसितं नियमयन्नित्यादि तु नियमवच्छब्दात्तत्करोतीति णौ बोध्यम्। स्खदिरवपरिभ्याञ्च (ग०)। मिन्नेत्येव। अव-स्खादयति। परि—स्खादयति। अपावपरिभ्य इति न्यासकारः। स्वामी तु न कम्यमीति नञमुत्तरत्रिसूत्रामनुवर्त्य शमः अदर्शने इति चिच्छेद। यमस्त्वपरिवेषणे

मित्त्वमाह। तन्मते पर्य्यवसितं नियमयन्नित्यादि सम्यगेव। उपसृष्टस्य स्वदेश्चेदवादिपूर्व्वस्येति नियमात् प्र-स्वादयतीत्याह। तस्मात् सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः फलितः। इदञ्च मतं वृत्तिन्यासादिविरोधादुपेक्ष्यम्। फण ५७ गतौ। नेति निवृत्तमसम्भवात् निषेधात्पूर्व्वमसौ न पठितः फणादिकार्य्यानुरोधात्।

## फणाञ्च सप्तानाम्। ६। ४। १२५।

एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। फेणतुः। फेणुः। फेणिथ। पफणतुः। पफणुः। फणयति इत् घटादिः समाप्तः। फणेः प्रागेव वृदित्येके। तन्मते फाणयतीत्येव १। राजृ२दीप्तौ। स्वरितेत्। राजति। राजते। रेजतुः—रराजतुः। रेजे। रराजे। अत इत्यनुवृत्तावपि *विधानसामर्थ्यादातएत्वम्। टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ। अनुदात्तेतः। भ्राजतेरिह पाठः फणादिकार्य्यार्थः पूर्व्वपाठस्तु वश्चादिषत्वाभावार्थः। (उ।१२०पृ०) तत्र हि राजिसाहचर्य्यात् फणादेरेव ग्रहणम् भ्रेजे-बभ्राजे ३। वा भ्राशेति(उ६४पृ०) श्यन्वा। भ्राश्यते भ्राशते। भ्रेशे बभ्राशे ४। भ्लाश्यते भ्लेशे बभ्लाशे ५। द्वावपीमौ तालव्यान्तौ। स्यमु१ स्वन २ ध्वन ३ शब्दे। स्यमादयः चरत्यन्ताः परस्मैपदिनः। स्येमतु-सस्यमतुः। अस्यमीत्। स्वेनतुः- सस्वनतुः। सस्वनुः। अस्वानीत्-अस्वनीत। अवष्वणति सशब्दं भुङ्क्ते इत्यर्थः। वेस्व

* अतएकहलित्यादि सूत्रात् (उ२२पृ०) इतिशेषः।

स्खन इति (७१८८पृ०) षत्वम् फणादयो गताः । दध्वनतुः । षम ष्टम अवैकल्ये । ससाम ४ । तस्ताम ५ । ज्वल दीप्तौ । अज्वालीत् ६ । चल कम्पने ७ । जल घातने । घातनन्तै-क्ष्ण्यम् ८ । टल ९ ट्वल १० वैक्लव्ये । स्थल ११ स्थाने । हल १२ विलेखने । णल १३ गन्धे । बन्धन इत्येके । पल गतौ । पलति १४ । बल प्राणने धान्यावरोधने च । बलति बेलतुः । बेलुः १५ । पुल महत्त्वे । पोलति १६ । कुल संस्त्याने बन्धुषु च । संस्त्यानं सङ्घातः । बन्धुशब्देन तद्व्यापारो लक्ष्यते । कोलति चुकोल १७ । शल हुल पत्लृ गतौ शशाल १८ । जुहोल १९ । पपात । पेततुः । पतिता ।

पतः पुम् । ७ । ४ । १९ ।

अङि परे । अपप्तत् । नेर्गदेति (७४२पृ०) णत्वम् । प्रण्यपप्तत् २० । क्वथे निष्पाके । क्वथति । चक्वाथ । अक्वथीत् २१ । पथे गतौ । अपथीत् २२ । मथे विलोडने । मेथतुः । अमथीत् २३ । टु वम उद्गिरणे । इहैव निपातनाद्वत (१२६) इत्वमिति सुधाकरः । ववाम । ववमतुः २४ । वादित्वादेत्वाभ्यासलोपौ न । भागवृत्तौ तु वेमतुरित्याद्युदाहृतम् । तद्भाष्यादौ न दृष्टम् । भ्रमु चलने । वा भ्राशेति (७६४पृ०) श्यन्वा । भ्रम्यति-भ्रमति । भ्राम्यतीति तु (७१४१पृ०) दिवादेर्बोध्यते ।

वा जॄभ्रमुत्रसाम् । ६ । ४ । १२४ ।

(१२६) उद्गिरतेर्ल्युटि गुणप्रसक्तेऽपि अत्र कृतेत्त्वनिर्देशात् निपातनादुद्गिरणमिति सिद्धम् ।

एषामेत्वाभ्यासलोपौ वा स्तः क्किति लिटि सेटि थलि च। भ्रेमतुः-बभ्रमतुः। अभ्रमीत् २५। चर संचलने। अचारीत् २६। अथ द्वावनुदात्तेतौ। षह मर्षणे। परिनिविभ्य इति-(७३८४६) षत्वम्। परि-षहते। सेहे। सहिता। तीषसहेति वा (७७४६०) इट्। इड्भावे ढत्वधत्वष्टुत्वढलोपाः।

सहिवहोरोदवर्णस्य। ६। ३। ११२।

अनयोरवर्णस्य ओत्स्यात् ढलोपे सति।

सोढः। ८। ३। ११५।

सोढ़रूपस्य सहेः सस्य षत्वम् न स्यात्। परि सोढ़ा।

सिवादीनां वाड्व्यवायेऽपि। ८। ३। ७१।

परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि। पर्य्यसहत् १। रमु क्रीड़ायाम्। रेमे। रेमिषे। रन्ता। रंस्यते। रंसीष्ट। अरंस्त २। अथ कसन्ताः (७६०६०) परस्मैपदिनः। षद्लृ विशरणगत्यवसादनेषु।

पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदाम्पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः। ७। ३। ७८।

पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे। सीदति। ससाद। सेदतुः। सेदिथ-ससत्थ। सत्ता।

सत्स्यति। लृदित्त्वादङ् (७०६पृ०सू०)। असदत्। सदिरप्रतेः (७३७पृ०)। नि-षीदति। न्यषीदत्।

सदेः परस्य लिटि।८।३।११८।

सदेरभ्यासात्परस्य षत्वं न स्यात् लिटि। नि-षसाद। नि-षेदतुः १। शद्लृ शातने। विशीर्णतायामयम्। शातनन्तु विषयतया निर्द्दिश्यते।

शदेः शितः।१।३।६०।

शिद्भाविनोऽस्मादात्मनेपदं स्यात्। शीयते। शशाद। शेदतुः। शेदिथ-शशत्थ। शत्ता। अशदत् २। क्रुश आह्वाने रोदने च। क्रोशति। क्रोष्टा। शलः क्सः (७१२पृ०सू०)। अक्रुक्षत् ३। कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। कोचति। चुकोच ४। बुध अवगमने। बोधति। बोधिता। बोधिष्यति ५। रुह बीजजन्मनि प्रादुर्भावे च। रोहति। रुरोह। रुरोहिथ। रोढा। रोक्ष्यति। अरुक्षत् ६। कस गतौ। अकासीत्-अकसीत् ७। इत् ज्वलादिगणः समाप्तः। अथ गूहत्यन्ताः (७६२पृ०)स्वरितेतः। हिक्क अव्यक्ते शब्दे। हिक्कति हिक्कते १। अन्चु गतौ याचने च। अञ्चति। अञ्चते २। अचु इत्येके ३। अचि ४ इत्यपरे। टु याचृ याच्ञायाम्। याचति-याचते ५। रेटृ परिभाषणे। रेटति। रेटते ६। चते चदे याचने। चचात। चेते। अचतीत् ७। चचाद। चेदे। अचदीत् ८। प्रोथृ पर्य्याप्तौ। पुप्रोथ। पुप्रोथे ९। मिदृ १० मेदृ ११ मेधा-हिंसनयोः। मिमेद। मिमेदे। थान्ताविमाविति स्वामी।

मिमेथ धान्ताविति न्यासः। मेधृ सङ्गमे च। मेधति। मिमेधे १२। णिदृ १३ णेदृ १४ कुत्सासन्निकर्षयोः। निनेद। निनिदतुः। निनिदे। शृधु मृधु उन्दने। उन्दनं क्लेदनम्। शर्द्धति। शर्द्धते। शर्द्धिता १५। मर्द्धति। मर्द्धते १६। बुधिर् बोधने। बोधति। बोधते। इरित्वादङ् (उ१६पृ०) वा। अबुधत्-अबोधीत्। अबोधिष्ट १७। दीपजनेति चिण् (उ६६पृ०) तु न भवति पूर्व्वोत्तरसाहचर्य्येण दैवादिकस्यैव तत्र ग्रहणात्। उ बुन्दिर् निशामने। बुबुन्दे। अबुदत्-अबुन्दीत् १८। वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु (१३७)। वेणति। वेणते। नान्तोऽप्ययम् १९। खनु अवदारणे। खनति। खनते।

**गमहनजनखनघसां लोपः क्ङित्यनङि। ६।४।९८।**

एषामुपधाया लोपः स्यादजादौ (१३८) क्ङिति न त्वङि। चख्नतुः।

**ये विभाषा (१३९)। ६।४।४३।**

खायात्-खन्यात् २०। चीवृ आदानसंवरणयोः। चिचीव।

(१३७) वादित्रस्य वाद्यभाण्डस्य वादनार्थमादानं वादित्रग्रहणम्।

(१३८) अचि श्नुधातुभ्रु वा(११८पृ०)मित्यतोऽचीति ऊदुपधायाः (उ६२पृ०) इत्यतउपधाया इति चानुवर्त्तते।

(१३९) जनसनखनामात्त्वं वा स्यात् किति ङिति च यादौ परे।

थिवीवे २१। चायृ पूजानिशामनयोः २२। व्यय गतौ। अव्ययीत् २३। दाश्ट दाने। ददाश। ददाशे २४। भेषृ भये। गतावित्येके। भेषति। भेषते २५। भ्रेषृ भ्लेषृ गतौ २६। अस गतिदीप्त्यादानेषु। असति। असते। आस। आसे। अयं षान्तोऽपि २७। स्पश बाधनस्पर्शनयोः। स्पर्शनं ग्रथनम्। स्पशति। स्पशते २८। लष कान्तौ। वा भ्राशेति (७६४९०) श्यन्वा। लष्यति-लषति। लेषे २९। चष भक्षणे ३०। छष हिंसायाम्। चच्छषतुः। चच्छषे ३१। झष ३२ आदानसंवरणयोः। भ्लक्ष ३३ भक्ष ३४ अदने। भ्लक्ष ३५ इति मैत्रेयः। दाशृ ३६ दाने। माहृ ३७ माने। गुहू ३८ संवरणे।

**ऊदुपधाया गोहः। ६। ४। ८९।**

गुह उपधाया ऊत्स्याद्गुणहेतावजादौ (१४०) प्रत्यये। गूहति। गूहते। ऊदित्त्वादिड्वा। गूहिता-गोढा। गूहिष्यति- घोक्ष्यति। गूहेत्। गुह्यात्। अगूहीत्। इडभावे क्सः। अघुक्षत्।

**लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये। ७। ३। ७३।**

एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि। ढत्वधत्वष्टुत्वढलोपदीर्घाः। अगूढ-अघुक्षत। क्सस्याचीति (७३२९०) त्यन्तलोपः। अघुक्षाताम्। अघुक्षन्त। अगुह्वहि-अघुक्षावहि। अगुह्महि-अघुक्षामहि। अथाजन्ता उभयपदिनः। श्रिञ् सेवायाम्। श्रयति। श्रयते।

(१४०) अचि श्नुधातुभ्रुवां य्वोरियङुवङौ (१९८९०) इत्यतोऽचीत्यनुवर्त्याऽजादाविति।

शिश्रियतुः। श्रयिता। णिश्रीति (उ६०पृ०) चङ्। अशिश्रि-यत्१। भृञ् भरणे। भरति। बभार। बभ्रतुः। बभर्थ। बभृव। बभृषे। भर्त्ता।

ऋद्धनोः स्ये। ७। २। ७०।

ऋतो हन्तेश्च स्यस्य इट् स्यात्। भरिष्यति।

रिङ् शयग्लिङ्क्षु। ७। ४। २८।

शे यकि यादावार्द्धधातुके लिङि च ऋतो रिङादेशः (१४१) स्यात्। रीङ्प्रकृतेरिङ्विधिसामर्थ्याद्दीर्घो न। भ्रियात्।

उश्च। १। २। १२।

ऋवर्णात्परौ झलादी लिङ् तङ्परः सिच्चेत्यतौ कितौ (१४२) स्तः। भृषीष्ट। भृषीयास्ताम्। अभार्षीत्। अभार्ष्टाम्। अभार्षुः

ह्रस्वादङ्गात्। ८। २। २७।

सिचो लोपः स्यात् झलि। अभृत। अभृषाताम्। अभ-रिष्यत् २। हृञ् हरणे। हरणम्प्रापणं स्वीकारः स्तेयं ना-शनं च। जहर्थ। जह्रिव। जह्रिषे। हर्त्ता। हरिष्यति ३।

(१४१) रीङृतः (५२२पृ०)इत्यतः। ऋतइति अकृत्सार्व्वधातुकयोः(७५१पृ०) इत्यतः सार्व्वधातुकभिन्नम् आर्द्धधातुकञ्चानुवर्त्तते।

(१४२) असंयोगाल्लिट् किदित्यतः (७२४पृ०) किदिति, इको झलित्यतो (७१६६पृ०) झलिति लिङ्सिचावात्मनेपदेष्वित्यतो (७५५पृ०) लिङ्-सिचाविति चानुवर्त्त्य व्याख्यातम्।

धृञ् धारणे । धरति । अधार्षीत् । अधृत ४ । णीञ् प्रापणे । निनयिथ । निन्यिषे ५ । अथाजन्ताः परस्मैपदिनः । धेट् पाने । धयति ।

**आदेच उपदेशेऽशिति । ६ । १ । ४५ ।**

उपदेशे एजन्तस्य धातोरात्वं स्यान्न तु शिति ।

**आत औ णलः । ७ । १ । ३४ ।**

आदन्ताद्धातोर्णल औकारादेशः स्यात् । दधौ ।

**आतो लोप इटि च । । ६ । ४ । ६४ ।**

अजाद्योरार्द्धधातुकयोः क्ङिदिटोः (१४३)परयोरातो लोपः स्यात् । द्वित्वात्परत्वाल्लोपे प्राप्ते द्विर्वचनेऽचीति (२४पृ०) निषेधः । द्वित्वे कृते आलोपः । दधतुः । दधुः । दधिथ—दधाथ । दधिव । दधिम । धाता ।

**दाधा घ्वदाप् । १ । १ । २० ।**

दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दापदैपौ विना ।

**एर्लिङि । ६ । ४ ६७ ।**

घुसंज्ञानां मास्थादीनां च एत्वं स्यादार्द्धधातुके किति लिङि (१४४) धेयात् । धेयास्ताम् । धेयासुः ।

(१४३) चकारात् दीङो युड़चि क्ङितीत्यतोऽ (उ१२४पृ०) चीति क्ङितीतिचानुकृष्यते ।

(१४४) दीङो युड़चि क्ङितीत्यतः कितीति घुमास्थागापाजहातिसामिति(उ११८पृ०) चानुवर्त्तते ।

विभाषा धेट्श्व्योः। ३। १। ४९।

आभ्यां च्लेश्चङ् स्यात्कर्त्तृवाचिनि लुङि परे। चङि(७।६।१५०) द्वित्वम्। अदधत्। अदधताम्।

विभाषा घ्राधेट्शाच्छासः। २। ४। ७८।

एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे। अधात्। अधाताम्। अधुः।

यमरमनमातां सक् च। ७। २। ७३।

एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु। अधासीत्। अधासिष्टाम्। अधासिषुः १। ग्लै म्लै हर्षक्षये। हर्षक्षयो धातुक्षयः। ग्लायति। जग्लौ। जग्लिथ-जग्लाथ।

वान्यस्य संयोगादेः। ६। ४। ६८।

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्द्धधातुके किति लिङि। ग्लायात्—ग्लेयात्। अग्लासीत्। ग्लायति २। द्यै न्यक्करणे। न्यक्करणन्तिरस्कारः ४। द्रै ५ स्वप्ने। ध्रै ६ तृप्तौ। ध्यै ७ चिन्तायाम्। रै ८ शब्दे। स्त्यै ९ ष्ट्यै १० शब्दसङ्घातयोः। स्त्यायति। षोपदेशस्यापि सत्वे कृते रूपं तुल्यम्। षोपदेशफलन्तु। तिष्ट्यासति अतिष्ट्यपदित्यत्र षत्वम् खै ११ खदने। क्षै जै षै क्षये। क्षायति १२। जजौ १३। ससौ। साता १४। घुमास्थेत्यत्र(७।१।६५०) विभाषा घ्राधेड्-शाच्छ इति च स्यतेरेव ग्रहणं न त्वस्य तेन एत्वसिज्लुकौ न। सायात्

असासीत्। कै १५ गै १६ शब्दे। गेयात्। अगासीत्। शै १७ श्रै १८ पाके। पै १६ ओ वै २० शोषणे। पायात्। अपात्। अपासीत्। घुमास्थेतीत्व (७११६पृ०) न्तदपवादएर्लिङीत्येत्वम् (७६४पृ०) गातिस्थेतिसिज्लुक् (७१६पृ०) च न पारूपस्य लाचणिकत्वात्। ष्टै वेष्टने। स्तायति २१। ष्णै वेष्टने। शोभायाञ्चेत्येके। स्नायति २२। दैप् शोधने। दायति। अघुत्वादेत्वसिज्लुकौ न। दायात्। अदासीत् २३। पा पाने। पाघ्राध्मेति (७८६पृ०) पिबादेशः। तस्यादन्तत्वान्नोपधागुणः। पिबति। पेयात्। अपात् २४। घ्रा गन्धोपादाने। जिघ्रति। घ्रायात्-घ्रेयात्। अघ्रासीत्। अघ्रात् २५। ध्मा शब्दाग्निसंयोगयोः। धमति २६। ष्ठा गतिनिवृत्तौ। तिष्ठति। स्थादिष्वभ्यासेनेति (७३६पृ०) षत्वम्। अधि-तष्ठौ। उपसर्गादिति (७३७पृ०) षत्वम्। अधि ष्ठाता। स्थेयात् २७। म्ना अभ्यासे। मनति २८। दाण् दाने। प्र-णि-यच्छति। देयात्। अदात् २६। ह्वृ कौटिल्ये। ह्वरति।

## ऋतश्च संयोगादेर्गुणः। ७। ४। १०।

ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि। किदर्थमपीदम्परत्वात्सत्यपि भवति। रपरत्वम्। उपधावृद्धिः। जह्वार। जह्वरतुः। जह्वरुः। जह्वर्थ। ह्वर्ता। ऋद्धनोः स्ये। (७६२पृ०) ह्वरिष्यति।

## गुणोऽर्त्तिसंयोगाद्योः। ७। ४। २६।

अर्त्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्द्धधातुके लिङि च। ह्वर्यात्। अह्वार्षीत्। अह्वार्षम् ३०। स्मृ

शब्दोपतापयोः। स्वरतिसूतीति (७२६४०) वेट्। सस्वरिथ-सस्वर्थ। वमयोस्तु

## श्र्युकः क्किति (१४५)। ७। २। ११।

श्रिञ् एकाजुगन्ताच्च परयोर्गित्कितोरिण् न स्यात्। परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। सस्वरिव। सस्वरिम। परत्वादृद्धनोरिति (७८२४०) नित्यमिट्। स्वरिष्यति। स्वर्यात्। अस्वारीत्। अस्वारिष्टाम्। अस्वार्षीत्। अस्वार्ष्टाम् ३१। स्मृ चिन्तायाम् ३२। हृ ३३ संवरणे। सृ गतौ। क्रादित्वान्नेट्। ससर्थ। सस्रव। रिङ्(७८३ ४०सू०)। स्त्रियात्। असार्षीत्। असार्ष्टाम्।

## सर्त्तिशास्त्यर्त्तिभ्यश्च। ३। १। ५६।

एभ्यश्च्लेरङ् स्यात्कर्त्तरि लुङि। इह लुग्नभपा शासिना साहचर्यात्सर्त्तरत्तीं जौहोत्यादिकावेव गृह्येते तेन भ्वाद्योर्नाङ्। शीघ्रगतौ तु पाघ्राध्मेति शिति (७८६४०) धौरादेशः। धावति ३४। ऋ गतिप्रापणयोः। ऋच्छति।

## ऋच्छत्यॄताम्। ७। ४। ११।

तौदादिकऋच्छेॠधातोॠताञ्च गुणः स्याल्लिटि। णलि प्राग्वदुपधावृद्धिः। आर। आरतुः। आरुः।

## इडत्त्यर्त्तिव्ययतीनाम्। ७। २। ६६।

(१४५) क्कितीति ककारद्वयनिर्देशात् गित्यप्यनेऽपि भूष्णुरित्यादौ नेट्।

अदङ्क्व्येभ्य एभ्यस्थलो नित्यमिट् स्यात्। आरिथ। अर्त्ता। अरिष्यति॥ अर्य्यात्। आर्षीत्। आर्ष्टाम् ३५। ग्ट ३६ घृ ३७ सेचने। गरति। जगर्थ। जग्रिव। रिङ्। ग्रियात्। अगार्षीत्। घृ ३८ क्षर्ण्णने। स्रु गतौ। सुस्रोथ। सुस्रुव। स्रूयात्। णिश्रीति (७६०४०) चङ्। लघूपधगुणादन्तरङ्गत्वादुवङ्। असुस्रुवत् ३९। षु प्रसवैश्वर्य्ययोः। प्रसवोऽभ्यनुज्ञानम्। सुषोथ—सुषुविथ। सुषुविव। सोता।

## स्तुसुधूञ्भ्यः परस्मैपदेषु। ७। २। ७२।

एभ्यः सिच इट् स्यात्परस्मैपदेषु। असावीत्। पूर्वोत्तराभ्यां ञिद्भ्यां साहचर्य्यात्सुनोतेरेव ग्रहणमिति पञ्चे। असौषीत् ४०। श्रु श्रवणे।

## श्रुवः शृ च। ३। १। ७४।

श्रुवः शृइत्यादेशः स्यात् श्नुप्रत्ययश्च। शपोऽपवादः। श्नोर्ङित्त्वाद्धातोर्गुणो न। शृणोति। शृणुतः।

## हुश्नुवोः सार्व्वधातुके। ६। ४। ८७।

जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चासंयोगपूर्व्वस्य यण् स्यादजादौ सार्व्वधातुके। उवङोऽपवादः। शृण्वन्ति। शृणोमि। शृण्वः-शृणुवः। शृण्मः-शृणुमः। शुश्रोथ। शुश्रुव। शृणु। शृणवानि। शृणुयात्। श्रूयात्। अश्रौषीत् ४१। ध्रु स्थैर्य्ये। ध्रवति ४२। अयं कुटादौ गत्यर्थोऽपि। दु द्रु गतौ। दुदोथ-दुदविथ। दुदुविव ४३। दुद्रोथ। दुद्रुव णिश्रीति

(७६।४०) चङ्। अदुद्रुवत् ४४। जि ४५ ज्रि ४६ अभिभवे। अभिभवोन्यूनीकरणं न्यूनीभवनञ्च। आद्ये सकर्म्मकः। शत्रून् जयति। द्वितीये त्वकर्म्मकः। अध्ययनात्पराजयते अध्येतुं ग्लायतीत्यर्थः। विपराभ्याञ्जेरिति (७२४।४०) तङ्। पराजेरसोढः(२८६४०)इत्यपादानत्वम्। अथ डीङन्ता(७१००४०)ङितः। ष्मिङ् ईषद्धसने। स्मयते। सिष्मिये। सिष्मियिढ्वे-सिष्मियिध्वे १। गुङ् अव्यक्ते शब्दे। गवते। जुगुवे २। गाङ् गतौ। गाते। गाते। इटएत्वे कृते वृद्धिः। गे। लङ्इटि। अगे। गेत। गेयाताम्। गेरन्। गासीष्ट। गाङ्कुटादिभ्यइति(७११६४०) सूत्रे इङादेशस्यैव गाङो ग्रहणं न त्वस्य तेन ङित्त्वाद्घुमास्थेति(७११६४०)इत्वं न। अगास्त(३)। आदादिकोऽयमिति हरदत्तादयः। फले तु न भेदः। कुङ् ४ घुङ् ५ उङ् ६ ङुङ् ७ शब्दे। अन्ये तु उङ्कुङ्खुङ्गुङ् घुङ्ङुङ् इत्याहुः। कवते। चुकुवे। घवते। अवते। ऊवे। वर्णादाङ्गम्बलीय इत्युवङ् ततः सवर्णदीर्घः। ओता। ओष्यते। ओषीष्ट। औष्ट। ङवते। ञुङुवे। ङोता। च्युङ् ८ ज्युङ् ९ प्रुङ् १० प्लुङ् ११ गतौ। क्लुङ् १२ इत्येके। रुङ् गतिरेषणयोः। रेषणं हिंसा। रुरुवे। रवितासे १३। धृङ् अवध्वंसने। धरते। दध्रे १४। मेङ् प्रणिदाने। प्रणिदानं विनिमयः प्रत्यर्पणञ्च। प्र-णि-मयते। नेर्गदेति (७४।४०) णत्वम्। तत्र घुप्रकृतिमाङिति पठित्वा ङितो माप्रकृतेरपि ग्रहणस्येष्टत्वात्(१४६)१५। देङ् रक्षणे। दयते।

(१४६)इष्टत्वादिति भाष्यकारस्येति शेषः। अयं भावः नेर्गदेति(७४।४०)सूत्रे

दयतेर्दिगि लिटि। ७।४।९।

दिग्यादेशेन द्वित्वबाधनमिष्यत इति वृत्तिः। दिग्ये।

स्थाघ्वोरिच्च।१।२।१७।

अनयोरिदादेशः स्यात् सिच्च कित्स्यात्। अदित। अदिथाः। अदिषि १६। श्यैङ् गतौ। श्यायते। शश्ये १७। प्यैङ् वृद्धौ। प्यायते। पप्ये। प्याता १८। त्रैङ् पालने। त्रायते। तत्रे १९। पुङ् पवने। पवते। पुपुवे। पविता। २०। मुङ् बन्धने। मवते २१। डीङ् विहायसा गतौ। डयते। डिड्ये। डयिता २२। तॄ प्लवनतरणयोः।

ऋत इद्धातोः। ७।१।१००।

ऋदन्तस्य धातोरङ्गस्य इत्स्यात्। इत्त्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन। तरति। ऋच्छत्यृतामिति (७९७सू०) गुणः। तॄफलेत्येत्त्वम् (७५६सू०)। तेरतुः। तेरुः।

वृतो वा। ७। २। ३८।

वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि *। तरीता-तरिता। अलिटीति किम् तेरिथ। हलि चेति (१५७सू०) दीर्घः। तीर्य्यात्।

सिचि च परस्मैपदेषु। ७। २। ४०।

घुमेत्यत्र घुप्रकृतिमेति पठनीयं प्रकृतिश्च कस्येत्याकाङ्क्षायां सन्निधानात् पूर्वोत्तरयोरिति तेन माङ्प्रकृतेरिह षत्वम्।

* ग्रहोऽलिटि दीर्घइत्यतः(७१६९सू०) अलिटीति दीर्घइति चानुवर्त्तते।

अत वृत इटो दीर्घो न। अतारिष्टाम् १। अथाष्टावनुदात्तेतः। गुप १ गोपने। तिज २ निशाने। मान ३ पूजायाम्। वध ४ बन्धने।

**गुप्तिज्किद्भ्यः सन्।३।१।५।**

**मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य।३।१।६।**

सूत्रद्वयोक्तेभ्यः सन् स्यात् मानादीनामभ्यासस्येकारस्य दीर्घश्च। गुपेर्निन्दायां,तिजेः क्षमायां, कितेर्व्याधिप्रतीकारे, निग्रहेऽपनयने, नाशने संशये च। मानेर्जिज्ञासायां, बधेश्चित्तविकारे दानेरार्जवे शानेर्निशाने। सनाद्यन्ताइति(७५७४०)धातुत्वम्।

**सन्यङोः।६।१।९।**

सन्नन्तस्य यङन्तस्य च प्रथमैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य। अभ्यासकार्य्यम्। गुपिप्रभृतयः किद्भिन्नाः निन्दाद्यर्थकाः एवानुदात्तेतो दानशानौ च स्वरितेतौ एते नित्यंसन्नन्ताः। अर्थान्तरे त्वननुबन्धकाश्चुरादयः अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्तङ्। धातोरि‡त्यविहितत्वात्सनोऽत्र नार्द्धधातुकत्वं तेनेड्गुणौ न। जुगुप्सते। जुगुप्साञ्चक्रे। तितिक्षते। मीमांसते। भष्भावः (१४६४०)। चर्त्वम्। बीभत्सते। रभ राभस्ये। आ-रभते। आ रेभे। रब्धा। रप्स्यते ५। डु लभ ष प्राप्तौ। लभते ६। ष्वन्ज परिष्वङ्गे।

**दंशसञ्जस्वञ्जां शपि।६।४।२५।**

**रञ्जेश्च।६।४।२६।**

---

‡ धातोः कर्म्मणइतिसूत्रे (७१९८४०) यथा धातोरित्युच्चार्य्य विहितः सन् न तथात्रेत्यर्थः।

एषां अपि नलोपः। स्वजते। परि-ष्वजते। श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वेति व्याकरणान्तरम्। देभतुः सस्वजइति भाष्योदाहरणादेकदेशानुमत्या इहाप्याश्रीयते। सदेः परस्य लिटीति (७६०पृ०) सूत्रे स्वञ्जेरुपसंख्यानम्। अतोऽभ्यासात्परस्य षत्वन्न। परि-षस्वजे-परि-षस्वञ्जे। सस्वजिषे-सस्वञ्जिषे। खङ्क्ता। स्वङ्क्ष्यते। स्वजेत। स्वङ्क्षीष्ट प्रत्यष्वङ्क्त। प्राक् सितादिति (७३८पृ०) षत्वम्। परिनिविभ्यस्तु सिवादीनां वेति (७८६पृ०) विकल्पः। एतदर्थमेवोपसर्गात्सुनोतीत्येव(७२७पृ०)सिद्धे स्तुस्वञ्जयोः परिनिवीत्यत्र(७२८पृ०) पुनरुपादानम्। पर्य्यष्वङ्क्त-पर्य्यस्वङ्क्त ७। हद पुरीषोत्सर्गे। हदते। जहदे। हत्ता। हत्स्यते। हदेत। हत्सीष्ट। अहत्त ८।

अथ परस्मैपदिनः। ञि ष्विदा १ अव्यक्ते शब्दे। स्कन्दिर् गतिशोषणयोः। चस्कन्दिथ—चस्कन्थ। स्कन्ता। स्कन्त्स्यति। नलोपः। स्कद्यात्। इरित्त्वादङ् (७२६पृ०सू०) वा। अस्कदत्--अस्कान्त्सीत्। अस्कान्ताम्। अस्कान्त्सुः।

## वेः स्कन्देरनिष्ठायाम्।८।३।७३।

षत्वं वा स्यात्। इत्येवेदम् अनिष्ठायामिति पर्य्युदासात्।
* विष्कन्ता—विस्कन्ता। निष्ठायान्तु। विस्कन्नः।

## परेश्च।८।३।७४।

अस्मात्परस्य स्कन्देः सस्य षो वा। योगविभागादनिष्ठायामिति न संबध्यते। परि-ष्कन्दति-परि-स्कन्दति। परि-स्कन्नः-परिष्कण्णः २। षत्वपक्षे णत्वम्। न च पदद्वयाश्रयतया वहि

* विष्कन्तेति तृजन्तः प्रसङ्गदुदाहृतेः।

रङ्गत्वात्षत्वस्यासिद्धत्वम्। धातूपसर्गयोः कार्य्यमन्तरङ्गमित्यभ्युपगमात्। पूर्व्वन्धातुरुपसर्गेण युज्यते ततः साधनेनेति भाष्यम्। पूर्व्वं साधनेनेति मतान्तरे तु न णत्वम्। यभ मैथुने। येभिथ—ययब्ध। यब्धा। यप्स्यति। अयाप्सीत् ३। णम प्रह्वत्वे, शब्दे च। नेमिथ-ननन्थ। नन्ता। अनंसीत्। अनंसिष्टाम् ४। गम्लृ ५ सृप्लृ ६ गतौ।

## इषुगमियमां छः। ७। ३। ७७।

एषाञ्छः स्याच्छिति परे। गच्छति। जगाम। जग्मतुः। जग्मुः। जगमिथ--जगन्थ। गन्ता।

## गमेरिट् परस्मैपदेषु। ७। २। ५८।

गमेः परस्य सकारादेरिट् स्यात्। गमिष्यति। लृदित्त्वात्-(३७६पृ०सू०) अङ्। अनङीति(३८१पृ०सू०) पर्य्युदासान्नोपधालोपः। अगमत्। सर्पति। ससर्प।

## अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्। ६। १। ५९।

उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम् वा स्याज्झलादावकिति परे। स्रप्ता-सर्प्ता। स्रप्स्यति--सर्प्स्यति। असृपत्। यम उपरमे। यच्छति। येमिथ—ययन्थ। यन्ता। अयंसीत्। अयंसिष्टाम् ७। तप सन्तापे। तप्ता। अताप्सीत्।

## निसस्तपतावनासेवने। ८। ३। १०२।

षः स्यात्। आसेवनम्पौनःपुन्यन्ततोऽन्यस्मिन्विषये। नि-ष्ट-

पति ८। त्यज हानौ। तत्यजिथ-तत्यक्थ। त्यक्ता। अत्याक्षीत् ६। षञ्ज सङ्गे। दंशसञ्जस्वञ्जां शपीति (भ्वा०१ सू०) नलोपः। सजति। सङ्क्ता १०। दृशिर् प्रेक्षणे। पश्यति।

## विभाषा सृजिदृशोः। ७। २। ६५।

आभ्यां थलइड्वा।

## सृजिदृशोर्झल्यमकिति। ६। १। ५८।

अनयोरमागमः स्याज्झलादावकिति। दद्रष्ठ-ददर्शिथ। द्रष्टा। द्रक्ष्यति। दृश्यात्। इरित्वात् (भ्वा०६ सू०) अङ् वा।

## ऋदृशोऽङि गुणः। ७। ४। १६।

ऋवर्णान्तानां दृशेश्च गुणः स्यादङि। अदर्शत्। अङभावे

## न दृशः। ३। १। ४७।

दृशेश्च्लेः क्सो न। अद्राक्षीत् ११। दन्श दशने। दशनं दंष्ट्रा व्यापारः पृषोदरादित्वादनुनासिकलोपः। अतएव निपातनादित्येके। तस्याप्यत्रैव तात्पर्य्यम् अर्थनिर्देशस्याधुनिकत्वात्। दंशसञ्जेति(भ्वा०१सू०) नलोपः। दशति। ददंशिथ-ददंष्ठ। दंष्टा। दङ्क्ष्यति। दश्यात्। अदाङ्क्षीत्१२। कृष विलेखने। विलेखनमाकर्षणम्। क्रष्टा-कर्ष्टा। क्रक्ष्यति-कर्क्ष्यति स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः *। अक्राक्षीत्। अक्राष्टाम्। अकार्क्षीत्। अकार्ष्टाम्। अकार्क्षुः। पक्षे क्सः। अकृक्षत्। अकृक्षताम्। अकृक्षन् १३। दह भस्मीकरणे।

ददग्ध। दग्धा। धक्ष्यति। अधाक्षीत्। अदाग्धाम्। अधाक्षुः १४। मिह सेचने। मिमेह। मिमेहिथ। मेढा। मेक्ष्यति। अमिक्षत्। कित निवासे रोगापनयने च। चिकित्सति। संशये प्रायेण विपूर्व्वः। "विचिकित्सा तु संशय इत्यमरः। अस्यानुदात्तेत्त्वमाश्रित्य चिकित्सते इत्यादि कश्चिदुदाजहार। निवासे तु। केतयति १६। दान खण्डने शान तेजने। इतो वह्वल्यन्ताः (७१०६पृ०) स्वरितेतः। दीदांसति। दीदांसते १। शीशांसति। शीशांसते २। अर्थविशेषे सन्। अन्यत्र दानयति। शानयति। डु पच ष पाके। पचति। पचते। पेचिथ-पपक्थ। पेचे। पक्ता। पक्षीष्ट ३। षच समवाये। सचति। सचते ४। भज सेवायाम्। बभाज। भेजतुः। भेजुः। भेजिथ-बभक्थ। भक्ता। भक्ष्यति। भक्ष्यते। अभाक्षीत्। अभक्त ५। रञ्ज रागे। (१०१पृ०)नलोपः। रजति। रजते। अराङ्क्षीत्। अरङ्क्त ६। शप आक्रोशे। आक्रोशो विरुद्धानुध्यानम्। शशाप। शेपे। अशाप्सीत्। अशप्त ७। त्विष दीप्तौ। त्वेषति। त्वेषते। तित्विषे। त्वेक्ष्यति। त्विक्षीष्ट। अत्विक्षत। अत्विक्षाताम् ८। यज देवपूजासङ्गतिकरणदानेषु। यजति। यजते।

## लिट्यभ्यासस्योभयेषाम्। ६। १। १७।

वच्यादीनां ग्रह्यादीनाञ्चाभ्यासस्य सम्प्रसारणं स्याल्लिटि। इयाज।

## वचिस्वपियजादीनां किति। ६। १। १५।

वचिस्वप्योर्यजादीनाञ्च सम्प्रसारणं स्यात्किति। पुनःप्रसङ्गविज्ञानाद्द्वित्वम्। ईजतुः। ईजुः। इयजिथ—इयष्ठ। ईजे। यष्टा। यक्ष्यति। इज्यात्। यक्षीष्ट। अयाक्षीत्। अयष्ट ६। टुवप बीजसन्ताने। बीजसन्तानः क्षेत्रे विकिरणं गर्भाधानञ्च। अयं छेदनेऽपि। केशान् वपति। उवाप। ऊपे। वप्ता। उप्यात्। वप्सीष्ट। प्र-ण्यवाप्सीत्। अवप्त १०। वह प्रापणे। उवाह। उवहिथ। सहिवहोरोदवर्णस्य (७८६४०)। वोढा। वक्ष्यति। अवाक्षीत्। अवोढाम्। अवाक्षुः। अवोढ। अवक्षाताम्। अवोढ्वम् ११। वस निवासे। परस्मैपदी। वसति। उवास।

## शासिवसिघसीनाञ्च। ८। ३। ६०।

इण्कुभ्याम्परस्यैषां सस्य षः स्यात्। ऊषतुः। ऊषुः। उवसिथ-उवस्थ। वस्ता। सः स्यार्द्धधातुके (७०६४०)। वत्स्यति। उष्यात्। अवात्सीत्। अवात्ताम्। १२। वेञ् तन्तुसन्ताने। वयति। वयते।

## वेञो वयिः। २। ४। ४१।

वा स्याल्लिटि। इकार उच्चारणार्थः। उवाय।

## ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च। ६। १। १६।

एषां किति ङिति च सम्प्रसारणं स्यात्। यकारस्य प्राप्ते।

लिटि वयो यः। ६। १। ३८।

वयो यस्य सम्प्रसारणं न स्याल्लिटि। ऊयतुः। ऊयुः।

वश्चास्यान्यतरस्यां किति। ६। १। ३९।

वयो यस्य वो वा स्यात्किति लिटि। ऊवतुः। ऊवुः। वयस्याभावभावात्थलि नित्यमिट्। उवयिथ। स्थानिवद्भावेन ञित्त्वात्तङ्। ऊये ऊवे। वयादेशाभावे।

वेञः। ६। १। ४०।

वेञो न सम्प्रसारणं स्याल्लिटि। ववौ। ववतुः। ववुः। वविथ-ववाथ। ववे। वाता। ऊयात्। वासीष्ट। अवासीत् १३। व्येञ संवरणे। व्ययति।

न व्यो लिटि। ६। १। ४६।

व्येञ आत्त्वं न स्यात् लिटि। वृद्धिः। परमपि हलादिशेषं (७।१०पृ०) बाधित्वा यस्य सम्प्रसारणम् उभयेषां (७।१०५पृ०) ग्रहणसामर्थ्यात् अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे किन्तेन। विव्याय। विव्यतुः विव्युः। ऋद्धन्त्यत्तीति (७६७पृ०) नित्यमिट्। विव्ययिथ। विव्यायविव्यय। विव्ये। व्याता। वीयात्। व्यासीष्ट। अव्यासीत्। अव्यास्त १४। ह्वेञ् स्पर्द्धायां, शब्दे च।

अभ्यस्तस्य च। ६। १। ३३।

अभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं स्यात्। ततो द्वित्वम्। जुहाव। जुहुवतुः। जुहुवुः। जुहोथ-जुहविथ। जुहुवे। ह्वाता। हूयात्। ह्वासीष्ट।

लिपिसिचिह्वश्च। ३। १। ५३।

एभ्यः च्लेरङ् स्यात्। आतो लोपः (७८४पृ०सू०)। अह्वत्।

आत्मनेपदेष्वन्यतरस्याम्। ३। १। ५४।

अह्वत-अह्वास्त १५। अथ द्वौ परस्मैपदिनौ। वद व्यक्तायां वाचि अक्र-वदति। उवाद। ऊदतुः। उवदिथ। वदिता। उद्यात्। वदव्रजेति (७३६पृ०) वृद्धिः। अवादीत् १। टुओश्वि गतिवृद्ध्योः। श्वयति।

विभाषा श्वेः। ६। १। ३०।

श्वयतेः सम्प्रसारणं वा स्याल्लिटि यङि च। शुशाव। शुशुवतुः। श्वयतेर्लिंट्यभ्यासलक्षणप्रतिषेधः। तेन लिट्यभ्यासस्येति (७१०५पृ०)सम्प्रसारणं न। शिश्वाय। शिश्वियतुः। श्वयिता। श्वयेत्। शूयात्। जॄस्तम्भ्वित्यङ् (७४६पृ०) वा।

श्वयतेरः। ७। ४। १८।

श्वयतेरिकारस्य अकारः स्यादङि। पररूपम् (७८८पृ०सू०)। अश्वत्। अश्वताम्। अश्वन्। विभाषा धेट्श्व्योरिति (७८५पृ०) चङ्। इयङ्। अशिश्वियत्। ह्म्यन्तेति (७५३पृ०) न वृद्धिः। अश्वयीत्। वृत्। यजादयो वृत्ताः। भ्वादिराकृतिगणः। तेन चुलुम्पतीत्यादिसंग्रहः।

इति भ्वादयः।

---

**ऋतेरीयङ्। ३। १। २६।**

ऋतिः सौत्रस्तस्मादीयङ् स्यात् स्वार्थे। जुगुप्सायामयन्धातु-रिति बहवः कृपायाञ्चेत्येके। सनाद्यन्ता इति (७५७सू०) धातुत्वम् ऋतीयते। ऋतीयाञ्चक्रे। आर्द्धधातुकविवक्षायान्तु आयादयआर्द्धधातुके वेति(७५७सू०)ईयङभावे शेषात्कर्त्तरीति (७५सू०)परस्मैपदम्। आनर्त्त। अर्त्तिष्यति। आर्त्तीत् १। अद भक्षणे। द्वौ परस्मैपदिनौ।

**अदिप्रभृतिभ्यः शपः। २। ४। ७२।**

लुक् स्यात्। अत्ति। अत्तः। अदन्ति।

**लिट्यन्यतरस्याम्। २। ४। ४०।**

अदो घस्लृ वा स्याल्लिटि। जघास। गमहनेति (७६१सू०) उपधालोपः। तस्य चर्विधिम्प्रति स्थानिवद्भावनिषेधाद्घस्य चर्त्वम्। शासिवसीति (७१०६सू०) षत्वम्। जक्षतुः। जक्षुः। घसस्तासावभावात्थलि नित्यमिट्। जघसिथ। आद। आद-तुः। इडत्यर्त्तीति (७६७सू०) नित्यमिट्। आदिथ। अत्ता। अत्स्यति।

**हुझल्भ्यो हेर्धिः। ६। ४। १०१।**

होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि। अत्तात्। अदानि।

**अदः सर्व्वेषाम्। ७। ३। १००।**

अदः परस्यापृक्तसार्व्वधातुकस्याडागमः स्यात्सर्व्वमतेन।

आदत्। आताम्। आदन्। आदः। आत्तम्। आत्त। आदम्। आद्व। आद्म। अद्यात्। अद्याताम्। अद्युः। अद्यात्। अद्यास्ताम्। अद्यासुः।

लुङ्सनोर्घस्लृ। २। ४। ३७।

अदो घस्लृ स्यात् लुङि सनि च। लृदित्त्वादङ्(७७६पृ०सू०) अघसत्(१)। हन हिंसागत्योः। प्र-णि-हन्ति।

अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक लोपो झलि क्ङिति। ६। ४। ३७।

अनुनासिकेति लुप्तषष्ठीकम् वनतीतरेषां विशेषणम्। अनुनासिकान्तानाम्(१)मेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे। यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः। तनुक्षणुक्षिणुऋणुतृणुघृणुवनुमनु तनोत्यादयः। हतः। घ्नन्ति।

वमोर्वा। ८। ४। २३।

उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्याद्वमयोः परतः। प्र-हण्मि-प्र-हन्मि। प्र-हण्वः-प्रह-न्वः। हो हन्तेरिति (१५८४०)कुत्वम्। जघान *। जघ्नतुः। जघ्नुः।

अभ्यासाच्च। ७। ३। ५५।

अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात्। जघनिथ—जघन्थ।

---

(१) अनुदात्तोपदेशेत्यस्य व्याख्याऽनुनासिकान्तानामिति।

* णलिणित्त्वात्कुत्वमितरत्र नकारे परतइतिभेदः।

हन्ता। ऋद्धनोरितीट् (७८२९०)। हनिष्यति। हन्तु। हतात्। घ्नन्तु।

**हन्तेर्जः। ६। ४। ३६।**

हौ परे। आभीयतया (७११९०सू०) जस्यासिद्धत्वाद्धेर्न लुक्। जहि। हनानि। हनाव। हनाम। अहन्। अहताम्। अघ्नन्। अहनम्।

**आर्द्धधातुके। २। ४। ३५।**

इत्यधिकृत्य।

**हनो वध लिङि। २। ४। ४२।**

**लुङि च। २। ४। ४३।**

बधादेशोऽदन्तः (२)। आर्द्धधातुक इति विषयसप्तमी। तेनार्द्धधातुकोपदेशे अकारान्तत्वादतो लोपः। बध्यात्। बध्यास्ताम्। आर्द्धधातुके किम् विध्यादौ हन्यात्। हन्तेरिति (१५८पृ०) णत्वम्। प्र-हण्यात्। अबधीत् २। अथ चत्वारः स्वरितेतः। द्विष अप्रीतौ। द्वेष्टि। द्विष्टे। द्वेष्टा। द्वेक्ष्यति। द्वेक्ष्यते। द्वेष्टु। द्विष्टात्। द्विड्ढि। द्वेषाणि। द्वेषै। द्वेषावहै। अद्वेट्।

**द्विषश्च। ३। ४। ११२।**

लङो भेर्जुस् वा स्यात्। अद्विषुः–अद्विषन्। अद्वेषम्। द्विषीत। द्विक्षीष्ट। अद्विक्षत् १। दुह प्रपूरणे। दोग्धि। दुग्धः। धोक्षि। दुग्धे। धुक्षे। धुग्ध्वे। दोग्धु। दुग्धि।

---

(२) तेनाबधीदित्यत्रातोहलादेर्लघोरिति (७४०पृ०)वा वृद्धिर्नेति बोध्यम्।

दोहानि । धुक्ष्व । धुग्ध्वम् । दोहै । अधोक् । अदोहम् । अदुग्ध्वम् । अधुक्षत् । अधुक्षत २ । लुग्वा दुहेति (७८२४०) लुक्पक्षे तथास्ध्वंवहिषु लङ्वदपि । दिह उपचये । उपचयो वृद्धिः । प्र-णि-देग्धि ३ । लिह आस्वादने । लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिक्षे । लीढ्वे । लेढु । लीढाम् । लेहानि । अलेट् । अलिक्षत । अलीढ । अलिक्षावहि ४ । चक्षिङ् व्यक्तायां वाचि । अयं दर्शनेऽपि । इकारोऽनुदात्तो युजर्थः । "विचक्षणः प्रथयन्" । नुम् तु न अनिदित इति (१) व्याख्यानात् । ङकारस्तु अनुदात्तत्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थः तेन "स्मायन्निर्मोकसन्वीत्या"दि सिध्यति । चष्टे । चक्षाते । आर्द्धधातुके ।

चक्षिङः ख्याञ् । २ । ४ । ५४ ।

वा लिटि । २ । ४ । ५५ ।

अत्र भाष्ये क्शादिरयमादेशः । असिद्धकाण्डे शस्य यो वेति स्थितम् । ञित्त्वात्पदद्वयम् । चख्यौ । चख्ये । चक्शौ । चक्शे । चयो द्वितीया इति (८४९०) तु न चर्त्वस्यासिद्धत्वात् । चचक्षे । ख्याता । क्शाता । ख्यास्यति । ख्यास्यते । क्शास्यति । क्शास्यते । अचष्ट । अचक्षीत् । ख्यायात् । क्शायात् । क्शेयात् ।

अस्यतिवक्तिख्यातिभ्योऽङ् । ३ । १ । ५२ ।

---

(१) इदितोनुम् इति सूत्रे गोः पदान्तेइति सूत्रादन्त पदस्यानुवृत्तेरिति भावः । मनो० ।

एभ्यः श्लेरङ्। अख्यत्। अख्यत। अक्शासीत्। अक्शास्त। वर्जने क्शाञ् नेष्टः असनयोश्च*। समचचिष्ट ५। इत्यादि।

अथ ऋच्यन्ता (उ॰१४पृ॰) अनुदात्तेतः। ईर गतौ कम्पने च। ईर्त्ते। ईराञ्चक्रे। ईरिता। ईरिष्यते। ईर्त्ताम्। ईर्ष्व। ईर्ध्वम्। ऐरिष्ट १। ईड़ स्तुतौ। ईट्टे।

## ईशः से। ७। २। ७७।

## ईड़्जनोर्ध्वे च। ७। २। ७८।

ईशीड़जनां सेध्वेशब्दयोः सार्व्वधातुकयोरिट् स्यात्। योगविभागो वैचित्र्यार्थः। ईड़िषे। ईड़िध्वे। एकदेशविकृतस्यानन्यत्वात्। ईड़िष्व। ईड़िध्वम्। विकृतिग्रहणेन प्रकृतेरग्रहणात्। ऐड्ढ्वम् २। ईश ऐश्वर्य्ये। ईष्टे। ईशिषे। ईशिध्वे ३। आस उपवेशने। आस्ते। दयायासश्च(उ६५पृ॰)। आसाञ्चक्रे। आस्व। आध्वम्। आसिष्ट ४। आङ्शासु इच्छायाम्। आशास्ते। आशासाते ५। आङ्पूर्व्वत्वं प्रायिकम्। तेन "नमोवाकं प्रशास्महे" इति सिद्धम्। वस आच्छादने। वस्ते। वस्से। वध्वे। ववसे। वसिता। कसि गतिशासनयोः। कंस्ते। कंसाते। कंसते। अयमनिदित्येके। कस्ते। तालव्यान्तोऽप्यनिदित्। कष्टे। कशाते। कच्चे। कड्ढ्वे ६। णिसि चुम्बने। निंस्ते ७। दन्त्यान्तोऽयम्। आभरणकारस्तु तालव्यान्त इति बभ्राम। णिजि शुद्धौ। निङ्क्ते। निङ्च्चे। निञ्जिता ८। शिजि अव्यक्ते शब्दे। शिङ्क्ते ९। पिजि वर्णे। सम्पर्चने इत्येके। उभयत्रेत्यन्ये।

अवयवे इत्यपरे। अव्यक्ते शब्दे इतीतरे। पिङ्क्ते १०। इजीत्येके। इङ्क्ते ११। इजी वर्ज्जने। दन्त्योष्ठ्यादिः। ईदित्। इक्ते। इजाते। इक्षे। इदिदित्यन्ये। इङ्क्ते १२। पृची सम्पर्चने। पृक्ते १३।

षूङ् प्राणिगर्भविमोचने। सूते। सुषुवे। सोता-सविता। भूसुवोरिति (७।१८४०) गुणनिषेधः। सुवै। सविषीष्ट। असविष्ट-असोष्ट १। शीङ् स्वप्ने।

## शीङः सार्व्वधातुके गुणः। ७।४।२१।

क्ङिति च(७।१८४०) इत्यस्यापवादः। शेते। शयाते।

## शीङो रुट्। ७।१।६।

शीङः परस्य झादेशस्यातो रुडागमः स्यात्। शेरते। शेषे। शेध्वे। शये। शेवहे। शिश्ये। शयिता। अशयिष्ट २। अथ सौत्यन्ताः (७।११६४०) परस्मैपदिनः ञिङ्भिन्नाः। यु मिश्रणे अमिश्रणे च।

## उतो वृद्धिर्लुकि हलि। ७।३।८९।

लुग्विषये उकारस्य वृद्धिः स्यात्पिति हलादौ सार्व्वधातुके नत्वभ्यस्तस्य। यौति। युतः। युवन्ति। युयाव। यविता। युयात्। इह उतो वृद्धिर्न भाष्ये "पिच्च ङिन्न ङिच्च पिन्नेति" व्याख्यानात् विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधात्। यूयात्। अयावीत् १। रु शब्दे।

## तुरुस्तुशम्यमः(४)सार्वधातुके। ७।३।९५।

(४) शम्यमोश्छान्दसत्वाद्विकरणलुकि शमीति यमीति। सम्भवः

एभ्यः परस्य सार्व्वधातुकस्य हलादेस्तिङ ईड्वा स्यात्। नाभ्यस्तस्ये (७।३।८७०) त्यतोऽनुवृत्तिसम्भवे पुनः सार्व्वधातुकग्रहणमपिदर्थम्। रवीति-रौति। रुवीतः-रुतः। हलादेः किम् रुवन्ति। तिङः किम् रास्यति। सार्व्वधातुके किम् आशिषि। रूयात्। विध्यादौ तु। रुयात्-रुवीयात्। अरावीत्। अरविष्यत् २। तु इति सौत्रो धातुः। धातुत्वे इदमेव सूत्रं ज्ञापकम्। गतिवृद्धिहिंसासु। अयञ्च लुग्विकरण इति स्मरन्ति। तवीति-तौति। तुवीतः-तुतः। तोता। तोष्यति ३। णु स्तुतौ। नौति। नविता ४। टुक्षु शब्दे। क्षौति। क्षविता ५। क्ष्णु तेजने। क्ष्णौति। क्ष्णविता ६। ष्णु प्रस्रवने। स्नौति। सुष्णाव। स्नविता। स्नूयात् ७। ऊर्णुञ् आच्छादने।

## ऊर्णोतेर्विभाषा। ७। ३। ९०।

वा वृद्धिः स्याद्धलादौ पिति सार्व्वधातुके। ऊर्णौति-ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते। ऊर्णोतेराम् नेति वाच्यम् *।

## न न्द्राः संयोगादयः। ६। १। ३।

अचः पराः संयोगादयो नदरा द्विर्न भवन्ति। नुशब्दस्य द्वित्वम्। णत्वस्यासिद्धत्वात्पूर्व्वत्रासिद्धीयमद्विर्व्वचन इति त्वनित्यम् उभौ साभ्यासस्येति (८।४।२१) (५) लिङ्गात्। ऊर्णुनाव। ऊर्णुनुवतुः। ऊर्णुनुवुः।

---

(५) उपसर्गस्याद्रेफात्परयोरभ्यासघटितस्यानितेर्द्वयोर्नकारयोर्णत्वविधानाद् द्वित्वात् परमेव णत्वमिति ज्ञाप्यते इति भावः।

विभाषोर्णोः। १। २। ३।

इडादिप्रत्ययो वा ङित् स्यात्। ऊर्णुनुविथ-ऊर्णुनविथ। ऊर्णुविता-ऊर्णविता। ऊर्णौतु-ऊर्णोतु। ऊर्णवानि। ऊर्णवै।

गुणोऽपृक्ते। ७। ३। ९१।

ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्व्वधातुके। वृद्ध्यपवादः। और्णोत्। और्णोः। ऊर्णुयात्। ऊर्णुयाः। इह वृद्धिर्न ङिच्च पिन्नेति भाष्यात्। ऊर्णूयात्। ऊर्णुविषीष्ट-ऊर्णविषीष्ट। और्णुवीत्। और्णुविष्टाम्।

ऊर्णोतेर्विभाषा। ७। २। ६।

इडादौ परस्मैपदे परे सिचि वा वृद्धिः स्यात्। पक्षे गुणः। और्णावीत्। और्णाविष्टाम्। और्णाविषुः। और्णवीत् ८। द्यु अभिगमने। द्यौति। द्योता। ९। षु प्रसवैश्वर्य्ययोः। प्रसवोऽभ्यनुज्ञानम्। सोता। असौषीत् १०। कु शब्दे कोता ११। ष्टुञ्-स्तुतौ। स्तौति-स्तवीति। स्तुतः-स्तुवीतः। स्तुते-स्तुवीते। स्तुसुधूञ्भ्य (७।२।७२) इतीट्। अस्तावीत्। प्राक्सितादिति (८।३।६३) षत्वम्। अभ्यष्टौत् सिवादीनां वा (८।३।७१) पर्य्यष्टौत्-पर्य्यस्तौत् १२। ब्रूञ् व्यक्तायां वाचि।

ब्रुवः पञ्चानामादित आहो ब्रुवः। ३। ४। ८४।

ब्रुवो लटः परस्मैपदानामादितः पञ्चानां णलादयः पञ्च

षा स्युर्ब्रुवश्चाहादेशः। अकारउच्चारणार्थः। आह। आहतुः।
आहुः।

आहस्थः। ८। २। ३५।

झलि परे। चर्त्वम्। आत्थ। आहथुः।

ब्रुव ईट्। ७। ३। ९३।

ब्रुवः परस्य हलादेः पित ईट् स्यात्। आत्थेत्यत्र स्थानिवद्भावात्प्राप्तोऽयम् झलीति थत्वविधानान्न भवति ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रूते। आर्द्धधातुकाधिकारे।

ब्रुवो वचिः। २। ४। ५३।

उवाच। ऊचतुः। ऊचुः उवचिथ—उवक्थ। ऊचे। वक्ता। ब्रवीतु। ब्रूतात्। ङिच्च पिन्नेत्यपित्त्वादीण् न। ब्रवाणि। ब्रवै। ब्रूयात्। उच्यात्। अस्यतिवक्तीत्यङ् (उ१११२९०)।

वच उम्। ७। ४। २०।

अङि परे। अवोचत्। अवोचत १। अथ णास्यन्ताः(उ१२६९०) परस्मैपदिनः। इङ्त्वात्मनेपदी। इण् गतौ। एति। इतः।

इणो यण्। ६। ४। ८१।

अजादौ प्रत्यये। इयङोऽपवादः। यन्ति। इयाय।

दीर्घइणः किति। ७। ४। ६९।

इणोऽभ्यासस्य दीर्घः स्यात्किति लिटि । ईयतुः । ईयुः ।
इययिथ—इयेथ । ऐत् । ऐताम् । आयन् । इयात् । ईयात् ।

एतेर्लिङि । ७ । ४ । २४ ।

उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्द्धधातुके किति लिङि ।
निरियात् । उभयत आश्रयेणान्तादिवत् । अभीयात् । अणः
किम् समेयात् । समीयादिति प्रयोगस्तु भौवादिकस्य(७५१पृ०) ।

इणो गा लुङि । २ । ४ । ४५ ।

गातिस्थेतिसिचो (७१८पृ०) लुक् । अगात् अगाताम् । अगुः
१ । इङ् अध्ययने नित्यमधिपूर्व्वः । अधीते । अधीयाते ।

गाङ् लिटि । २ । ४ । ४९ ।

इङो गाङ् स्याल्लिटि लावस्थायां विवक्षिते । अधि--जगे ।
अधि-जगाते । अधि-जगिरे । अध्येता । अध्येष्यते अध्ययै ।
गुणायादेशयोः कृतयोरुपसर्गस्य यण् । पूर्व्वन्धातुरुपसर्गे-
णेति दर्शने(६)ऽन्तरङ्गत्वाद्गुणात्पूर्वं सवर्णदीर्घः प्राप्तः णेरध्य-
यने वृत्तमिति (७३५७पृ०) निर्द्देशान्न भवति । अध्यैत । परत्वा-
दियङ् । ततः (७२७पृ०) आट् । वृद्धिः * । अध्यैयाताम् ।
अध्यैयि । अध्यैवहि । अधीयीत । अधीयीयाताम् । अधी-
यीध्वम् । अधीयीय । अध्येषीष्ट ।

---

(६) पूर्व्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेनेति मते इत्यर्थः ।

* आटश्चेति (११७पृ०) सूत्रेणेति शेषः ।

विभाषा लुङ्लृङोः। २। ४। ५०।

इङो गाङ् वा स्यात्।

गाङ्कुटादिभ्योऽञ्णिन्ङित्। १। २। १

गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः।

घुमास्थागापाजहातिसां हलि। ६। ४। ६६।

एषामात ईत्स्यात् हलादौ क्ङित्यार्द्धधातुके। अध्यगीष्ट-अध्यैष्ट। अध्यगीष्यत—अध्यैष्यत २। इक् स्मरणे। अयमप्यधिपूर्वः। अधीगर्थदयेशामिति (२८७४०) लिङ्गात्। अन्यथाध्धीगर्थेत्येव ब्रूयात्। इण्वदिक इति वक्तव्यम् *। अधियन्ति। अध्यगात्। केचित्तु आर्द्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः। तन्मते यण् न। तथाच भट्टिः। "समीतयोराघवयोरधीयन्निति ३। वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु। प्रजनं गर्भग्रहणम्। असनं क्षेपणम्। वेति। वीतः। वियन्ति। वेषि। वेमि। वीहि। अवेत्। अवीताम्। अवियन्। अडागमे सत्यनेकाच्त्वाद्यणिति केचित्। अव्यन् ४। अत ईकारोऽपि धात्वन्तरमस्तीष्यते। एति। ईतः। इयन्ति। ईयात्। ऐषीत् ५। या प्रापणे। प्रापणमिह गतिः। प्र-णि-याति। यातः। यान्ति।

लङः शाकटायनस्यैव। ३। ४। १११।

आदन्तात्परस्य लङो झेर्जुस् वा स्यात्। अयुः—अयान्।

यायात्। यायाताम्। यायासाम् ६। वा ७ गतिगन्धनयोः। गन्धनं सूचनम्। भा ८ दीप्तौ। ष्णा ६ शौचे। श्रा १०पाके। द्रा ११ कुत्सायाङ्गतौ। प्सा १२ भक्षणे। पा रक्षणे। पायास्ताम्। अपासीत्१३। रा १४ दाने। ला १५ आदाने। द्वावपि दाने इति चन्द्रः। दाप् लवने। प्र-णि-दाति(७)प्र-नि-दाति। दायास्ताम् अदासीत्१६। ख्या प्रकथने १७। अयं सार्वधातुकमात्रविषयः। सस्थानत्वं नमः (८) ख्यात्रे * इति वार्त्तिकन्तज्ज्ञाप्यं चेह लिङ्गम्। सास्थानोजिह्वामूलीयः। स नेति ख्शाञ्आदेशस्य ख्शादित्वे प्रयोजनमित्यर्थः। सम्पूर्वस्य ख्यातेः प्रयोगो नेति न्यासकारः। मा माने अकर्म्मकः। "तनौ ममुस्तत्र न कैटभद्विष" इति माघः। उपसर्गवशेनार्थान्तरे सकर्म्मकः। "उदर म्परिमाति मुष्टिना"। नेर्गदेत्यत्र (७४१सू०)नास्य ग्रहणम्। प्र-णि-माति प्र-नि-माति१८। वच परिभाषणे। वक्ति। वक्तः। अयमन्तिपरो न प्रयुज्यते। बहुवचनपर इत्यन्ये। झिपरइत्यपरे। वग्धि। वच्यात्। उच्यात्। अवोचत्१६। विद ज्ञाने।

(७) प्र नि-दातीत्यत्र शेषे विभाषेति (७२१सू०)णत्वविकल्पः पित्त्वेन अघुत्वात् एत्त्वसिज्लुकौ नेत्युदाहरणे ज्ञेयम्।

(८) सस्थानत्वं समानस्थानत्वं नेत्यनुवर्त्यते "जिह्वामूले तु कुः प्रोक्त"इत्युक्तेः खकारस्य जिह्वामूलीयतया तत्समानस्थानत्वं विसर्गस्य। अयं भावः यद्ययमार्द्धधातुकेऽपि प्रयुज्येत तर्हि नमः ख्यात्रे इत्यत्र टच आर्द्धधातुकतया कुप्वोरिति (१६८सू०) जिह्वामूलीयः स्यात् आर्द्धधातुकविषये ख्शादेशमात्रप्रयोगनियमे तु शकारस्थाने जातयकारस्यासिद्धतया शर्परे विसर्जनीय (७२सू०) इत्यस्यैवात्र प्रवृत्तिः स्यादिति।

विदो लटो वा। ३। ४। ८३।

वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः। वेद। विदतुः। विदुः। वेत्थ। विदथुः। विद। वेद। विद्व। विद्म। पक्षे वेत्ति। वित्तः इत्यादि। विवेद। विविदतुः। उषविदेति (उ७५पृ०)आमृपक्षे विदेत्यकारान्तनिपातनान्न लघूपधगुणः। विदाञ्चकार। वेदिता।

विदाङ्कुर्वन्त्वित्यन्यतरस्याम्। ३। १। ४१।

वेत्तेर्लोण्याम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते। पुरुषवचने न विवक्षिते इतिशब्दात्।

तनादिकृञ्भ्य उः। ३। १। ७९।

तनादेः कृञश्च उप्रत्ययः स्यात्। शपोऽपवादः। तनादित्वादेव सिद्धे कृञ्ग्रहणं गणकार्य्यस्याऽनित्यत्वे लिङ्गं तेन "न विश्वसेदविश्वस्त" मित्यादि सिद्धम्। विदाङ्करोतु।

अतउत्सार्व्वधातुके। ६। ४। ११०।

उप्रत्ययान्तकृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति। उदिति तपरसामर्थ्यान्न गुणः। विदाङ्कुरुताम्। उतश्चेति (उ७०पृ०) हेर्लुक्। आभीयत्वेन लुकोऽसिद्धत्वादुत्त्वम्। विदाङ्कुरु। विदाङ्करवाणि। अवेत्। अवित्ताम्। सिजभ्यस्तेति (उ२०पृ०) झेर्जुस्। अविदुः।

दश्च। ८। २। ७५।

धातोर्दस्य पदान्तस्य सिपि परे रुः स्याद्वा। अवेः-अवेत् रु०। अस भुवि। अस्ति।

**श्नसोरल्लोपः। ६। ४। १११।**

श्नोऽस्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति। स्तः। सन्ति। तासस्त्योरिति (७१२४०) सलोपः। असि। स्थः। स्थ। अस्मि। स्वः। स्मः।

**आर्द्धधातुके। २। ४। ३५।**

इत्यधिकृत्य।

**अस्तेर्भूः। २। ४। ५२।**

बभूव। भविता। अस्तु। स्तात्। स्ताम्। सन्तु।

**घ्वसोरेद्धावभ्यासलोपश्च। ६। ४। ११९।**

घोरस्तेश्च एत्वं स्याद्धौपरे अभ्यासलोपश्च। आभीयत्वेन एत्वस्यासिद्धत्वाद्धेर्धिः। श्नसोरित्यल्लोपः। एधि। तातङ्पक्षे एत्वं न, परेण तातङा बाधात् सकृद्गताविति-न्यायात्। स्तात्। स्तम्। स्त। असानि। असाव। असाम। अस्तिसिचइतीट् (७२०४०)। आसीत्। श्नसोरित्यल्लोपस्या-भीयत्वेनासिद्धत्वादाट्। आस्ताम्। आसन्। स्यात्। भूयात्। अभूत्। सिचोऽस्तेश्च विद्यमानत्वेन विशेषणादिण् न।

**उपसर्गप्रादुर्भ्यामस्तिर्यच्परः। ८। ३। ८७।**

उपसर्गेभ्यः प्रादुसश्च परस्यास्तेः सस्य षः स्यात् यकारेऽचि च परे। नि-ष्यात्। प्रादुःष्यात्। नि-षन्ति। प्रादुःषन्ति। यच्परः किम् अभि-स्तः २१। मृजू शुद्धौ।

**मृजेर्वृद्धिः। ७। २। ११४।**

मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे। क्ङित्यजादौ वेष्यते *। व्रश्चेति (१२०४०) षः। मार्ष्टि। मृष्टः। मृजन्ति-मार्जन्ति।

ममार्ज्ज। ममार्जतु-ममृजतुः। ममार्जिथ-ममार्ष्ठ। मार्जिता-मार्ष्टा। मृड्ढि। अमाट्। अमार्जम्। अमार्ज्जीत्-अमार्क्षीत् २२। रुदिर् अश्रुविमोचने।

## रुदादिभ्यः सार्व्वधातुके। ७। २। ७६।

रुद् स्वप् श्वस् अन् जक्ष् एभ्यो वलादेः सार्वधातुकस्येट् स्यात्। रोदिति। रुदितः। हौ परत्वादिटि धित्वन्न। रुदिहि।

## रुदश्च पञ्चभ्यः। ७। ३। ९८।

हलादेः पितः सार्व्वधातुकस्याष्टक्तस्य ईट् स्यात्।

## अड् गार्ग्यगालवयोः। ७। ३। ९९।

अरोदीत्-अरोदत्। अरुदिताम्। अरुदन्। अरोदीः-अरोदः। प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुट्। रुद्यात्। अरुदत्-अरोदीत् २३। ञिष्वप् शये। स्वपिति। स्वपितः। सुष्वाप। सुषुपतुः। सुषुपुः। सुष्वपिथ-सुष्वप्थ।

## सुविनिर्दुर्भ्यः सुपिसूतिसमाः। ८। ३। ८८

एभ्यः सुप्यादेः सस्य षः स्यात्। पूर्व्वन्धातुरुपसर्गेण युज्यते किति लिटि परत्वात्सम्प्रसारणे षत्वे च कृते द्वित्वम् पूर्व्वत्रासिद्धीयमद्विर्वचने। सुषुषुपतुः। सुषुषुपुः। अकिति तु द्वित्वेऽभ्यासस्य सम्प्रसारणम्। षत्वस्यासिद्धत्वात्ततः पूर्व्वं हलादिशेषः नित्यत्वाच्च ततः सुपिरूपाभावान्न षः। सुसुष्वाप। सुस्वप्ता। अस्वपीत्-अस्वपत्। स्वप्यात्। सुप्यात्

सुषुप्यात् । अस्वाप्सीत् २४ । श्वस प्राणने । श्वसिति । श्वसिता । अश्वसीत्-अश्वसत् । श्वस्यातम् । श्वस्यास्ताम् । ह्म्यन्त-क्षणेति (७५२सू०) न वृद्धिः । अश्वसीत् २५ । अन च । अनिति । आन । अनिता । आनीत्-आनत् ।

## अनितेः । ८ । ४ । १९ ।

उपसर्गस्थान्निमित्तात्परस्यानिते र्नस्य णः स्यात् । प्राणिति २६ । जक्ष भक्षहसनयोः । जक्षिति । जक्षितः ।

## अदभ्यस्तात् । ७ । १ । ४ ।

झस्य अत्स्यात् । अन्तापवादः (६) । जक्षति । सिजभ्यस्तेति (७२०सू०) झेर्जुस् । अजक्षुः । अयमन्तःस्थादिरित्युज्ज्वल-दत्तो बभ्राम २७ । रुदादयः पञ्च गताः । जागृ निद्राक्षये । जागर्त्ति । जागृतः । जाग्रति । उषविदेत्याम् (७७५सू०) वा । जागराञ्चकार-जजागार ।

## जाग्रोऽविचिण्णल्ङित्सु । ७ । ३ । ८५ ।

जागर्त्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च । जजागरतुः । अजागः । अजागृताम् । अभ्यस्तत्वात्(२०सू०सू०)जुस् ।

## जुसि च । ७ । ३ । ८३ ।

अजादौ जुसीगन्ताङ्गस्य गुणः स्यात् । अजागरुः । अजादौ किम् जागृयुः । आशिषि तु । जागर्य्यात् । जागर्य्यास्ताम् । जागर्य्यासुः । लुङि । अजागरीत् २८ । जागृ इस् इत्यत्र यण्

---

(६) झोऽन्तः(७८सू०)इत्यस्यादादेशोऽपवादः अस्य त्वपवादो झेर्जुसिति । तत्त्व० ।

प्राप्तस्तं सार्वधातुकगुणो बाधते तं णिचि वृद्धिः, तां जागर्त्तिगुणः, तत्र कृते हलन्तलक्षणप्राप्ता नेटीति (७२६पृ०) निषिद्धा अतो हलादेरिति (७४०पृ०) बाधित्वा अतो ल्रान्तस्येति(७६७पृ०) प्राप्ता ह्यन्तेति (७५२पृ०) निषिध्यते। तदाहुः।

गुणो वृद्धिर्गुणो वृद्धिप्रतिषेधो विकल्पनम्।

पुनर्वृद्धिर्निषेधोऽतो यण्पूर्व्वाः प्राप्तयो नव। इति।

दरिद्रा दुर्गतौ। दरिद्राति।

## इद्दरिद्रस्य। ६। ४। ११४।

दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके। दरिद्रितः।

## श्नाभ्यस्तयोरातः। ६। ४। ११२।

अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके। दरिद्रति। अनेकाच्त्वादाम्(७५७पृ०स्०)वा। दरिद्राञ्चकार। आतऔ णल इत्यत्र(७८४पृ०) औ इत्येव सिद्धे औकारविधानन्दरिद्रातेरालोपे कृते श्रवणार्थम्। अतएव ज्ञापकादाम्नेत्येके। ददरिद्रौ। ददरिद्रतुरित्यादि। यत्तु णलि ददरिद्रेति तन्निर्मूलमेव। दरिद्रातेरार्द्धधातुके विवक्षिते आलोपो वाच्यः,,। लुङि वा सनि ण्वुलि ल्युटि च न *। दरिद्राता। अदरिद्रात्। अदरिद्राताम्। अदरिद्रुः (१०)। दरिद्रियात्

(१०) सिजभ्यस्तेति (७२०पृ०) झेर्जुस् लङः शाकटायन (७११९पृ०) स्यैवेत्यादन्तलक्षणो विकल्पो नेह प्रवर्त्तते परत्वात् श्नाभ्यस्तयोः इत्यालोपे आदन्तत्वाभावाच्च।

दरिद्र्यात्। अदरिद्रीत्। इट्सकौ। अदरिद्रासीत् २९। चकासृ दीप्तौ(७।२४पृ०सू०)भस्य यत्। चकासति। चकासाञ्चकार। धि चेति (७२७पृ०) सलोपः सिचएवेत्येके। चकाद्धि। चकाधीत्येव भाष्यम्।

## तिप्यनस्तेः। ८। २। ७३।

पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः। अचकात्-अचकाद्। अचकासुः।

## सिपि धातोरुर्वा। ८। २। ७४।

पदान्तस्य धातोः सस्य रुः स्याद्वा। पक्षे दः। अचकाः-अचकात् ३०। शासु अनुशिष्टौ। शास्ति।

## शास इदङ्हलोः। ६। ४। ३४।

शास उपधाया इत्स्यादङि हलादौ क्ङिति च। शासिवसीति। (७१०६पृ०)षः। शिष्टः। शासति। शशास। शशासतुः। शास्तु-शिष्टात्। शिष्टाम्। शासतु।

## शा हौ। ६। ४। ३५।

शास्तेः शादेशः स्याद्धौ परे। तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः। शाधि। अशात्। अशिष्टाम्। अशासुः। अशात्-अशाः। शिष्यात्। सर्तिशास्तीत्यङ् (७६७पृ० । अशिषत्। अशासिष्यत् ३१। दीधीङ् दीप्तिदेवनयोः। एतदादयः पञ्च धातवश्छान्दसाः। दीधीते। एरनेकाचइति(६८पृ०)यण्। दीध्याते।

## यीवर्णयोर्दीधीवेव्योः। ७। ४। ५३।

एतयोरन्त्यस्य लोपः स्यादकारे इवर्णे च परे। इति लोपं बाधित्वा नित्यत्वाट्टेरेत्वम्। दीध्ये। दीधीवेवीटामिति (उ१२पृ०) गुणनिषेधः। दीध्याञ्चक्रे। दीधिता। दीधिष्यते१। वेवीङ २ वेतिना तुल्ये। वीगतीत्यनेन तुल्येऽर्थे वर्त्तते इत्यर्थः। अथ त्रयः परस्मैपदिनः। षस सस्ति स्वप्ने। सस्ति। सस्तः। ससन्ति। ससास। सेसतुः। सस्तु। सधि। पूर्वत्रासिद्धमिति (१२पृ०) सलोपस्यासिद्धत्वादतोहेरिति (उ१५पृ०) न लुक्। असत्। असस्ताम्। असः-असत्। सस्यात्। असासीत्-अससीत्१। सन्ति। इदित्त्वान्नुमि कृते संस्तइति स्थिते स्कोरिति (१६६पृ०) सलोपे झरो-झरि सवर्णे (४२पृ०) इति तकारस्य वा लोपः। सन्तः। संस्तन्ति २। बहूनां समवाये द्वयोः संयोगसंज्ञा नेत्याश्रित्य स्कोरिति लोपाभावात्। संस्ति। संस्तः। इत्येके। वश कान्तौ। कान्तिरिच्छा वष्टि। उष्टः। उशन्ति। वक्षि। उष्ठः। उवाश। ऊशतुः। वशिता। वष्टु। उष्टात्। उड्ढि। अवट्। औष्टाम्। औशन्। अवशम्। उश्यातास्। उश्यास्ताम् ३। चर्करीतञ्च। यङ्लुगन्तमदादौ बोध्यम्। ह्नुङ् अपनयने। ह्नुते। जुह्नुवे। ह्नुवीत। ह्नोषीष्ट। अह्नोष्ट।

इत्यदादयः।

ऊ दानादनयोः। आदाने चेत्येके। प्रीणनेऽपीति भाष्यम्। दानञ्चेह प्रक्षेपः। सच वैधे आधारे हविषश्चेति स्वभावाल्लभ्यते। इतस्त्वारः परस्मै पदिनः।

जुहोत्यादिभ्यः श्लुः। २। ४। ७५।

शपः श्लुः स्यात्।

श्लौ। ६। १। १०।

धातोर्द्वे स्तः। जुहोति। जुहुतः। अदभ्यस्तात्(७।२४पृ०) इत्यत्। हुश्नुवोरिति(७६८पृ०) यण्। जुह्वति।

भीह्रीभृहुवां श्लुवच्च। ३। १। ३९।

एभ्यो लिट्याम् वा स्यादामि श्लाविव कार्य्यञ्च। जुहवाञ्चकार-जुहाव। होता। होष्यति। जुहोतु। जुहुतात्। हुझल्भ्यो हेर्धिः (७१०९पृ०सू०)। जुहुधि। आटि परत्वाद्गुणः। जुहवानि। परत्वात् जुसि चेति(७१२४पृ०) गुणः। अजुहवुः। जुहुयात्। हूयात्। अहौषीत् १। ञिभी भये। बिभेति।

भियोऽन्यतरस्याम्। ६। ४। ११५।

इकारः स्याद्धलादौ क्ङिति सार्व्वधातुके। बिभितः-बिभीतः। बिभ्यति। बिभयाञ्चकार—बिभाय। भेता २। ह्री लज्जायाम्। जिह्रेति। जिह्रीतः। जिह्रियति। जिह्रयाञ्चकार-जिह्राय ३। पॄ पालनपूरणयोः।

अर्त्तिपिपर्त्त्योश्च। ७। ४। ७७।

अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ।

## उदोष्ठ्यपूर्वस्य। ७। १। १०२।

अङ्गावयवौष्ठ्यपूर्वो यऋत्तदन्तस्याङ्गस्य उत्स्यात्। गुणवृद्धी परत्वादिमम्बाधेते। पिपर्त्ति। उत्त्वम् रपरत्वम् (४२पृ०)। हलि चेति (६५७पृ०) दीर्घः। पिपूर्त्तः। पिपुरति। पपार। क्विति लिटि ऋच्छत्यृतामिति (७६७पृ०) गुणे प्राप्ते।

## शृदॄप्रां ह्रस्वो वा। ७। ४। १२।

एषां क्विति लिटि ह्रस्वो वा स्यात्। पक्षे गुणः। पप्रतुः। पप्रुः। पपरतुः। पपरुः। परिता-परीता। अपिपः। अपिपूर्त्ताम्। अपिपरुः। पिपूर्य्यात्। पूर्य्यात्। अपारीत्। अपारिष्टाम्। ह्रस्वान्तोऽयमिति केचित्। पिपर्त्ति। पिपृतः। पिप्रति। पिपृयात्। आशिषि। प्रियात्। अपार्षीत् ४। पाणिनीयमते तु "तं रोदसी पिपृत" मित्यादौ छान्दसत्वं शरणम्। डुभृञ् धारणपोषणयोः।

## भृञामित्। ७। ४। ७६।

भृञ् माङ् ओहाङ् एषान्त्रयाणामभ्यासस्य इत्स्यात् श्लौ। बिभर्त्ति। बिभृतः। बिभ्रति। बिभृध्वे। (७१२८पृ०सू०) श्लुवद्भावात् द्वित्वेत्त्वे। बिभरामास-बभार। बभर्थ। बभृव। बिभृहि। बिभराणि। अबिभः। अबिभृताम्। अबिभरुः। बिभृयात्। भ्रियात्। भृषीष्ट। अभार्षीत्। अभृत ५। माङ् माने शब्दे च।

ई हल्यघोः। ६। ४। ११३।

अभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि न तु घुसंज्ञकस्य। मिमीते। मिमाते। मिमते। प्र ण्यमास्त ६। ओहाङ् गतौ। जिहीते। जिहाते। जिहते। जिहे। हाता। हास्यते ७। ओहाक् त्यागे। परस्मैपदी। जहाति।

जहातेश्च। ६। ४। ११६।

इत्स्याद्वा हलादौ क्ङिति सार्वधातुके। पक्षे ईत्वम्। जहितः-जहीतः। जहति।

आ च हौ। ६। ४। ११७।

जहातेर्हौ परे आ स्यात् चादिदीतौ। जहाहि-जहिहि-जहीहि। अजहात्। अजहुः।

लोपो यि। ६। ४। ११८।

जहातेरालोपः स्याद्यादौ सार्वधातुके। जह्यात्। एर्लिङि (३६४५०)। हेयात्। अहासीत् ८। डुदाञ् दाने। प्र-णि-ददाति। दत्तः। ददति। दत्ते। ददौ। घ्वसोरिति (३१२२५०) एत्वाभ्यासलोपौ। देहि। अददात्। अदत्ताम्। अददुः। दद्यात्। देयात्। अदात्। अदाताम्। अदुः। अदित ९। डुधाञ् धारणपोषणयोः। दानेऽप्येके। प्र-णि-दधाति।

दधस्तथोश्च। ८। २। ३८।

द्विरुक्तस्य झषन्तस्य धाधातोर्बशोभष् स्यात्तथोः परयोः

सध्वोश्च परतः। वचनसामर्थ्यादाल्लोपो न स्थानिवदिति वामनमाधवौ। वस्तुतस्तु पूर्वत्रासिद्धे न स्थानिवत्। धत्तः। दधति। धत्थः। धत्थ। दध्वः। धत्ते। धत्से। धध्वे। धेहि। अधित १०। अथ त्रयः स्वरितेतः। णिजिर् शौचपोषणयोः।

## णिजां त्रयाणां गुणः श्लौ। ७। ४। ७५।

णिज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ। नेनेक्ति। नेनिक्तः। नेनिजति। नेक्ता। नेक्ष्यति। नेनेक्तु। नेनिग्धि।

## नाभ्यस्तस्याऽचि पिति सार्वधातुके। ७। ३। ८७।

लघूपधगुणो न स्यात्। नेनिजानि। अनेनेग्। अनेनिक्ताम्। अनेनिजुः। नेनिज्यात्। निज्यात्। अनिजत्-अनैक्षीत्। अनिक्त १। विजिर् पृथग्भावे। वेवेक्ति। वेविक्ते। विवेजिथ २। अत्र विजइडिति (उ१५०पृ०) ङित्। तत्र ओ विजी इत्यस्यैव तत्र ग्रहणात्। णिजिविजी रुधादावपि। विष्लृ व्याप्तौ। वेवेष्टि। वेविष्टे। ऌदित्वादङ् (उ७६पृ०सू०)। अविषत्। तङि क्सः। अजादौ क्सस्याचीति (उ७२पृ०) अल्लोपः। अविक्षत। अविक्षाताम्। अविक्षन्त ३। अत आ गणान्तात्परस्मैपदिनश्छान्दसाश्च। घृ १ क्षरणदीप्त्योः। "जिघर्म्यग्निं हविषा घृतेन"। भृञामित्(उ१२८पृ०)। बहुलं छन्दसीति(उ५२७पृ०)इत्त्वम् हृ २ प्रसह्यहरणे। "अयं स्रुवोऽभि जिहर्ति होमान्"। ऋ सृ गतौ। बहुलञ्छन्दसीत्येव(उ५२७पृ०)सिद्धे

अर्त्तिपिपर्त्त्योश्चेति (७।४।७७) इत्त्वविधानादयम्भाषायामपि । अभ्यासस्यासवर्णे (६।४।७८) इतीयङ् । इयर्त्ति । इयृतः । इयृति । आर । आरतुः । इडत्त्यर्त्तीति (७।२।६६) नित्यमिट् । आरिथ । अर्त्ता । अरिष्यति । इयराणि । ऐयः । ऐयृताम् । ऐयरुः । इयृयात् । अर्य्यात् । आरत् ३ । ससर्त्ति ४ । भस भर्त्सनदीप्त्योः । बभस्ति । घसिभसोर्हलीति (६।४।१००) उपधालोपः । झलो झलीति (८।२।२६) सलोपः । बब्धः । भस्यति ५ । कि ज्ञाने । चिकेति ६ । तुर त्वरणे । तुतोर्त्ति । तुतूर्त्तः । तुतुरति ७ । धिष शब्दे । दिधेष्टि । दिधिष्टः ८ । धन धान्ये । दधन्ति । दधन्तः । दधनति ९ । जन जनने । जजन्ति ।

**जनसनखनां सञ्झलोः । ६ । ४ । ४२ ।**

एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ क्ङिति च । जजातः । जज्ञति । जजंसि । जजान । जजन्यात् जजायात् (१) जन्यात्-जायात् १० । गा स्तुतौ । "देवान् जिगाति सुम्नयुः" । जिगीतः । जिगति ११ ।

इति जुहोत्यादयः ।

---

(१) ये विभाषेति (६।४।४३) पक्षे आत्त्वम् ।

दिवु क्रीड़ाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्ति-गतिषु। भूषन्ताः (७।२४४०) परस्मैपदिनः।

## दिवादिभ्यः श्यन्। ३। १। ६९।

शपोऽपवादः। हलि चेति (१५७४०) दीर्घः। दीव्यति। दिदेव। देविता। देविष्यति। दीव्यतु। अदीव्यत्। दीव्येत् दीव्यात्। अदेवीत्। अदेविष्यत् १। षिवु तन्तुसन्ताने। परि-षीव्यति। परिषिषेव। न्यषेवीत्- न्यसेवीत् २। स्रिवु ३ गतिशोषणयोः। ष्ठिवु ४ निरसने। केचिदिहेमन्न पटन्ति। ष्णुसु अदने। आदान इत्येके। अदर्शन इत्यपरे। सुष्णोस ५। ष्णसु निरसने। स्नस्यति। सस्नास ६। क्नसु ह्वरणदीप्त्योः। ह्वरणं कौटिल्यम्। चक्नास ७। व्युष दाहे। वुव्योष ८। प्लुष ९ च। नृती गात्रविक्षेपे। नृत्यति। ननर्त्त।

## सेऽसिचि कृतचृतच्छृदतृदनृतः।७।२।५७।

एभ्यः परस्य सिज्भिन्नस्य सादेरार्द्धधातुकस्य इड्वा स्यात्। नर्त्तिष्यति- नर्त्स्यति। नृत्येत्। नृत्यात्। अनर्त्तीत् १०। त्रसी उद्वेगे। वा भ्राशेति (७६४४०) श्यन्वा। त्रस्यति--त्रसति। त्रेसतुः तत्रसतुः ११। कुथ १२ पूतीभावे। पूतीभावो दौर्गन्ध्यम्। पुथ १३ हिंसायाम्। गुध १४ परिवेष्टने। क्षिप प्रेरणे। क्षिप्यति। क्षेप्ता १५। पुष्प विकसने। पुष्प्यति। पुपुष्प १६। तिम ष्टिम ष्टीम आर्द्रीभावे। तिम्यति १७।

स्निग्ध्यति १८। स्तीम्यति १९। व्रीड् चोदने लज्जायाञ्च। व्रीड्यति २०। इष गतौ। इष्यति २१। षह षुह चक्यर्थे। चक्यर्थस्तृप्तिः। सह्यति २२। सुह्यति २३। जॄ झॄष् वयोहानौ जीर्य्यति। जजरतुः-जेरतुः। जरिता-जरीता। जीर्य्येत्। जीर्य्यात्। जॄस्तम्भ्विव्यङ्(७४६पृ०) वा। ऋदृशोऽङीति(७१०४पृ०) गुणः। अजरत्-अजारीत्। अजारिष्टाम् २४। झीर्य्यति। जझरतुः। अझारीत् २५। षूङ् प्राणिप्रसवे। सूयते। सुषुवे। स्वरतिसूतीति (७२९६पृ०) विकल्पं बाधित्वा श्र्युकः क्कितीति (७९७पृ०)निषेधे प्राप्ते क्रादिनियमा(७४८पृ०)न्नित्यमिट्। सुषुविषे सुषुविवहे। सोता-सविता १। दूङ् परितापे। दूयते २। दीङ् क्षये। दीयते।

## दीङो युडचि क्ङिति। ६।४।६३।

दीङः परस्याजादेः क्ङित आर्द्धधातुकस्य युट् स्यात्। वुग्युटावुवङ्यणोः (१) सिद्धौ। दिदीये।

## मीनातिमिनोतिदीङां ल्यपि च। ६।१।५०।

एषामात्त्वं स्यात् ल्यपि। चकारादशित्येज्निमित्ते। दाता। दास्यते। अदास्त। अदास्थाः ३। डीङ् विहायसा गतौ। डीयते ४। धीङ् आधारे। धीयते। दिध्ये। धेता ५।

(१) आभीयत्वेनासिद्धत्वमाशङ्क्याह वुग्युटाविति उवङ्यणोरिति प्रसङ्गे सतीत्यादि तथाच दिदीये इत्यत्र परमपि यणं बाधित्वा नित्यत्वादादौ युट् सति तु यणि ईकारश्रवणं न स्यादिति युट् सिद्धत्वम्।

मीङ् हिंसायाम्। हिंसात्र प्राणवियोगः। मीयते ६। रीङ् श्रवणे। रीयते ७। लीङ् श्लेषणे।

## विभाषा लीयतेः। ६। १। ५१।

लीयतेरिति यका निर्द्देशो न तु श्यना। लीलीङोरात्त्वं वा स्यादेज्विषये ल्यपि च। लेता-लाता। लेष्यते लास्यते। एज्विषये किम् लीयते। लिल्ये ८। व्रीङ् वृणोत्यर्थे। व्रीयते। विव्रिये ९। स्वादयश्च। ओदितः(७२४७पृ०)। तत्फलन्तु निष्ठानत्वम्। पीङ् पाने। पीयते १०। माङ् माने। मायते। ममे ११। ईङ् गतौ। ईयते। अयाञ्चक्रे १२। प्रीङ् प्रीतौ। सकर्म्मकः। प्रीयते। पिप्रिये १३।

अथ परस्मैपदिनश्चत्वारः। शो तनूकरणे।

## ओतः श्यनि। ७। ३। ७१।

लोपः स्यात् श्यनि। श्यति। श्यतः। श्यन्ति। शशौ। शशतुः। शाता। शास्यति। विभाषा घ्राधेडिति (७६५पृ०) सिचो वा लुक् लुगभावे यमरमेति(७६५पृ०)इट्सकौ। अशात्। अशाताम्। अशुः। अशासीत्। अशासिष्टाम् १। छो छेदने। छ्यति २। षो अन्तकर्म्मणि। स्यति। ससौ। अभि-ष्यति। अभ्यष्यत्। अभि-ससौ ३। दो अवखण्डने। द्यति। ददौ। प्र-णि-दाता। देयात्। अदात् ४।

अथात्मनेपदिनः पञ्चदश। जनी प्रादुर्भावे।

## ज्ञाजनोर्ज्जा। ७। ३। ७९।

अनयोर्ज्जादेशः स्याच्छिति। जायते। जज्ञे। जज्ञाते। जज्ञिरे। जनिता। जनिष्यते। दीपजनेति वा (७६६८०) चिण्।

**जनिवध्योश्च। ७। ३। ३५।**

अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च। अजनि-अजनिष्ट १। दीपी दीप्तौ। दीप्यते। दिदीपे। अदीपि-अदीपिष्ट २। पूरी आप्यायने। पूर्य्यते। अपूरि—अपूरिष्ट-३। तूरी गतित्वरणहिंसनयोः। तूर्य्यते। तुतूरे ४। धूरी गूरी हिंसागत्योः। धूर्य्यते। दुधूरे ५। गूर्य्यते। जुगूरे ६। घूरी ७ जूरी ८ हिंसावयोहान्योः। शूरी ९ हिंसा-स्तम्भनयोः। चूरी १० दाहे। तप ११ ऐश्वर्य्ये वा। अयं धातुरैश्वर्य्ये वा तङ्श्यनौ लभते। अन्यदा तु शब्विकरणः परस्मैपदीत्यर्थः। केचित्तु वाग्रहणं वृतुधातोराद्यवयव-मिच्छन्ति (१)। तप्यते। तप्ता। तप्स्यते। पतेति व्यत्ययेन। पाठान्तरम्। "द्युतच्छामानियुतः पत्यमानः", । वृतु १२वरणे। वृत्यते। पक्षान्तरे। वावृत्यते। " ततो वावृत्यमाना सा राम-शालां न्यविक्षतेति" भट्टिः। क्लिश उपतापे। क्लिश्यते। क्लेशिता १३। काशृ दीप्तौ। काश्यते १४। वाशृ शब्दे। वाश्यते १५। ववाशे।

अथ पञ्च स्वरितेतः। मृष तितिक्षायाम्। मृष्यति मृष्यते। ममर्ष। ममृषे १। शुचिर् पूतीभावे। पूतीभावः क्लेदः। शुच्यति। शुच्यते। शुशोच। शुशुचे। अशुचत्—

(१) तथाच वावृतु वरणे इत्येवंधातुलाभः स चाग्रे उदाहरणे स्फुटीभविष्यति।

अशौषीत्। अशोषिष्ट २। णह बन्धने। नह्यति। नह्यते। ननाह। ननद्ध-नेहिथ। नेहे। नद्धा। नत्स्यति। अनात्सीत् ३। रञ्ज रागे। रज्यति। रज्यते ४। शप आक्रोशे। शप्यति। शप्यते ५।

अथैकादशानुदात्तेतः। पद गतौ। पद्यते। पेदे। पत्ता। पद्येत। पत्सीष्ट।

## चिण् ते पदः। ३। १। ६०।

पदेः च्लेश्चिण् स्यात्तशब्दे परे। प्र-ण्यपादि। अपत्साताम्। अपत्सत १। खिद दैन्ये। खिद्यते। चिखिदे। खेत्ता। अखित्त २। विद सत्तायाम्। विद्यते। वेत्ता ३। बुध अवगमने। बुध्यते। बुबुधे। बोद्धा। भोत्स्यते। भुत्सीष्ट। अबोधि—अबुद्ध। अभुत्साताम् ४। युध सम्प्रहारे। युध्यते। युयुधे। योद्धा। अयुद्ध ५। कथं युद्ध्यतीति। युधमिच्छतीति क्यच्। अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति वा। अनो:-रुध कामे। अनुरुध्यते ६। अण प्राणने। अण्यते। आणे। अणिता ७। अनेति दन्त्यान्तोऽयमित्येके। मन ज्ञाने। मन्यते। मेने। मन्ता ८। युज समाधौ। समाधिश्चित्तवृत्तिनिरोधः अकर्म्मकः। युज्यते। योक्ता ९। सृज विसर्गे। अकर्मकः। "संसृज्यते सरसिजैररुणांशुभिन्नैः"। ससृजिषे। स्रष्टा। स्रक्ष्यते। लिङ्सिचाविति(७।५।६०)कित्त्वान्न गुणो नाप्यम् (७१०४०सू०)। सृक्षीष्ट। असृष्ट। असृक्षाताम् १०

लिश अल्पीभावे। लिश्यते। लेष्टा। लेक्ष्यते। लिक्षीष्ट। अलिक्षत। अलिक्षाताम् ११।

अथागणान्तात्परस्मैपदिनः। "राधोऽकर्म्मकात् वृद्धावेव, ग०। एवकारो भिन्नक्रमः राधोऽकर्म्मकादेव श्यन्। उदाहरणमाह(२)वृद्धाविति। "यन्मह्यमपराध्यति" द्रुह्यतीत्यर्थः। "विराध्यन्तं क्षमेत कः"। द्रुह्यन्तमित्यर्थः। राध्यत्योदनः। सिध्यतीत्यर्थः। कृष्णाय राध्यति। दैवम्पर्य्यालोचयतीत्यर्थः। दैवस्य धात्वर्थे अन्तर्भावाज्जीवत्यादिवदकर्म्मकत्वम्। रराध रराधतुः। रराधिथ। राधो हिंसायामिति (७१४७सू०) एत्वाभ्यासलोपाविह न हिंसार्थस्य सकर्म्मकतया दैवादिकत्वायोगात्। राद्धा। रात्स्यति१। अयं स्वादि(७१४७सू०)श्चुरादिश्च। व्यध ताड़ने। ग्रहिज्येति (७१०६सू०)संप्रसारणम्। विध्यति। विव्याध। विविधतुः। विव्यद्ध-विव्यधिथ। व्यद्धा। व्यत्स्यति विध्येत्। विध्यात्। अव्यात्सीत् २। पुष पुष्टौ। पुष्यति। पुपोष। पुपोषिथ। पोष्टा। पोक्ष्यति। पुषादीत्यङ्(७७६सू०)। अपुषत् ३। शुष शोषणे। अशुषत् ४। तुष ५ प्रीतौ। दुष ६ वैकृत्ये। श्लिष आलिङ्गने। श्लिष्यति। शिश्लेष। श्लेष्टा। श्लेक्ष्यति।

श्लिषः। ३। १। ४६।

अस्मात्परस्यानिटश्च्लेः क्सः स्यात्। पुषाद्यङोऽपवादो नतु च्लिणः पुरस्तादपवादन्यायात्।

(२) उदाहरणमाहेति अकर्म्मकत्वप्रयोजकस्य कस्यचिदर्थस्येत्यर्थः। द्रोहोऽत्रा-

आलिङ्गने। ३। १। ४६।

श्लिषश्चुरालिङ्गनएव क्सो नान्यत्र। योगविभागसामर्थ्या-च्छलइगुपधादिति (७२५४०) अस्याप्ययं नियमः। आश्लिक्ष-त्कान्यां देवदत्तः। आलिङ्गन एवेति किम् समश्लिषज्जतुका-ष्ठम्। अङ्। प्रत्यासत्ताविह श्लिषिः। कर्म्मणि अनालिङ्गने सिजेव न तु क्सः। एकवचने चिण्। अश्लेषि। अश्लिक्षाताम्। अश्लिक्षत। अश्लिष्ठाः। अश्लिढ्वम् ७। शक विभाषितो मर्षणे। विभाषित इत्युभयपदीत्यर्थः। शक्यति शक्यते हरिन्द्रष्टुमक्तः। शशाक। शेकिथ-शशक्थ। शेके। शक्ता। शक्ष्यति। शक्ष्यते। अशकत्। अशक्त। सेट्कोऽयमित्येके। तन्मतेना-निट्कारिकासु लृदित्पठितः। शकिता। शकिष्यति ८। ष्विदा गात्रप्रक्षरणे। घर्म्मच्युतावित्यर्थः। अयं ञीदिति न्यासकारादयः। नेति हरदत्तादयः। स्विद्यति। सिष्वेद। सिष्वेदिथ। स्वेत्ता। अस्विदत् ६। क्रुध क्रोधे। क्रोद्धा। क्रोत्स्यति १०। क्षुध बुभुक्षायाम्। क्षोद्धा ११। कथं क्षुधित इति। सम्पदादिक्विबन्तात्तारकादित्वादितच् इति माधवः। वस्तुतस्तु वसतिक्षुधोरितीट्(७२५२४०)। शुध शौचे। शुध्यति। शुशोध। शोद्धा १२। षिधु संराद्धौ। ऊदित्पाठः प्रामा-दिकः। सिध्यति। सेद्धा। सेत्स्यति। असिधत् १३। रध हिंसासंराद्ध्योः। संराद्धिर्न्निष्पत्तिः। रध्यति। रधिजभोर चीति (७५७४०) नुम्। ररन्ध। ररन्धतुः।

---

कर्म्मकः। तथाच इद्धावित्यनेनैवाकर्मकत्वकथनं हरिभिसाकर्मकोऽपि यथा स्यात्। यथैवम् उदाहरणेनापि तथा दर्श्यते।

रधादिभ्यश्च। ७। २। ४५।

रध् नश् तृप् दृप् द्रुह मुह ष्णुह ष्णिह एभ्यो वलाद्यार्द्धधातुकस्य वेट् स्यात्। ररन्धिथ-ररद्ध। ररन्धिव-रेध्व।

नेट्यलिटि रधेः। ७। १। ६२।

लिड्वर्ज्जे इटि रधेर्नुम्न स्यात्। रधिता—रद्धा। रधिष्यति-रत्स्यति। अङि नुम्। अनिदितामिति (१७८४०) नलोपः। अरधत् १४। णश अदर्शने। नश्यति। ननाश। नेशतुः। नेशिथ।

मस्जिनशोर्झलि। ७। १। ६०।

नुम् स्यात्। ननंष्ठ। नेशिव-नेश्व। नेशिम-नेश्म। नशिता-नंष्टा। नशिष्यति—नङ्क्ष्यति। नश्येत्। नश्यात्। अनशत् *।
प्र-णश्यति।

नशेः षान्तस्य। ८। ४। ३६।

णत्वं न स्यात्। प्र-नंष्ट। अन्तग्रहणं भूतपूर्व्वप्रतिपत्त्यर्थम्। प्र-नङ्क्ष्यति। नशिष्यति १५। तृप प्रीणने। प्रीणनं तृप्तिस्तर्पणञ्च। "नाग्निस्तृप्यति काष्ठानाम्"। "पितृनतार्प्सीदिति" भट्टिः। इत्युभयत्र दर्शनात्। ततर्पिथ-तत्रप्थ-ततर्प्थ। तर्पिता-त्रप्ता-तर्प्ता। स्पृशमृशकृषेति (७।०४सू०) सिज्वा। अताप्सीत्-अत्राप्सीत्-अतर्पीत्-अतृपत् १६। दृप हर्षमोहनयोः। मोहनङ्गर्वः। दृप्यति १७ इत्यादि।

---

* नशिमन्योरलिट्येत्वं वक्तव्यमिति (६। ४। १२० सू० वा०) काशिका अत अलिटीति लुङि वुनिषेत्यर्थः तेन अनेशत् मेनकात्यादि।

"रधादिभ्यो वेट्कावमर्थमनुदात्तता" (४)।

द्रुह जिघांसायाम्। वा द्रुहमुहेति (१४७४सू०) वा घः पक्षे ढः। दुद्रोग्ध-दुद्रोढ-दुद्रोहिथ। द्रोहिता-द्रोग्धा-द्रोढा। द्रोहिष्यति-ध्रोक्ष्यति। धत्वघत्वयोस्तुल्यं रूपम्। अद्रुहत् १८। मुह वैचित्त्ये। वैचित्त्यमविवेकः। मुह्यति। मुमोहिथ-मुमोग्ध-मुमोढ। मोग्धा-मोढा-मोहिता। मोहिष्यति-मोक्ष्यति। अमुहत् १९। ष्णुह-उद्गिरणे। स्नुह्यति। सुष्णोह। सुष्णोहिथ-सुष्णोग्ध-सुष्णोढ। सुष्णुहिव-सुष्णुह्व। स्नोहिता-स्नोग्धा-स्नोढा। स्नोहिष्यति-स्नोक्ष्यति। अस्नुहत् २०। ष्णिह प्रीतौ। स्निह्यति। सिष्णेह २१। इत रधादयः समाप्ताः पुषादयस्तु आ गणान्तादिति सिद्धान्तः। शमु उपशमे।

## शमामष्टानां दीर्घः श्यनि। ७। ३। ७४।

शमादीनामित्यर्थः। प्र-णि-शाम्यति। शेमतुः। शेमिथ। शमिता। अशमत् १। तमु काङ्क्षायाम्। ताम्यति। तमिता। अतमत् २। दमु उपशमे। उपशमे इति ण्यन्तस्य तेन सकर्म्मकोऽयम् न तु शमिवदकर्म्मकः। अदमत् ३। श्रमु तपसि खेदे च। श्राम्यति। अश्रमत् ४। भ्रमु अनवस्थाने। वा भ्राशेति (७६४सू०) भ्रम्यति। तत्र कृते शमामष्टानामिति दीर्घः। भ्राम्यति। लुङ्यङ्। अभ्रमत्। शेषं(७८८सू०)भ्वादिवत् ५।

---

(४) अनुदात्ततेति अनिट्कारिकासु पाठात् आनुदात्तस्य चर्दुपधस्येति (७१०३सू०) विकल्पेन अम्।

क्षमू सहने। क्षाम्यति। चक्षमिथ-चक्षन्थ। चक्षमिव-चक्षण्व। चक्षमिम—चक्षण्म। क्षमिता-क्षन्ता ६। अयमषित्। भ्वादिस्तु (७६०पृ०) षित्।

"अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा"।

क्लमु ग्लानौ। क्लाम्यति। क्लामति। शमीव श्यन्यपि ष्ठिवुक्लम्वित्येव (७६४पृ०) दीर्घे सिद्धे शमादिपाठो घिनुणार्थः। अङ्। अक्लमत् ७। मदी हर्षे। माद्यति। अमदत् ८। शमादयोऽष्टौ गताः। असु क्षेपणे। अस्यति। आस। असिता।

## अस्यतेस्थुक्। ७। ४। १७।

अङि परे। आस्थत्। अस्य पुषादित्वादङि सिद्धे अस्यति वक्तीति (७११२पृ०) वचनन्तङर्थम्। तङ् तूपसर्गादस्यत्यूह्योरिति (७२४७पृ०) वक्ष्यते। पर्य्यास्थत् १। यसु प्रयत्ने।

## यसोऽनुपसर्गात्। ३। १। ७१।

## संयसश्च। ३। १। ७२।

श्यन्वा स्यात्। यस्यति-यसति। सं-यस्यति-सं-यसति। अनुपसर्गात्किम् प्र-यस्यति २। जसु मोक्षणे। जस्यति ३। तसु उपक्षये। दसु च। तस्यति। अतसत् ४। दस्यति। अदसत ५। वसु स्तम्भे। वस्यति। ववास। ववसतुः। न शसददेति (७२२पृ०) निषेधः। बशादिरयमिति मते तु। बेसतुः। बेसुः ६। व्युष विभागे। अयन्दाहे पठितः (७१२२पृ०)। अर्थभेदेन तङर्थं पुनः पठ्यते। अव्युषत् ७। औष्यादिः दन्त्यान्त्योऽयम् व्युसतीत्यन्ये। अयकारं वुष इत्यपरे। प्लुष दाहे। अप्लुषत् ८। पूर्वत (७१२२पृ०)

पाठ:सिजर्थइत्याङ्कः। तद्श्वादिपाठेन(उ७५पृ०)गतार्थमिति सुवचम्। विस प्रेरणे। विस्यति। अविसत् ९। कुस संश्लेषणे। अकुसत् १०। वुस ११ उत्सर्गे। मुस १२ खण्डने। मसी १३ परिणामे। परिणामो विकारः। समी इत्येके। लुठ १४ विलोड़ने। उच समवाये। उच्यति। उवोच। ऊचतुः। मा भवानुचत् १५। भृशु भ्रंशु अधःपतने। बभर्श। अभृशत् १६। अनिदितामिति (१७८पृ०) नलोपः। भ्रश्यति। अभ्रशत् १७। वृश वरणे। वृश्यति। अवृशत् १८। कृश तनूकरणे। कृश्यति १९। ञितृष २० पिपासायाम्। हृष २१ तुष्टौ। श्यन्नङौ भौवादिकात् (उ७५पृ०) विशेषः। रुष रिष हिंसायाम्। तीषसहेति (उ७४पृ०) वेट्। रोषिता-रोष्टा २२। रेषिता-रेष्टा २३। डिप २४ क्षेपे। कुप २५ क्रोधे। गुप २६ व्याकुलत्वे। युपु रुपु लुपु विमोहने। युप्यति २७। रुप्यति २८। लुप्यति। लोपिता २९। लुप्यतिः सेट्कः अनिट्कारिकासु लिपिसाहचर्यात्तौदादिकस्यैव (उ१५६पृ०) ग्रहणात्। लुभ गार्ध्ये। गार्ध्यमाकाङ्क्षा। तीषसहेति (उ७४पृ०) वेट्। लोभिता-लोब्धा। लोभिष्यति। लुभ्येत्। लुभ्यात्। अलुभत् ३०। श्वादेराकृतिगणत्वाल्लोभतीत्यपीत्याङ्कः। क्षुभ सञ्चलने। क्षुभ्यति ३१। णभ ३२ तुभ ३३ हिंसायाम्। क्षुभिनभितुभयो (उ७८पृ०) द्युतादौ क्र्यादौ (उ१६८पृ०) च पठ्यन्ते। तेषां द्युतादित्वादङ् सिद्धः। क्र्यादित्वात्श्ना सिज् भवत्येव। इह पाठस्तु श्यनर्थः। क्लिदू आर्द्रीभावे। क्लिद्यति। चिक्लेदिथ-चिक्लेत्थ। चिक्लिदिव-चिक्लिद्व। चिक्लिदिम-चिक्लिद्म। क्लेदिता-क्लेत्ता ३४।

ञिमिदा स्नेहने। मिदेर्गुणः (७८८०)। मेद्यति। अमिदत् २५। द्युतादि (७६१०) पाठादेव अमिदत् अमेदिष्टेति सिद्धे इह पाठोऽमेदीदिति मा भूदिति। द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः। ञिष्विदा २६ स्नेहनमोचनयोः। ऋधु वृद्धौ। आनर्ध। आर्धत् २७। गृधु अभिकाङ्क्षायाम्। अगृधत् २८। वृत् पुषादयो दिवादयश्च वृत्ताः। केचित्तु पुषादिसमाप्त्यर्थमेव वृत्करणम्। दिवादिस्तु भ्वादिवदाकृतिगणः। तेन क्षीयते मृग्यतीत्यादिसिद्धिरित्याहुः।

इति दिवादयः।

---

षुञ् अभिषवे। अभिषवः स्नपन, पीड़नं। स्नानं, सुरासन्धा-नञ्च। तत्र स्नानेऽकर्म्मकः।

स्वादिभ्यः श्नुः। ३। १। ७३।

सुनोति। सुनुतः। हुश्नुवोरिति (७८८पृ०) यण्। सुन्वन्ति सुन्वः-सुनुवः। सुन्वहे-सुनुवहे। सुषाव। सुषुवे। सोता। सुनु। सुनवानि। सुनवै। सुनुयात्। सूयात्। स्रुसुधू-ञ्भ्यः (७८८पृ०) इतीट्। असावीत्। असोष्ट। अभि-षुणोति। अभ्यषुणोत्। अभि-सुषाव।

सुनोतेः स्यसनोः। ८। ३। ११७।

स्ये सनि च परे सुञः षो न स्यात्। वि -सोस्यति १। षिञ् बन्धने। सिनोति। वि -सिनोति। सिषाय। सिष्ये। सेता २। शिञ् निशाने। तालव्यादिः। शेता ३। डुमिञ् प्रक्षे-पणे। मीनाति। मिनोतीति (७१२४पृ०) आत्वम्। ममौ। ममिथ-ममाथ। मिम्ये। माता। मीयात्। मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त ४। चिञ् चयने। प्र-णि-चिनोति।

विभाषा चेः। ७। ३। ५८।

अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि लिटि च। प्र-णि चिकाय-चिचाय। चिक्ये-चिच्ये। अचैषीत्। अचेष्ट ५। स्तृञ् आच्छादने। स्तृणोति। स्तृणुते। गुणोऽर्त्तीति (७८६पृ०) गुणः। स्तर्य्यात्।

ऋतश्च संयोगादेः। ७। २। ४३।

ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिट् वा स्यात्तङि। स्वरिषीष्ट-स्वृषीष्ट। अस्वरिष्ट-अस्वृत ६। क्षिञ् हिंसायाम्। क्षिणोति। क्षिणुते। चकार। चकर्थ। चक्रे। क्रियात्। कृषीष्ट। अकार्षीत्। अकृत ७। वृञ् वरणे।

## बभूथाततन्थजगृम्भववर्थेति निगमे।७।२।६४।

एषां वेदे इडभावो निपात्यते। तेन भाषायां थलीट्। ववरिथ। वव्रव। वव्रवहे। वरिता-वरीता।

## लिङ्सिचोरात्मनेपदेषु।७।२।४२।

वृङ्वृञ्भ्यामॄदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि।

## न लिङि।७।२।३६।

वॄतो लिङइटो दीर्घो न स्यात्। वरिषीष्ट-वृषीष्ट। अवारीत्। अवरिष्ट-अवरीष्ट-अवृत ८। धुञ् कम्पने। धुनोति। धुनुते। अधौषीत्। अधोष्यत् ६। दीर्घान्तोऽप्ययम्। धूनोति। धूनुते। स्वरतिसूतीति (७।२।४४) वेट्। दुधविथ-दुधोथ। क्रिति लिटि तु श्रुयुक इति (७।२।१३) निषेधं बाधित्वा क्रादिनियमान्नित्यमिट्। दुधुविव। स्तुसुधूञ्भ्य इति (७।२।७२) नित्यमिट्। अधावीत्। अधविष्ट-अधोष्ट १०।

अथ परस्मैपदिनः। टुदु उपतापे। दुनोति १। हि गतौ वृद्धौ च।

## हिनुमीना।८।४।१५।

उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात्। प्रहिणोति।

**हेरचङि। ७। ३। ५६।**

अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्नतु चङि। जिघाय २। पृ प्रीतौ। पृणोति। पपार ३। स्पृ प्रीतिपालनयोः। प्रीतिचलनयोरित्यन्ये। चलनञ्जीवनमिति स्वामी। स्पृणोति। पस्पार ४। स्मृ इत्येके। स्मृणोति ५। पृणोत्यादयस्त्रयोऽपि छान्दसा इत्याहुः। आप्लृ व्याप्तौ। आप्नोति। आप्नुतः। आप्नुवन्ति। आप्नुवः। आप्ता। आप्नुहि। लृदित्वादङ् (उ७६८०सू०)। आपत् ६। शक्लृ शक्तौ। अशकत् ७। राध साध संसिद्धौ। राध्नोति।

**राधो हिंसायाम्। ६। ४। १२३।**

एत्वाभ्यासलोपौ स्तः किति लिटि, सेटि थलि च। अपरेधतुः। रेधुः। रेधिथ। राद्धा ८। साध्नोति। साद्धा। असात्सीत्। असाद्धाम्।

अथ द्वावनुदात्तेतौ। अशू व्याप्तौ सङ्घाते च। अश्नुते।

**अश्नोतेश्च। ७। ४। ७२।**

दीर्घादभ्यासादवर्णात्परस्य नुट् स्यात् (१)। आनशे। अशिता-अष्टा। अशिष्यते-अक्ष्यते। अश्नुवीत। अशिषीष्ट अक्षीष्ट। आशिष्ट-आष्ट। आक्षाताम् १। ष्टिघ आस्कन्दने। स्तिघ्नुते। तिष्टिघे। स्तेघिता २।

---

(१) अत्र व्यथोलिटीत्यतो (उ८१सू०) लिटीति पदमनुवर्त्तते इति बोध्यम्।

अथ आ गणान्तात्परस्मैपदिनः। तिक तिग गतौ च। षादास्कन्दने। तिक्नोति १। तिग्नोति २। षघ हिंसायाम्। सघ्नोति ३। ञि धृषा प्रागल्भ्ये। धृष्णोति। दधर्ष। धर्षिता ४। दन्भु दम्भने। दम्भनन्दम्भः। दभ्नोति। ददम्भ। श्रन्थिग्रन्थिदम्भिसञ्जीनां लिटः किच्वं वेति व्याकरणान्तरम्। इहाप्याश्रीयत इत्युक्तम् (७१०२पृ०)। अनिदितामिति (१७८पृ०) नलोपः तस्याभीयत्वादसिद्धत्वेन एत्त्वाभ्यासलोपयोरप्राप्तौ। "दम्भेश्च एत्त्वाभ्यासलोपौ वक्तव्यौ *। देभतुः ददम्भतुः। इदं ‡ किच्वम्पिदपिद्विषयकमिति सुधाकरादयः तन्मते तिप्सिप्मिप्सु। देभ। देभिथ। देभ। इति रूपान्तरम्बोध्यम्। अपिद्विषयकमिति न्यासकारादिमते तु। ददम्भ। ददम्भिथ। ददम्भ इत्येव। दभ्यात् ५। ऋधु ६ वृद्धौ। तृप प्रीणन इत्येके। क्षुभ्नादित्वात् (३८३पृ०) णत्वं न। तृप्नोति। छन्दसि। आ गणान्तादधिकारोऽयम्। अह व्याप्तौ। अह्नोति १। दघ घातने पालने च। दघ्नोति २। चमु भक्षणे। चम्नोति ३। रि क्षि चिरि जिरि दाश दृ हिंसायाम्। रिणोति ४। क्षिणोति ५। अयं भाषायामपीत्येके। "न तद्यशः शस्त्रभृतां क्षिणोति"। ऋक्षीत्येकएवाजादिरित्यन्ये। ऋक्षिणोति। चिरिणोति ६। जिरिणोति ७। दाश्नोति ८। दृणोति ९। दृत्।

इति स्वादयः।

---

‡ इदं श्रन्थिग्रन्थि दम्भिसञ्जीनामिति सूत्रोक्तमित्यर्थः।

तुद व्यथने। इतः षट् स्वरितेतः।

**तुदादिभ्यः शः। ३। १। ७७।**

तुदति। तुदते। तुतोद। तुतोदिथ। तुतुदे। तोत्ता। अतौत्सीत्। अतुत्त १। णुद प्रेरणे। नुदति। नुदते। नुनोद। नुनुदे। नोत्ता २। दिश अतिसर्ज्जने। अतिसर्ज्जनं दानम्। देष्टा। दिक्षीष्ट। अदिक्षत्। अदिक्षत ३। भ्रस्ज पाके। ग्रहिज्येति(७१०पृ०) संप्रसारणम्। सस्य स्तुत्वेन शः। शस्य जश्त्वेन जः। भृज्जति। भृज्जते।

**भ्रस्जो रोपधयोरमन्यतरस्याम्। ६। ४। ४७।**

भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्द्धधातुके। मित्त्वादन्त्यादचः (२६पृ०) परः। स्थानषष्ठीनिर्द्देशाद्रोपधयोर्न्निवृत्तिः। बभर्ज्ज। बभर्ज्जतुः। बभर्ज्जिथ–बभर्ष्ठ। बभर्ज्जे। रमभावे। बभ्रज्ज। बभ्रज्जतुः। बभ्रज्जिथ। स्कोरिति(१६६पृ०) सलोपः। व्रश्चेति(१२०पृ०) षः। बभ्रष्ठ। बभ्रज्जे। भर्ष्टा-भ्रष्टा। भ्रक्ष्यति-भर्क्ष्यति। क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन। भृज्ज्यात्। भृज्ज्यास्ताम्। भर्क्षीष्ट-भ्रक्षीष्ट। अभार्क्षीत्—अभ्राक्षीत्। अभर्ष्ट—अभ्रष्ट ४। क्षिप प्रेरणे। क्षिपति। क्षिपते। क्षेप्ता। अक्षैप्सीत्। अक्षिप्त ५। कृष विलेखने। कृषति। कृषते। क्रष्टा-कर्ष्टा। कृष्यात्। कृक्षीष्ट। स्पृशमृशकृषेति (७१०४पृ०) सिज्वा। पक्षे क्सः। सिचि अम् वा। अक्राक्षीत्-अकार्क्षीत्-अकृक्षत्। तङि लिङ्सिचा-

विति (७५५पृ०) कित्त्वान्नेम्न । अव्रुष्ट, । अव्रुक्षाताम्, । अव्रुक्षत । अव्रुक्षत । अव्रुक्षाताम् । अव्रुक्षन्त ६ ।

ऋषि गतौ । परस्मैपदी । ऋषति । आनर्ष १ ।

जुषी प्रीतिसेवनयोः । आत्मनेपदिनस्त्वारः । जुषते १। ओ विजी भयचलनयोः । प्रायेणायमुत्पूर्व्वः । उद्विजते ।

**विज इट् । १ । २ । २ ।**

विजेः पर इडादिः प्रत्ययो ङिद्वत् । उद्विजिता । उद्विजिष्यते २ । ओ लजी ओ लस्जी व्रीडायाम् । लजते । लेजे३ । लज्जते । ललज्ज्जे ४ ।

अथ परस्मैपदिनः । ओ व्रश्चू छेदने । ग्रहिज्या (७१०६पृ०) इत्युति । वव्रश्च । वव्रश्चतुः । वव्रश्चिथ वव्रष्ठ । लिव्यभ्यासस्येति (७१०५पृ०) सम्प्रसारणम् रेफस्य ऋकारः उरत् । तस्याचः परस्मिन्निति (२४पृ०) स्थानिवद्भावात् न सम्प्रसारणे इति (१६१पृ०) वस्योत्त्वन्न । व्रश्चिता-व्रष्टा । व्रश्चिष्यति—व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत्—अव्राक्षीत् १ । व्यच व्याजीकरणे । विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत्-अव्यचीत् २ । व्यचेः कुटादित्वमनसीति तु नेह प्रवर्त्तते अनसीति पर्य्युदासेन कृन्मात्रविषयत्वात् । उछि उञ्छे । उञ्छति ३ । उछी विवासे । उच्छति ४ । ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु । ऋच्छत्यृतामिति (७८७पृ०)गुणः । (७४२पृ०सू०) द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । ऋच्छिता ५ । मिछ उत्क्लेशे । उत्क्लेशः पीडा । मिमिच्छ ।

अमिच्छीत् ६। जर्ज ७ चर्च ८ झर्झ ९ परिभाषणभर्त्सन-
योः। त्वच संवरणे। तत्वाच १०। ऋच स्तुतौ। आनर्च ११।
उज्ज १२ आर्जवे। उज्झ १३ उत्सर्गे। लुभ विमोहने। विमो-
हनमाकुलीकरणम्। लुभति। लोभिता-लोब्धा। लोभिष्यति
१४। रिफ कत्थनयुद्धनिन्दाहिंसादानेषु। रिफति। रिरेफ
१५। रिहेत्येके। "शिशुं न विप्रा मतिभीरिहन्ति" १६।
तृप तृन्फ तृप्तौ। आद्यः प्रथमान्तः। द्वितीयो द्वितीयान्तः।
द्वावपि द्वितीयान्तावित्यन्ये। तृपति। ततर्प। तर्पिता।
स्पृशमृशेति(उ।०४पृ०) सिज्विकल्पः पौषादिकस्यैव अङ्पवादृ-
त्वात् तेनात्र नित्यं सिच्। अतर्पीत् १७। तृम्फति। शस्य
ङित्वादनिदितामिति(१७८पृ०) नलोपे। शे तृम्फादीनां नुम्
वाच्यः*। आदिशब्दः प्रकारे। तेन येऽत्र नकारानुषक्तास्ते
तृन्फादयः। तृम्फन्ति। ततृम्फ। तृफ्यात् १८। तुप तुन्प
तुफ तुन्फ हिंसायाम्। तुपति १९। तुम्पति २०। तुफति
२१। तुम्फति २२। दृप दृन्फ उत्क्लेशे। प्रथमः प्रथमान्तः
द्वितीयो द्वितीयान्तः। प्रथमो-द्वितीयान्त इत्येके। दृपति
२३। दृफति २४। दृम्फति २५। ऋफ ऋन्फ हिंसायाम्।
ऋफति। आनर्फ २६। ऋम्फति। ऋम्फाञ्चकार २७। गुफ
गुन्फ ग्रन्थे। गुफति जुगोफ २८। गुम्फति। जुगुम्फ२९।
उभ उन्भ पूरणे। उभति। उवोभ ३०। उम्भति। उम्भा-
ञ्चकार ३१। शुभ शुन्भ शोभार्थे। शुभति ३२। शुम्भति३३।
दृभी ग्रन्थे दृभति ३४। चृती हिंसाग्रन्थनयोः। चर्त्तिता।
सेऽसिचीति (उ।२२पृ०) वेट्। चर्त्तिष्यति-चर्त्स्यति। अचर्त्तीत्

३५ विध विधाने। विधति। वेधिता ३६। जुड़ गतौ। तवर्ग-पञ्चमान्त इत्येके। जुड़ति३७। "मरुतो जुनन्ति"३८। मृड़ सुखने। मृड़ति। मर्ड्डिता ३९। पृड़ च। पृड़ति ४० पृण प्रीणने। पृणति। पपर्ण ४१। वृण च। वृणाति ४२। मृण ४३ हिंसायाम्। तुण कौटिल्ये। तुतोण ४४। पुण कर्म्मणि शुभे। पुणति४५। मुण४६ प्रतिज्ञाने। कुण४७ शब्दोपकरणयोः। शुन ४८ गतौ। द्रुण ४९ हिंसागतिकौटिल्येषु। घुण ५० घूर्ण ५१ भ्रमणे। षुर ऐश्वर्य्यदीप्त्योः। सुरति सुषोर। आशिषि सूर्य्यात् ५२। कुर शब्दे। कुरति। कूर्य्यात् ५३। अत्र न भकुर्छुरामिति (६२०सू०) निषेधो न, करोतेरेव तत्र ग्रहणादित्याहुः। खुर ५४ छेदने। मुर ५५. संवेष्टने। चुर ५६ विलेखने। घुर ५७ भीमार्थशब्दयोः। पुर ५८ अग्रगमने। उ(बृ)ह ५९ उद्यमने। दन्त्योष्ठ्यादिः। पवर्गीयादिरित्यन्ये। तृह स्तृह तृन्ह हिंसार्थाः। तृहति ततर्ह तर्हिता-तर्ढा ६०। स्तृहति। तस्तर्ह। स्तर्हिता-स्तर्ढा ६१। अतर्हीत्-अतार्क्षीत्। अतार्ढाम् ६२। इष इच्छायाम्। इषगमीति (७१०सू०) छः। इच्छति। एषिता-एष्टा। एषिष्यति। इष्यात्। ऐषीत्६३। मिष स्पर्द्धायाम्। मिषति। मेषिता६४। किल ६५ श्वैत्यक्रीड़नयोः। तिल६६ स्नेहे। चिल ६७ वसने। चल ६८ विलसने। इल ६९ स्वप्नक्षेपणयोः। विल७० संवरणे। दन्त्योष्ठ्यादिः। बिल७१ भेदने। ओष्ठ्यादिः णिल ७२ गहने। हिल७३ भावकरणे। शिल७४ षिल ७५ उञ्छे। मिल७६ श्लेषणे। लिख अक्षरविन्यासे। लिलेख ७७।

कुट कौटिल्ये। गाङ्कुटादिभ्य इति (भा१६४०) ङित्त्वम्। चुकुटिथ। चुकोट। चुकुट। कुटिता ७८। पुट ७६ संश्लेषणे। कुच ८० सङ्कोचने। गुज ८१ शब्दे। गुड ८२ रक्षायाम्। डिप ८३ क्षेपे। छुर छेदने। न भकुर्छुरा-मिति (६२०५०) न दीर्घः। छुर्य्यात् ८४। स्फुट विकसने। स्फुटति। पुस्फोट ८५। मुट ८६ आक्षेपप्रमर्द्दनयोः। तुट छेदने। वा भ्राशेति (७६४५०) श्यन्वा। तुट्यति-तुटति। तुतोट। तुटिता ८७। तुट कलहकर्मणि। तुटति। तुतोट। तुटिता ८८। चुट ८६ छुट ६० छेदने। जुट ६१ बन्धने। कड ६२ मदे। लुठ ६३ संश्लेषणे। कृड घनत्वे। घनत्वं सान्द्रता। चकर्ड। कृडिता ६४। कुड ६५ बाल्ये। पुड ६६ उत्सर्गे। घुट ६७ प्रतिघाते। तुड ६८ तोड़ने। तोड़नम्भेदः। थुड़ स्थुड़ संवरणे। थुड़ति। तुथोड़ ६६। तुस्थोड़ १००। खुड़ १०१ छुड़ १०२ इत्येके। स्फुर १०३ फुल १०४ सञ्चलने। स्फुर स्फुरणे। स्फुल सञ्चलने इत्येके।

## स्फुरतिस्फुलत्योर्निर्निविभ्यः। ८। ३। ७६।

षत्वं वा स्यात्। निः-ष्फुरति निः-स्फुरति। स्फर इत्यकारो-पधङ्केचित्पठन्ति। पस्फार १०५। स्फुड १०६ चुड १०७ व्रुड १०८ संवरणे। क्रुड १०६ भृड ११० निमज्जन इत्येके।

गुरी उद्यमने। अनुदात्तेत्। गुरते। जुगुरे। गुरिता। णू स्तवने। दीर्घान्तः। "परिणूतगुणोदयः"। इतश्चत्वारः परस्मैपदिनः। नुवति। अनुवीत् १। धू विधनने। धुवति २।

गु पुरीषोत्सर्गे। जुगुविथ-जुगुथ । गुता । गुष्यति । अगु-षीत्। ह्रस्वादङ्गात्(७८२४०) । अगुताम्। अगुषुः२ । ध्रु गति-स्थैर्ययोः। ध्रुव इति पाठान्तरम्। आद्यस्य ध्रुवतीत्यादि गुवतिवत्। द्वितीयस्तु सेट्। दुध्रुविथ । ध्रुविता । ध्रुविष्यति । ध्रुव्यात्। अध्रुवीत्। अध्रुविष्यत् ४ ।

कुङ् शब्दे । दीर्घान्त इति कैयटादयः। कुविता । अकुविष्ट १ । ह्रस्वान्त इतिन्यासकारः । कुता । अकुत । इत् कुटादयो(७८) वृत्ताः ।

पृङ् व्यायामे। प्रायेण व्याङ्पूर्वः। रिङ् (७८२४०श्लो०) इयङ्। व्या-प्रियते। व्या-पप्रे। व्या-पप्राते। व्या-परिष्यते। व्या-पृषाताम् १ । मृङ् प्राणत्यागे।

## म्रियतेर्लुङ्लिङोश्च।१।३।६१।

लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । ङित्त्वं स्वरार्थम् । म्रियते। ममार। ममर्थ। मम्रिव। मर्तासि। मरिष्यति। मृषीष्ट। अमृत।

अथ परस्मैपदिनः सप्त। रि पि गतौ लघूपधगुणात् अन्तरङ्गत्वादियङ्। रियति। रेता १। पियति। पेता २। धि ३ धारणे। क्षि ४ निवासगत्योः। षु प्रेरणे। सुवति। सविता ५। कॄ विक्षेपे। किरति। किरतः। चकार। चकरतुः। करिता—करीता। कीर्यात्। अकारीत्।

## किरतौ लवने।६।१।१४०।

उपात्किरतेः सुडागमः स्याच्छेदेऽर्थे। उप-स्किरति। अड-

भ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम् *। उपास्किरत्। उप—चस्कार।

### हिंसायाम्प्रतेश्च। ६। १। १४१।

उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम्। उप-स्किरति। प्रति-स्किरति ६। गॄ निगरणे।

### अचि विभाषा। ८। २। २१।

गिरतेः रेफस्य लत्वं वा स्यादजादौ। गिरति-गिलति। जगार-जगाल। जगरिथ-जगलिथ। गरि(री)ता-गलि(ली)ता ७।

दृङ् आदरे। आ-द्रियते। आ-द्रियेते। आ-दद्रे। आ-दद्रिषे। आ-दर्त्ता। आ-दरिष्यते। आ-दृषीष्ट। आदृत। आदृषाताम् १। धृङ् अवस्थाने। ध्रियते २।

अथ परस्मैपदिनः षोडश। प्रच्छ ज्ञीप्सायाम्। पृच्छति। पप्रच्छ। पप्रच्छतुः। पप्रच्छिथ—पप्रष्ठ। प्रष्टा। प्रक्ष्यति। अप्राक्षीत् १। वृत् किरादयो वृत्ताः। सृज विसर्गे। विभाषा सृजिदृशोः (उ १०४पृ०)। ससर्जिथ-सस्रष्ठ। स्रष्टा स्रक्ष्यति। सृजिदृशोर्झल्यमकितीति (उ १०४पृ०) अमागमः। सृजेत्। सृज्यात्। अस्राक्षीत् २। टु मस्जो शुद्धौ। मज्जति। ममज्ज। मस्जिनशोर्झलीति(उ १४०पृ०) नुम्। मस्जेरन्त्यात्पूर्वो नुम् वाच्यः●। संयोगादिलोपः(१६६पृ०स्०)। ममङ्क्थ-ममज्जिथ। मङ्क्ता। मङ्क्ष्यति। अमाङ्क्षीत्। अमाङ्क्ताम्। अमाङ्क्षुः ३। रुजो भङ्गे। रोक्ता। रोक्ष्यति। अरौक्षीत्। अरौक्ताम् ४। भुजो ५ कौटिल्ये। रुजिवत्। छुप

स्पर्शे। क्षोप्ता। अक्षौप्सीत् ६। रुश रिश हिंसायाम्। तालव्यान्तौ। रोष्टा। रोक्ष्यति ७। रेष्टा। रेक्ष्यति८। लिश गतौ। अलिक्षत् ९। स्पृश संस्पर्शने। स्प्रष्टा-स्पर्ष्टा। स्प्रक्ष्यति-स्पर्क्ष्यति। अस्प्राक्षीत्-अस्पार्क्षीत्-अस्पृक्षत् १०। विच्छ गतौ। गुपधूपेत्याय: (७५७४०)। आर्द्धधातुके वा (७५७४०) विच्छायति। विच्छायाञ्चकार विविच्छ ११। विश प्रवेशने। विशति। वेष्टा १२। मृश आमर्शने। आमर्शनं स्पर्शः। अम्राक्षीत्—अमार्क्षीत्—अमृक्षत् १३। णुद १४। प्रेरणे कर्त्रभिप्रायेऽपि फले परस्मैपदार्थः पुनः पाठः। षद्लृ विशरणगत्यवसादनेषु। सीदति १५ इत्यादि भौवादिक(७८६४०) वत् इह पाठो नुम्विकल्पार्थ:। सीदती-सीदन्ती। ज्वलादौ (७६०४०) पाठस्तु णार्थः। सादः। स्वरार्थश्च, शबनुदात्त: शस्तूदात्तः। शद्लृ १६ शातने। स्वरार्थएव पुन:पाठः शता तु नास्ति शदेः शितआत्मनेपदोक्तेः (७६०४०)।

अथ षट् स्वरितेतः मिल सङ्गमे। मिल श्लेषणे इति(७१५२४०) पठितस्य पुन:पाठः कर्त्रभिप्राये तङर्थः। मिलति। मिलते। मिमेल। मिमिले १। मुच्लृ मोचणे।

शे मुचादीनाम्। ७। १। ५९।

नुम् स्यात्। मुञ्चति। मुञ्चते। मोक्ता। मुच्यात्। मुक्षीष्ट। अमुचत्। अमुक्त। अमुचाताम् २ लुप्लृ छेदने। लुम्पति। लु[illegible]। अलुपत्। अलुप्त ३। विद्लृ लाभे। विन्दति। विन्दते। विवेद। विविदे। व्याघ्रभूत्यादिमते सेट्कोऽयम्।

वेदिता। भाष्यादिमतेऽनिट्कः। वेत्ता ४। परिवेत्ता। परिवर्ज्जने ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः। लृन्तृचौ। लिप उपदेहे। उपदेहो वृद्धिः। लिम्पति। लिम्पते। लेप्ता। लिपिसिचीत्यङ् (उ१०८४०)। तङि तु वा। (उ१०८४०) अलिपत्। अलिपत-अलिप्त ५। षिच क्षरणे। सिञ्चति। सिञ्चते। असिचत्। असिचत-असिक्त। अभि-षिञ्चति। अभ्यषिञ्चत्। अभि-षिषेच ६।

अथ त्रयः परस्मैपदिनः। कृती छेदने। कृन्तति। चकर्त्त। कर्त्तिता। कर्त्तिष्यति—कर्त्स्यति। अकर्त्तीत् ७ खिद परिधाने। खिन्दति। चिखेद। खेत्ता २। अयन्दैन्ये दिवादौ (उ१२७४०) रुधादौ (उ१५९४०) च। पिशि अवयवे। पिंशति। पेशिता ३। अयन्दीपनायामपि। 'त्वष्टा रूपाणि पिंशतु। वृत् मुचादय स्तुदादयश्च।

इति तुदादयः।

---

रुधिर् आवरणे। नव स्वरितेत इरितश्च।

**रुधादिभ्यः श्नम्। ३। १। ७८।**

शपोऽपवादः। मिदचोऽन्त्यात्परः (१२२४ सू०) परः नित्यत्वाङ्गुणम्बाधते। रुणद्धि। श्नसोरल्लोपः (७२६१ सू०)। णत्वस्यासिद्धत्वादनुस्वारः परसवर्णः तस्यासिद्धत्वात् णत्वन्न "न पदान्तेति (२५४ सू०) सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवत्। रुन्धः। रुन्धन्ति। रुन्धे। रोद्धा। रोत्स्यति। रोत्स्यते। रुणद्धु। रुन्ध्यात्। रुन्द्धि। रुणधानि। रुणधै। अरुणत्। अरुन्धाम्। अरुणत्-अरुणः। अरुणधम्। अरुधत्-अरौत्सीत्। अरुद्ध १ भिदिर्-विदारणे भिनत्ति। भिन्ते। भेत्ता। भेत्स्यति। अभिनत्-अभिनः। अभिनदम्। अभिन्त। अभिदत्-अभैत्सीत्। अभित्त २। छिदिर् द्वैधीकरणे। अच्छिदत्-अच्छैत्सीत्। अच्छित्त ३। रिचिर् विरेचने। रिणक्ति। रिङ्क्ते। रिरेच। रिरिचे। रेक्ता। अरिणक्। अरिचत्-अरैक्षीत्। अरिक्त ४। विचिर् पृथग्भावे। विनक्ति। विङ्क्ते ५ क्षुदिर् सम्पेषणे। क्षुणत्ति। क्षुन्ते। क्षोत्ता। अक्षुदत्-अक्षौत्सीत्। अक्षुत्त ६। युजिर् योगे ७। उछृदिर् दीप्तिदेवनयोः। छृणत्ति। छृन्ते। चच्छर्द। सेऽसिचीति (७१२२सू०) वेट्। चच्छृदिषे-चच्छृत्से। छर्दिता। छर्दिष्यति—छर्त्स्यति। अच्छृदत्-अच्छर्दीत्। अच्छर्दिष्ट। उतृदिर्-हिंसानादरयोः। तृणत्ति ८ इत्यादि।

कृती वेष्टने। परस्मैपदी। कृणत्ति १। आर्द्धधातुके तौदादिकवत् (७३५७सू०)।

ञिइन्धी दीप्तौ। त्रयआत्मनेपदिनः।

## श्नान्नलोपः। ६। ४। २३।

श्नमः परस्य नस्य लोपः स्यात् श्नसोरल्लोपः(७।२२४०)। इन्धे। इन्त्से। इन्धिता। इन्धै। ऐन्ध। ऐन्धाः १। खिद दैन्ये। खिन्ते। खेत्ता २। विद विचारणे। विन्ते। वेत्ता ३।

अथ परस्मैपदिनः। शिष्लृ विशेषणे। शिनष्टि। शिंष्टः। शिंषन्ति। शिशेषिथ। शेष्टा। शेक्ष्यति। हेर्धिः। जश्त्वम्। झरो झरीति (४२४०) वा डलोपः अनुस्वारपरसवर्णौ। शिण्ढि शिण्ड्ढि। शिनषाणि। अशिनट्। लृदित्वादङ् (७६४०सू०)। अशिषत् १। पिष्लृ सञ्चूर्णने। शिषिवत्। पिनष्टि २। भञ्जो आमर्दने। भनक्ति। बभञ्जिथ— बभङ्क्थ। भङ्क्ता ३। भुज पालनाभ्यवहारयोः। भुनक्ति। भोक्ता। भोक्ष्यति। अभुनक् ४। तृह हिसि हिंसायाम्।

## तृणह इम्। ७। ३। ९२।

तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति। तृणेढि। तृण्ढः। ततर्ह। तर्हिता। अतृणेट् ५। हिनस्ति। जिहिंस। हिंसिता ६। उन्दी क्लेदने। उनत्ति। उन्तः। उन्दति। उन्दाञ्चकार। औनत्। औन्ताम्। औन्दन्। औनः— औनत्। औनदम् ७। अञ्जू व्यक्तिमर्षणकान्तिगतिषु अनक्ति। अङ्क्तः। अञ्जन्ति। आनञ्ज। आनञ्जिथ आनङ्क्थ। अङ्क्ता अञ्जिता। अङ्ग्धि। अनजानि। आनक्

अञ्जेः सिचि। ७। २। ७१।

अञ्जेः सिचो नित्यमिट् स्यात्। आञ्जीत् ८। तञ्चू सङ्कोचने। तङ्क्ता—तञ्चिता ९। ओ वीजी भयचलनयोः। विनक्ति। विङ्क्तः। विज इडिति (७१५०पृ०) ङित्त्वम्। विविजिथ। विजिता। अविनक्। अविजीत् १०। वृजी वर्ज्जने। वृणक्ति। वर्ज्जिता ११। पृची सम्पर्के। पृणक्ति। पपर्च १२।

इति रुधादयः।

---

अथ सप्त स्वरितेतः। तनु विस्तारे। तनादिकृञ्भ्य उः (७।२।१४०) तनोति। तन्वः तनुवः। तनुते। ततान। तेने। तनु। अतनीत्-अतानीत्।

तनादिभ्यस्तथासोः। २।४।७९।

तनादेः सिचो वा लुक् स्यात्तथासोः। थासा साहचर्य्यादेक-वचनान्तस्तशब्दो गृह्यते। तेनेह न। यूयमतनिष्ट अतानिष्ट। अनुदात्तोपदेशेति(७।१०४०)अनुनासिकलोपः तङि। अतत-अतनिष्ट। अतथाः-अतनिष्ठाः १। षणु दाने। सनोति। सनुते। ये विभाषा (७६१४०)। सायात्-सन्यात्। जनसनेति-(७।२२४०) आत्वम्। असात असनिष्ट। असाथाः-अस-निष्ठाः २। क्षणु हिंसायाम्। क्षणोति। क्षणुते। ह्म्यन्तेति (७५१४०) न वृद्धिः। अक्षणीत्। अक्षत-अक्षणिष्ट। अक्षथा-अक्षणिष्ठाः ३। क्षिणु च उप्रत्ययनिमित्तो लघूपधगुणः संज्ञापूर्व्वको विधिरनित्य इति न भवतीत्यात्रेयादयः। भव-त्येवेत्यन्ये। क्षिणोति--क्षेणोति। क्षेणितासि। क्षेणितासे। अक्षेणीत्। अक्षित-अक्षेणिष्ट ४। ऋणु गतौ। ऋणोति-अ-र्णोति अर्णुतः। अर्णुवन्ति। आनर्ण। आनृणे। अर्णितासि आर्णीत्। आर्त्त-आर्णिष्ट। आर्थाः-आर्णिष्ठाः ५। तृणु अदने। तृणोति-तर्णोति। तृणुते तर्णुते ६। घृणु दीप्तौ। जघर्ण जघृणे ७।

अथ द्वावनुदात्तेतौ। वनु याचने। वनुते। ववने। चान्द्रमते परस्मैपदी। वनोति ववान १। मनु अवबोधने। मनुते। मेने २।

डुकृञ् करणे। करोति। अत उत्सार्व्वधातुके(७।२।४०) कुरुतः। यण्। न भकुर्छुरामिति(६२०४०)न दीर्घः। कुर्वन्ति।

**नित्यङ्करोतेः। ६। ४। १०८।**

करोतेः प्रत्ययोकारस्य नित्यं लोपः स्याद्वमोः परयोः। कुर्वः। चकर्थ। कर्त्ता। चकृव। करिष्यति।

**ये च। ६। ४। १०९।**

कृञ उलोपः स्याद्यादौ प्रत्यये परे। कुर्यात्। आशिषि। क्रियात्। कृषीष्ट। अकार्षीत्। तनादिभ्य इति(७।६।१४०)लुकोऽभावे ह्रस्वादङ्गादिति(८२४०)सिचो लोपः। अकृत। अकृथाः।

**सम्पर्य्युपेभ्यः करोतौ भूषणे। ६। १। १३७।**

**समवाये च। ६। १। १३८।**

सम्परिपूर्व्वस्य करोतेः सुट् स्याद्भूषणे सङ्घाते चार्थे। सं-स्करोति। अलङ्करोतीत्यर्थः सं-स्कुर्वन्ति। सङ्घीभवन्तीत्यर्थः। सम्पूर्व्वस्य क्वचिदभूषणेऽपि सुट्। संस्कृतम्भक्ष्या इति (५२८४०)ज्ञापकात्। परिनिविभ्य इति (७३८४०)षः। परि-ष्करोति। सिवादीनां वा (७८९४०)पर्य्यष्कार्षीत्-पर्य्यस्कार्षीत्।

**उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च। ६। १। १३९।**

उपात्कृञः सुट् स्यादेष्वर्थेषु। चात्प्रागुक्तयोरर्थयोः। प्रति-

यतो गुणाधानम्। विकृतमेव वैकृतं विकारः। वाक्यस्याध्याहारः आकाङ्क्षितैकदेशपूरणम्। उपस्कृता कन्या अलंकृतेत्यर्थः। उपस्कृता ब्राह्मणाः समुदिता इत्यर्थः। एधोदकस्योपस्कुरुते। गुणाधानङ्करोतीत्यर्थः। उप-स्कृतम्भुङ्क्ते विकृतमित्यर्थः। उपस्कृतं ब्रूते वाक्याध्याहारेण ब्रूते इत्यर्थः।

सुट् कात्पूर्व्वः। ६। १। १३५।

अडभ्यासव्यवायेऽपीत्युक्तम् (उ२८४०)। सं-चस्कार। कात्पूर्व इत्यादि भाष्ये प्रत्याख्यातम्। तथाहि पूर्वं धातुरुपसर्गेण युज्यते अन्तरङ्गत्वात्सुट् ततो द्वित्वम्। एवञ्च ऋतश्च संयोगादेर्गुणः (उ३६६४०)। सञ्चस्करतुः। क्रसृभृवृस्तु (उ४८४०) ऋतो भारद्वाजस्येति सूत्रे(उ४६४०) च क्रञोऽसुट इति वक्तव्यम् *। तेन ससुट्कात्परस्येट्। सञ्चस्करिथ। सञ्चस्करिव। गुणोऽर्त्तीति(उ६६४०) सूत्रे नित्यञ्छन्दसीति (उ५२२४०) सूत्रान्नित्यमित्यनुवर्त्तते नित्यं यः संयोगादिस्तस्येत्यर्थात्सुटि गुणो न। संस्क्रियात्। ऋतश्च संयोगादेरिति(उ१४५४०)लिङ्सिचोर्नेट् एकाच उपदेशे इति(उ२५४०) सूत्रादुपदेश इत्यनुवर्त्तत्र उपदेशे यः संयोगादिरिति व्याख्यानात्। सं-स्कृषीष्ट। समस्कृत। समस्कृषाताम्।

इति तनादयः।

डु क्री ञ् द्रव्यविनिमये।

## क्र्यादिभ्यः श्ना। ३। १। ८१।

क्रीणाति। ई हल्यघोः (१३०७पृ०)। क्रीणीतः। ईत्वात्पूर्वं श्नेरन्तादेशः परत्वान्नित्यत्वादन्तरङ्गत्वाच्च। एवं श्नस्याङ्गाव। (७४८पृ०सू०)ततः श्नाभ्यस्तयोरिति(७।२५पृ०)श्नाल्लोपः। क्रीणन्ति। क्रीणीते। क्रीणाते। क्रीणते। चिक्राय। चिक्रियतुः चिक्रयिथ-चिक्रेथ। चिक्रियिव। चिक्रियिषे। क्रेता। क्रेष्यति। क्रीयात्। क्रेषीष्ट। अक्रैषीत्। अक्रेष्ट१। प्रीञ् तर्पणे कान्तौ च। कान्तिः कामना। प्रीणाति प्रीणीते १। श्रीञ् २ पाके। मीञ् हिंसायाम्। हिनुमीना (७१४६पृ०) प्र-मीणातित। प्र-मीणीतः। मीनातिमिनोतीत्येज्विषये(७१३४पृ०) आत्वम्। ममौ। मिम्यतुः। ममिथ-ममाथ। मिम्ये। माता। मास्यति। मीयात्। मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त ४। षिञ् बन्धने। सिनाति। सिनीते। सिषाय। सिष्ये। सेता ५। स्कुञ् आप्रवणे।

## स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यश्च। ३। १। ८२।

चात् श्ना। स्कुनोति—स्कुनाति। स्कनुते-स्कुनीते। चुस्काव चुस्कुवे। स्कोता। अस्कौषीत्। अस्कोष्ट ६। स्तन्भ्वादयश्चत्वारः सौत्राः सर्वे रोधनार्था इत्येके। माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ द्वितीयो निष्कोषणार्थः चतुर्थो धारणार्थ इत्याह। सर्वे परस्मैपदिनः। नलोपः (७१७८पृ०सू०) वि-ष्ट

भ्नोति-वि-ष्टभ्नाति। अव-ष्टभ्नोति-अव-ष्टभ्नाति। अव-तष्टम्भ। जृस्तन्भ्वित्यङ् वा(उ४६१०)। व्यष्टभत् व्यष्टम्भीत्। स्तुभ्नोति-स्तुभ्नाति।

## वेः स्कभ्नातेर्नित्यम्। ८। ३। ७७।

वेः परस्य स्कभ्नातेः सस्य षः स्यात्। वि-ष्कभ्नोति-वि-ष्कभ्नाति। स्कुभ्नोति-स्कुभ्नाति।

## हलः श्नः शानज्झौ। ३। १। ८३।

हलः परस्य श्नः शानजादेशः स्याद्धौ परे। स्तभान। स्तुभान। स्कभान। स्कुभान। पक्षे स्तभ्नुहीत्यादि। युञ् बन्धने। युनाति। युनीते। योता ७। क्नूञ् शब्दे। क्नूनाति। क्नूनीते ८। क्नविता। द्रूञ् हिंसायाम्। द्रूणाति। द्रूणीते ९। पूञ् पवने।

## प्वादीनां ह्रस्वः। ७। ३। ८०।

शिति परे। पुनाति। पुनीते। पविता १०। लूञ छेदने। लुनाति। लुनीते ११। स्तॄञ् आच्छादने। स्तृणाति। स्तृणीते। तस्तार। तस्तरतुः। स्तरिता-स्तरीता। स्तृणीयात्। स्तृणीत। आशिषि। स्तीर्यात्। लिङ्सिचोरिति (उ१४६१०) वेट्। न लिङीति (उ१४६१८) वृतइटो लिङि दीर्घो न स्यात्। स्तरिषीष्ट। उश्चेति (उ८३१०) कित्त्वम्। स्तीर्षीष्ट। सिचि च परस्मैपदेष्विति (उ१००१०) न दीर्घः। अस्तारीत्। अस्तारिष्टाम्। अस्तरिष्ट-अस्तरीष्ट-अस्तीर्ष्ट १२। कॄञ् हिंसायाम्। कृणाति। कृणीते।

चकार। चकरे १३। वॄञ् वरणे। वृणाति। वृणीते। ववार। ववरे। वरिता-वरीता। आशिषि। उदोष्ठ्यपूर्व्वस्य (उ१२८४पृ०) (१)। वूर्यात्। वरिषीष्ट-वूर्षीष्ट। अवारीत्। अवारिष्टाम्। अवरिष्ट-अवरीष्ट-अवूर्ष्ट १४। धूञ् कम्पने। धुनाति। धुनीते। दुधविथ-दुधोथ। दुधुविव। धोता-धविता। स्वरतिसूतिसूयतिधूञूदितो वा इतीट् (उ६८८पृ०)। अधावीत्। अधविष्ट अधोष्ट १५।

अथ बध्नात्यन्ताः परस्मैपदिनः। शॄ हिंसायाम्। शॄदॄप्रां ह्रस्वो वेति (उ१२८४पृ०) ह्रस्वपक्षे यण् अन्यदा ऋच्छत्यॄतामिति (उ८७१पृ०) गुणः। शश्रतुः-शशरतुः। श्र्युकः किति (उ८७१पृ०) निषेधस्य क्रादिनियमेन बाधः। शशरिव-शश्रिव। शरिता-शरीता। शृणीहि। शीर्य्यात्। अशारिष्टाम् १। पॄ पालनपूरणयोः। पप्रतुः-पपरतुः। आशिषि। पूर्य्यात् २। वॄ ३ वरणे। भरण इत्येके। भॄ ४ भर्त्सने। भरणेऽप्येके। मॄ हिंसायाम्। मृणाति। ममार ५। दॄ विदारणे। ददरतुः-दद्रतुः ६। जॄ ७ वयोहानौ। झॄ ८ इत्येके। धॄ ९ इत्यन्ये। नॄ १० नये *। कॄ ११ हिंसायाम्। ॠ गतौ। ॠणाति। अराञ्चकार। अरिता-अरीता। आर्णीत्-आर्णीताम्। ईर्य्यात्। आरीत्। आरिष्टाम् १२। गॄ १३ शब्दे। ज्या वयोहानौ। ग्रहिज्या (उ१०६पृ०)।

हलः। ६। ४। २।

अङ्गावयवाद्धलः परं यत्सम्प्रसारणन्तदन्ताङ्गस्य दीर्घः स्यात्।

(१) वस्य दन्त्योष्ठ्यत्वावश्यम्भावेन वूर्य्यादित्यादावुत्त्वम्।

*(उ१६०) णोपदेशोऽयमेव पर्य्युदस्तः ह्रस्वपाठः प्रामादिकः

इति दीर्घे कृते। प्वादीनां ह्रस्वः (७।६५सू०)। जिनाति। जिज्यौ। जिज्यतुः १४। री १५ गतिरेषणयोः। रेषणं वृक-शब्दः। ली श्लेषणे। विभाषा लीयतेरित्येज्विषये (७।२५सू०) आत्वं वा। ललौ-लिलाय। लाता-लेता १६। व्ली वरणे। व्लिनाति १७। प्ली १८ गतौ। वृत्। ल्वादयो वृत्ताः। प्वादयोऽपीत्येके। व्री १९ वरणे। भ्री २० भये। भर इत्येके। क्षीष् हिंसायाम्। एषां त्रयाणां ह्रस्वः। केषाञ्चिन्मते तु न। ज्ञा अवबोधने। ज्ञाजनोर्ज्जा (७।२५सू०)। जानाति २१। दीर्घनिर्द्देशसामर्थ्यान्न ह्रस्वः। बन्ध बन्धने। बध्नाति। बबन्धिथ बबन्ध। बन्धा। बन्धारौ। भन्त्स्यति। बधान। अभान्त्सीत्। पूर्व्वत्रासिद्धमिति (१०सू०) भष्भावात्पूर्व्वं झलो झलीति (७४०सू०) सिज्लोपः। प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न, प्रत्ययलक्षणप्राप्ति सिज्लोपस्यासिद्धत्वात्। अबान्धाम्। अभान्त्सुः २२।

वृङ् सम्भक्तौ। वृणीते। वव्रे। ववृषे। ववृढ्वे। वरिता-वरीता। अवरिष्ट-अवरीष्ट-अवृत।

श्रन्थ विमोचनप्रतिहर्षयोः। इतः परस्मैपदिनः। श्रथ्नाति। श्रन्थग्रन्थीत्यादिना (७।०२सू०) किल्वपक्षे एत्वा-भ्यासलोपावप्यत्र वक्तव्यौ इति हरदत्तादयः। श्रेथतुः-श्रेथुः १। इदङ्कित्त्वम्पितामपीति सुधाकरमते। श्रेथिथ। अस्मि-न्नपि पक्षे णलि। शश्राथ। उत्तमे तु शश्राथ-शश्रथेति माधवः। तत्र मूलं मृग्यम्। मन्थ २ विलोडने। श्रन्थ ३ ग्रन्थ ४ सन्दर्भे। अर्थभेदात् श्रन्थेः पुनः पाठः। रूपं तूक्तम्। कुन्थ संश्लेषणे। संक्लेशे इत्येके। कुथ्नाति।

चुकुथ ५। कुथेति दुर्गः। चकोथ। मृद चोदे। मृद्नाति। ममर्द ६। मृड च। अयं सुखेऽपि। इत्युक्तम् (५६७पृ०)। मृड्णाति ७। गुध रोषे। गुध्नाति ८। कुष निष्कर्षे। कुष्णाति। कोषिता।

## निरः कुषः। ७। २। ४६।

निरः परात्कुषो वलादेरार्द्धधातुकस्य इड्वा स्यात्। निष्कोषिता निष्कोष्टा। निरकोषीत्-निरकुक्षत् ६। क्षुभ सञ्चलने। क्षुभ्नादिषु (२) च। क्षुभ्नाति। क्षुभ्नीतः। क्षोभिता। क्षुभाण १०। णभ तुभ हिंसायाम्। नभ्नाति ११। तुभ्नाति। नभते। तोभते १२। इति (७७८पृ०) शपि। नभ्यति। तुभ्यतीति (७१४२पृ०) श्यनि। क्लिशू विबाधने। ग्र्यादिति (५६७०) स्तुत्वनिषेधः। क्लिश्नाति। क्लेशिता-क्लेष्टा। अक्लेशीत्-अक्लिक्षत् १३। अश भोजने। अश्नाति। आश १४। उध्रस उञ्छे। उकार इत्। ध्रस्नाति। उकार धात्ववयव इत्येके। उध्रसाञ्चकार १५। इष आभीक्ष्ण्ये। पौनःपुन्यमृशार्थो वा आभीक्ष्ण्यम्। इष्णाति १६। तीषसहेत्यत्र (७७४पृ०) सहिना साहचर्य्यादकारविकरणस्य तौदादिकस्यैव इषेर्ग्रहणान्न त् इष्यतीष्णात्योरित्याडः। एषिता। वस्तुतस्तु इष्णातेरपि इड्विकल्प उचितः। तथाच वार्त्तिकम् इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध * इति। विष विप्रयोगे। विष्णाति। वेष्टा १७। प्रुष प्लुष स्नेहनसेवनपूरणेषु। प्रुष्णाति १८। प्लुष्णाति १६। पुष पुष्टौ। पोषिता २०। मुष स्तेये। मोषिता २१। खच भूतप्रादु-

(२) क्षुभ्नादिगणः तत्पुरुषसमासप्रकरणे (२८२पृ०) द्रष्टव्यः।

भावे । भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः । खषञ्जाति २२ । वान्तोऽयमित्येके ।

## च्छ्वोः शूडनुनासिके च । ६ । ४ । १६ ।

सतुकस्य छस्य वस्य च क्रमात् श, ऊठ्, एतावादेशौ स्तोऽनुनासिके, क्वौ, झलादौ च क्ङिति । खौनाति । चखाव । खविता । शानचः परत्वादूठि कृते हलन्तत्वाभावान्न (७।१५४०सू०) शानच् । खौनीहि २३ । हेठ च । हुत्वम् । हेठ्णाति २३ ।

ग्रह उपादाने । स्वरितेत् । ग्रहिज्या (७१०६सू०) । गृह्णीते ।

## ग्रहोऽलिटि दीर्घः । ७ । २ । ३७ ।

एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यात् न तु लिटि । ग्रहीता । लिटि तु । जग्रहिथ । गृह्यात् । ग्रहीषीष्ट । ह्म्यन्तेति (७१५२सू०) न वृद्धिः । अग्रहीष्टाम् । अग्रहीष्ट । अग्रहीषाताम् । अग्रहीषत १ ।

इति क्र्यादयः ।

चर स्तेये ।

**सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्म्मवर्णचूर्णचुरादिभ्यो णिच् । ३ । १ । २५ ।**

एभ्यो णिच् स्यात् । चूर्णान्तेभ्यः प्रातिपदिकाद्धात्वर्थ (७।१८५पृ०) इत्येव सिद्धं तेषामिह ग्रहणम्प्रपञ्चार्थम् । चुरादिभ्यस्तु स्वार्थे । पुगन्तेति (७।२पृ०) गुणः । सनाद्यन्ता इति (७५७पृ०) धातुत्वम् । तिप्शबादिगुणायादेशौ । चोरयति ।

**णिचश्च । १ । ३ । ७४ ।**

णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्य्यात् । चोरयिषीष्ट । णिश्रीति (७६०पृ०) चङ् । णौ चङीति (७६१पृ०) ह्रस्वः । द्वित्वम् । हलादिः शेषः(७१०पृ०)दीर्घो लघोः(७६१पृ०)इत्यभ्यासदीर्घः । अचूचुरत् । अचूचरत १ । चिति स्मृत्याम् । चिन्तयति । अचिचिन्तत् । चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् तेन चिन्त्यात् चिन्त्यते इत्यादौ नलोपो न । चिन्तति । चिन्तेत् २ । एतच्च ज्ञापकं सामान्यापेक्षमित्येके । अत एकहल (७२२पृ०) इत्यत्र वृत्तिकृता चकाणचकणतुरित्युदाहृतत्वात् विशेषापेक्षमित्यपरे । अतएव आ धृषाद्वेत्यस्य (१) न वैयर्थ्यम् । यत्रि सङ्कोचे । यन्त्रयति ४ । यन्त्रेति पठितुं शक्यम् । यन्तु इदित्करणाद्यन्त्रति

(१) सर्व्वेषां चुरादीनां विभाषया णिजिति स्थिते आ धृषाद्वेति(७१७८पृ०) गणवाक्यं ज्ञापकसिद्धस्यानित्यताद्योतनार्थमिति न तद्वैयर्थ्यमेवं चाधृषीयाणामेवैच्छिको विकल्पोऽन्येषां व्यवस्थितः प्रयोगानुसारीचेति भेदः ।

माधवेनोक्तान्तञ्चिन्त्यम्। एवं कुट्टितनिमतिषु। स्फुडि परिहासे। स्फुण्डयति ४। इदित्करणात् स्फुण्डति। स्फुटीति पाठान्तरम्। स्फुण्टयति ५। लक्ष दर्शनाङ्कनयोः। कुद्रि अनृतभाषणे। कुन्द्रयति ६। लड उपसेवायाम्। लाडयति ७। मिदि स्नेहने। मिन्दयति। मिन्दति ८। ओलडि उत्क्षेपणे। ओलण्डयति। ओलण्डति ९। ओकार इदित्येके। लण्डयति। लण्डति १०। उकारादिरयमित्यन्ये। उलण्डयति ११। जल १२। अपवारणे। लज १३ इत्येके। पीड अवगाहने। पीडयति।

## भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्। ७।४।३।

एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ। अपीपिडत्-अपिपीडत् १४। नट १५ अवस्यन्दने। अवस्यन्दनं नाट्यम्। श्रथ १६ प्रयत्ने। प्रस्थाने इत्येके। बध १७ संयमने। बाधयति। बन्धेति चान्द्रः। पॄ पूरणे। पारयति १८। एवम्पृणातिपिपर्त्तिभ्याम्परितेत्यादिसिद्धावपि परति परतइत्यादिसिद्धिः फलम्। ऊर्ज्ज १९ बलप्राणनयोः। पक्ष २० परिग्रहे। वर्ण २१ चर्ण २२ प्रेरणे। वर्ण वर्णनइत्येके। प्रथ प्रख्याने। प्राथयति। नान्ये मितोऽहेताविति (३।७४५०) वक्ष्यमाणत्वान्नास्य मित्त्वम्।

## अत् स्मृदृत्वरप्रथम्रदस्तृस्पशाम्। ७।४।९५

एषामभ्यासस्य अकारोऽन्तादेशः स्याच्चङ्परे णौ। इत्वापवादः। अपप्रथत् २३। पृथ प्रक्षेपे।

उर्ऋत्।७।४।७।

उपधाया ऋवर्णस्य स्थाने ऋत्स्याद्वा चङ्परे णौ। इररारामपवादः। अपीपृथत्-अपपर्थत् २४। पथ इत्येके। पाथयति २५। षम्ब सम्बन्धने। सम्बयति। अससम्बत् २६। शम्ब च। अशशम्बत् २७। साम्ब इत्येके। भक्ष २८ अदने। कुट्ट छेदनभर्त्सनयोः। पूरण इत्येके। कुट्टयति २९। पुट्ट ३० चुट्ट ३१ अल्पीभावे। अट्ट ३२ षुट्ट ३३ अनादरे। अट्टयति। अयं दोपधः ष्टुत्वस्यासिद्धत्वात् न न्द्रा इति (७११५४०) निषेधः। आट्टिटत्। लुण्ठ स्तेये। लुण्ठयति ३४। लुण्टतीति लुटि स्तेये (७५४५०) इति भौवादिकस्य। शठ ३५ श्वठ ३६ असंस्कारगत्योः। श्वठि ३७ इत्येके। तुजि पिजि हिंसाबलादाननिकेतनेषु। तुञ्जयति। पिञ्जयति। इदित्करणात् तुञ्जति ३८। पिञ्जति ३९। तुज पिजेति केचित्। लजि ४० लुजि ४१ इत्येके। पिस गतौ। पेसयति ४२। पेसतीति तु (७७६५०) शपि गतम्। षान्त्व ४३ सान्त्वप्रयोगे। श्वल्क ४४ वल्क ४५ परिभाषणे। ष्णिह ४६ स्नेहने। स्फिट ४७ इत्येके। स्मिट अनादरे। अषोपदेशत्वान्न षः। असिस्मिटत् ४८। स्मिङ् ४९ अनादर इत्येके। ङित्त्वस्यावयवेऽचरितार्थत्वाण्णिजन्तात्तङ्। स्माययते। श्लिष ५० श्लेषणे। पथि गतौ। पन्थयति। पन्थति ५१। पिछ ५२ कुट्टने। छदि संवरणे।

छन्दयति। छन्दति ५३। श्रण दाने। प्रायेणायं विपूर्व्वः। वि-श्राणयति ५४। तड आघाते। ताडयति ५५। खड खडि कडि भेदने। खाडयति ५६। खण्डयति ५७। कण्डयति ५८। कुडि ५९ रक्षणे। गुडि ६० वेष्टने। रक्षण इत्येके। कुठि ६१ इत्यन्ये। अव-कुण्ठयति। अव-कुण्ठति। गुठि ६२ इत्यपरे। खुडि ६३ खण्डने। वटि ६४ विभाजने। वडि ६५ इत्येके। मडि ६६ भूषायां हर्षे च। भडि ६७ कल्याणे। छर्द्द ६८ वमने। पुस्त ६९ वुस्त ७० आदरानादरयोः। चुद ७१ सञ्चोदने। नक्क ७२ धक्क ७३ नाशने। णोपदेशलक्षणे (७४१पृ०) पर्युदस्तोऽयम्। प्र-नक्कयति। चक्क ७४ चुक्क ७५ व्यथने। क्षल ७६ शौचकर्मणि तल ७७ प्रतिष्ठायाम्। तुल उन्माने। तोलयति। अतूतुलत् ७८। कथं "तुलयति तुलना" इत्यादि अतुलोपमाभ्यामिति (२०५पृ०) निपातनादङन्तस्य तुलाशब्दस्य सिद्धौ ततो णिच्। दुल ७९ उत्क्षेपे। पुल ८० महत्त्वे। चुल ८१ समुच्छ्राये। मल ८२ रोहणे। कल ८३ विल ८४ क्षेपे। विल भेदने। तिल ८५ स्नेहने। चल ८६ भृतौ। पाल ८७ रक्षणे। लूष ८८ हिंसायाम्। शुल्व ८९ माने। शूर्प ९० च। चुट ९१ छेदने। मुट ९२ सञ्चूर्णने। पडि पसि नाशने। पण्डयति-पण्डति ९३। पंसयति-पंसति ९४। वज ९५ मार्गसंस्कारगत्योः शुल्क ९६ अतिस्पर्शने। चपि गत्याम्। चम्पयति-चम्पति ९७। क्षपि क्षान्त्याम्। क्षम्पयति-क्षम्पति ९८। छजि ९९ कृच्छ्रजीवने। श्वर्त्त १०० गत्याम्। श्वभ्र १०१ च। ज्ञप १०२ ज्ञाने ज्ञापने च। ज्ञाप मिच्च ग०। अयं ज्ञाने ज्ञापने च वर्त्तते।

**मितां ह्रस्वः। ६। ४। ९२।**

मितामुपधाया ह्रस्वः स्याण्णौ परे। ज्ञपयति। यम १०३ च परिवेषणे। चान्मित्। परिवेषणमिह वेष्टनम्। नतु भोजना, नापि वेष्टना। यमयति चन्द्रम् परिवेष्टतइत्यर्थः। चह परिकल्कने चहयति। अचीचहत् १०४। कथादौ वक्ष्यमाणस्य(७१८२१८०) तु अदन्तत्वेनाग्लोपित्वाद्दीर्घसन्वद्भावौ न। अचचहत्। चप इत्येके। चपयति १०५। रह त्यागइत्येके। अरीरहत् १०६। कथादेस्तु। अररहत्। बल प्राणने। बलयति। चिञ् चयने।

**चिस्फुरोर्णौ। ६। १। ५४।**

आत्त्वं वा स्यात्।

**अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ। ७। ३। ३६।**

चपयति-चययति। ञित्करणसामर्थ्यादस्य णिज्विकल्पः। चयते। प्र-णि-चयति प्र-नि-चयति १०७। नान्ये मितोऽहेतौ ग०। अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः। तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वन्न। घट्ट १०८ चलने। मुस्त १०९ सङ्घाते। खट्ट ११० संवरणे। षट्ट १११ स्फिट्ट ११२ चुबि ११३ हिंसायाम्। पूल ११४ सङ्घाते। पूर्ण ११५ इत्येके। पुण इत्यन्ये। पुंस ११६ अभिवर्द्धने। टकि ११७ बन्धने। टङ्कयति। टङ्कति ११८। धूस कान्तिकरणे। धूसयति ११९।

दन्त्यान्तः। मूर्द्धन्यान्त इत्येके। तालव्यान्त इ परे। कीट १२० वर्णे। चूर्ण १२१ सङ्कोचने। पूज १२२ पूजायाम्। अर्क १२३ स्तवने। तपन इत्येके। शुठ १२४ आलस्ये। शुठि शोषणे। शुण्ठयति। शुण्ठति १२५। जुड १२६ प्रेरणे। गज मार्ज शब्दार्थौ। गाजयति १२७। मार्जयति १२८। मर्च च। मर्चयति १२९। घृ १३० प्रस्रवणे। स्रावण इत्येके। पचि विस्तारवचने। पञ्चयति १३१। पञ्चते इति व्यक्तार्थस्य(७४५पृ०) अपि गतम्। तिज निशाने। तेजयति १३२। कृत संशब्दने।

उपधायाश्च। ७। १। १०१।

धातोरुपधाभूतस्य ऋत इत्यात्। रपरत्वम्। उपधायाञ्चेति (३४पृ०)दीर्घः। कीर्त्तयति। उर्ऋत्(३१७२पृ०)अचीकृतत्-अचि कीर्त्तत् १३३। वर्द्ध १३४ छेदनपूरणयोः। कुबि आच्छादने। कुम्बयति १३५। कुभि १३६ इत्येके। लुबि १३७ तुबि १३८ अदर्शने। अर्दने इत्येके। ह्लप १३९ व्यक्तायां वाचि। क्लृप १४० इत्येके। चुटि १४१ छेदने। इल प्रेरणे। एलयति। ऐलि-लत् १४२। म्रच्छ १४३ म्लेच्छने। म्लेच्छ १४४ अव्यक्तायां वाचि। ब्रूस १४५ बर्ह १४६ हिंसायाम्। केचिदिह गर्ज १४७ गर्द १४८ शब्दे गर्ध १४९ अभिकाङ्क्षायामिति पठन्ति। गुर्द १५० पूर्व १५१ निकेतने। जसि रक्षणे। मोक्षण इति केचित्। जंसयति जंसति १५२। ईड १५३ स्तुतौ। जसु १५४ हिंसायाम्। पिडि १५५ सङ्घाते। रुष १५६ रोषे। रुट १५७ इत्येके। डिप १५८ क्षेपे। ष्टुप १५९ समुच्छ्राये।

आ कुस्मादात्मनेपदिनः । कुस्मनाम्नो वेति(७१७७४०)वक्ष्यते समभिव्याप्येत्यर्थः । अकर्त्तृगामिफलार्थमिदम् । चित सञ्चेतने चेतयते १ । अचीचितत् । दशि दंशने । दंशयते । अददंशत् । दृदित्त्वाण्णिजभावे । दंशति २ । आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनैवेति व्याख्यातारः । नलोपे (७१०१४०सू०) सञ्जिसाहचर्याद्भ्वादेरेव ग्रहणम् । दसि दर्शनदंशनयोः । दंसयते । दंसति ३ । दस ४ इत्यप्येके । डप ५ डिप ६ सङ्घाते । तत्रि कुटुम्बधारणे । तन्त्रयते ७ । चान्द्रा धातुद्वयमिति मत्वा कुटुम्बयते इत्युदाहरन्ति । मत्रि ८ गुप्तपरिभाषणे । स्पश ९ ग्रहणसंश्लेषणयोः । तर्ज १० भर्त्स ११ तर्जने । वस्त गन्ध अर्द्दने । वस्तयते १२ । गन्धयते १३ । विष्क १४ हिंसायाम् । हिष्क १५ इत्येके । निष्क १६ परिमाणे । लल १७ ईप्सायाम् । कूण १८ संकोचे । तूण १९ पूरणे । भ्रूण२० आशाविशङ्कयोः । शठ २१ श्लाघायाम् । यक्ष २२ पूजायाम् । स्यम २३ वितर्के । गूर २४ उद्यमने । शम २५ लक्ष २६ आलोचने । नान्ये मितइति(७१७४४०) मित्त्वनिषेधः । शामयते । कुत्स २७ अवक्षेपणे । त्रुट २८ छेदने । कुट २९ इत्येके । गल ३० स्रवणे । भल ३१ आमण्डने । कूट ३२ आप्रदाने । अवसादने इत्येके । कुट्ट ३३ प्रतापने । वञ्चु ३४ प्रलम्भने । वृष शक्तिबन्धने । शक्तिबन्धनम्प्रजननसामर्थ्यं शक्तिबन्धस्य । वर्षयते ३५ । मद तृप्तियोगे । मदयते ३६ । दिवु ३७ परिकूजने । गृ विज्ञाने । गारयते ३८ । विद चेतनाख्याननिवासेषु । वेदयते ३९ ।

सत्तायां विद्यते, ज्ञाने वेत्ति, विन्ते विचारणे। ।
विन्दते विन्दति प्राप्तौ, श्यन्लुक्श्नम्शेष्विदं क्रमात् ॥

मन स्तम्भे। मानयते ४०। यु जुगुप्सायाम्। यावयते ४१। कुस्म नाम्नो वा ग०। कुस्मेति धातुः कुत्सितस्मयने वर्त्तते। कुस्मयते। अचुकुस्मत् ४२। अथ वा कुस्मेति प्रातिपदिकम्। ततो धात्वर्थे णिच्। इत्याकुस्मीयाः।

चर्च १ अध्ययने। बुक्क २ भाषणे। शब्द उपसर्गादाविष्कारे च। चाद्भाषणे। प्रति शब्दयति। प्रतिश्रुतमाविष्करोतीत्यर्थः। अनुपसर्गाच्च ग०। आविष्कारे इत्येव। शब्दयति ३। कण निमीलने। काणयति। णौ चङ्युपधाया ह्रस्वः (उ६१पृ०)। काण्यादीनां वेति * विकल्प्यते। अचीकणत्-अचकाणत् ४। जभि नाशने। जम्भयति-जम्भति ५। षूद क्षरणे। सूदयति। असूषुदत् ६। जसु ताडने। जासयति-जसति ७। पश बन्धने। पाशयति ८। अम रोगे। आमयति ९। नान्ये मित इति (उ१७४पृ०) निषेधः। अम गत्यादौ अपि गतः (उ६४पृ०) तस्माद्धेतुमणौ आमयति। चट १० स्फुट ११ भेदने। विकासे शपोः स्फुटति (उ१५२पृ०) स्फोटते (उ५२पृ०) इत्युक्तम्। घट सङ्घाते। घाटयति १२। हन्त्यर्थाश्च ग०। नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्त इत्यर्थः। दिवु १३ मर्द्दने। उदित्त्वाद्देवतीत्यपि। अर्ज्ज १४ प्रतियत्ने। अयमर्थान्तरेऽपि। द्रव्यमर्ज्जयति। घुषिर् विशब्दने। घोषयति। घुषिरविशब्दन इति(उ२५०पृ०)सूत्रेऽविशब्दन इति निषेधाल्लिङ्गादनित्योऽस्य णिच्। घोषति। इरित्त्वादङ् (उ२६पृ०ह०) वा। अघुषत्-अघोषीत्। णयन्तस्य तु।

अजूघुषत् १५। आङः क्रन्द सातत्ये। भौवादिकः क्रन्दधातु-राह्वानाद्यर्थः (७४२पृ०) उक्तः स एवाङ्पूर्व्वो णिचं लभते सातत्ये। आ-क्रन्दयति १६ अन्ये तु आङ्पूर्व्वो घुषिः क्रन्दसातत्ये इत्याहुः। आ-घोषयति। लस १७ शिल्पयोगे। तसि १८ भूष १९ अलङ्करणे। अव-तंसयति अव-तंसति। भूषयति। अर्ह २० पूजायाम्। ज्ञा नियोगे। आज्ञापयति २१। भज २२ विश्राणने। शृधु प्रहसने। अशशर्द्धत्-अशीशृधत् २३। यत २४ निकारोपस्कारयोः। रक २५ लग २६ आस्वादने। रघ २७ इत्येके। रग २८ इत्यन्ये। अन्च विशेषणे। अञ्चयति। उदित्त्वमिड्विकल्पार्थम्। अतएव विभाषितो णिच्। अञ्चति २९। एवं शृधुजसुप्रभृतीनामपि बोध्यम्। लिगि चित्रीकरणे। लिङ्गयति-लिङ्गति ३०। मुद संसर्गे। मोदयति ३१ सक्तून् घृतेन। त्रस ३२ धारणे। ग्रहणइत्येके। वारणे इत्यन्ये। उध्रस उञ्छे। उकारो धात्ववयवइत्येके। नेत्यन्ये। उध्रासयति ध्रासयति ३३। मुच ३४ प्रमोचने,-मोदने च। वस ३५ स्नेहच्छेदापहरणेषु। चर ३६ संशये। च्यु सहने। हसने चेत्येके। च्यावयति ३७ च्युसेत्येके। च्योसयति ३८। भुवोऽवकल्कने ग०। अवकल्कनं मिश्रीकरणमित्येके। चिन्तनमित्यन्ये। भावयति ३९। कृपेश्च ग०। कल्पयति ४०।

आ स्वदःसकर्म्मकात् ग०। स्वदिमभिव्याप्य सम्भवत्कर्म्मभ्य एव णिच्। ग्रस ग्रहणे। ग्रासयति १ फलम्। पुष धारणे। पोषयति २ आभरणम्। दल विदारणे। दालयति ३। पट ४ पुट ५ लुट ६ तुजि ७ मिजि ८ पिजि ९ लुजि १०

मजि ११ लघि १२ लसि १३ पिसि १४ कुसि १५ दशि १६ कुशि १७ घट १८ घटि १९ दृंहि २० बर्ह २१ बल्ह २२ गुप २३ धूप २४ विच्छ २५ चीव २६ पुथ २७ लोक्ट २८ लोचृ २९ णद ३० कुप ३१ तर्क ३२ वृतु ३३ वृधु ३४ भाषार्थाः। पाटयति। पोटयति। लोटयति। तुञ्जयति-तुञ्जति। एवम्परेषाम्। घाटयति। घण्टयति।

## नाग्लोपिशास्वृदिताम्। ७। ४। २।

णिच्यग्लोपिनः शास्तेर्ऋदिताञ्च उपधाया ह्रस्वो न स्याच्चङ्परे णौ। अलुलोकत्। अलुलोचत्। वर्त्तयति। वर्द्धयति। उदित्त्वात्। वर्त्तति। वर्द्धति। रुठ ३५ लजि ३६ अजि ३७ दसि ३८ भृशि ३९ रुशि ४० रुसि ४१ शीक ४२ (णा)नट ४३ पुटि ४४ जिवि ४५ रघि ४६ लघि ४७ अंहि ४८ रंहि ४९ मंहि ५० च। लडि ५१ तड ५२ नल ५३ च। पूरी ५४ आप्यायने। ईदित्त्वन्निष्ठायामिड्निषेधाय। अतएव णिज्वा। पूरयति-पूरति। रुज ५५ हिंसायाम्। ष्वद ५६ आस्वादने। स्वाद ५७ इत्येके असिष्वदत्। दीर्घस्य त्वषोपदेशत्वात्। असिस्वदत्।

आ धृषाद्वा ग०। इतऊर्द्ध्वं विभाषितणिचः धृषधातुमभिव्याप्य। युज पृच संयमने। योजयति-योजति अयौजीत् १। पर्ज्जयति-पर्चति। पर्चिता। अपर्चीत् २। अर्च ३ पूजायाम्। षह मर्षणे। साहयति ४। "सएवायन्नागः सहति कलभेभ्यः परिभवम्"। ईर ५ क्षेपे। ली द्रवीकरणे।

लाययति-लयति । लेता ६ । वृजी वर्ज्जने । वर्ज्जयति-वर्ज्जति ७ । वृञ् आवरणे । वारयति-वरति वरते । वरिता-वरीता ८ । जॄ वयोहानौ । जारयति-जरति । जरिता-जरीता ९ । ज्रि च । ज्रायति-ज्रयति । ज्रेता । रिच वियोजनसम्पर्चनयोः । रेचयति-रेचति । रेक्ता १० । शिष असर्व्वोपयोगे । शेषयति-शेषति । शेष्टा । अशिक्षत् ११ । अयं विपूर्व्वोऽतिशये । तप दाहे । तापयति-तपति । तप्ता १२ । तृप तृप्तौ । सन्दीपने इत्येके । तर्पयति-तर्पति । तर्पिता १३ । छृदी सन्दीपने । छर्दयति-छर्दति । छर्दिता । छर्दिष्यति १४ । सेऽसिचीति (७१२२पृ०) विकल्पो न, साहचर्य्यात्तत्र रौधादिकस्यैव ग्रहणात् । चृप १५ छप १६ दृप १७ सन्दीपन इत्येके । चर्पयति । छर्पयति । दृभी भये । दर्भयति-दर्भति । दर्भिता १८ । दृभ १९ सन्दर्भे । अयन्तुदादावीदित् (७१५१पृ०) । श्रथ २० मोक्षणे । हिंसायामित्येके । मी गतौ माययति-मयति । मेता २१ । ग्रन्थ बन्धने । ग्रन्थयति-ग्रन्थति २२ । सीक २३ आमर्षणे । चीक २४ च । अर्द्द हिंसायाम् । स्वरितेत् । अर्द्दयति-अर्द्दति । अर्द्दते २५ । हिसि हिंसायाम् । हिंसयति-हिंसति २६ । हिनस्तीति (७१५६पृ०) अभिगतम् । अर्ह २७ पूजायाम् । आङः षद पद्यर्थे । आ-सादयति आ-सीदति । पाघ्रेति (७८६पृ०) सीदादेशः । आसत्ता । आसात्सीत् २८ । शुन्ध शौचकर्म्मणि । शुन्धिता । अशुन्धीत् । अशुन्धिष्टाम् २९ । छद ३० अपवारणे । स्वरितेत् । जुष परितर्कणे । परितर्कणमूहो हिंसा वा । परितर्पणइत्यन्ये । परितर्पणम्परितृप्तिक्रिया । जोषयति

जोषयति ३१। प्रीतिसेवनयोर्जुषते इति (भा१५०पृ०) तुदादौ। धूञ् कम्पने। णावित्यधिकृत्य। धूञ्प्रीञोर्नुग् वक्तव्यः *। धूनयति धवति। धवते। केचित्तु धूञ्प्रीणोरिति पठित्वा-प्रीणातिसाहचर्य्याद्धुनातेरेव नुकमाहुः। धावयति ३२। अयं स्वादौ (भा१४६पृ०)क्र्यादौ (भा१६६पृ०) तुदादौ च भा(१५२पृ०) स्वादौ (भा१४६पृ०) ह्रस्व॰ श्च। तथाच कविरहस्ये।

"धूनोति चम्पकवनानि धुनोत्यशोक-
श्चूतन्धुनाति धुवति स्फुटितातिमुक्तम्।
वायुर्व्विधूनयति चम्पकपुष्परेणून्
यत्कानने धवति चन्दनमञ्जरीश्च॥

प्रीञ् तर्पणे। प्रीणयति। धूञ्प्रीणोरिति हरदत्तोक्तपाठे तु। प्राययति—प्रयति। प्रयते ३३। श्रन्थ ३४ ग्रन्थ ३५ सन्दर्भे। आप्लृ लम्भने। आपयति-आपति। आपत्। आप्ता। स्वरितेदयमित्येके। आपते ३६। तनु श्रद्धोपकरणोः। उपसर्गाच्च दैर्घ्ये ग॰। तानयति। वि-तानयति-तनति वि-तनति ३७। चन श्रद्धोपहननयोरित्येके। चानयति—चनति ३८। वद सन्देशवचने। स्वरितेत्। वादयति-वदति। वदते। ववदतुः। ववदिथ। अनुदात्तेदित्येके। ववदे। वद्यात् ३९। वच परिभाषणे। वाचयति-वचति। वक्ता। अवाचीत् ४०। मान पूजायाम्। मानयति-मानति। मानिता ४१। विचारणे तु भौवादिको(भा१०१पृ०)नित्यसन्नन्तः। स्तम्भे मानयते(भा१७७पृ०) इत्याकुस्मीयः।मन्यते इति दिवादौ(भा१३७पृ०)। मनुते इतितनादौ च (भा१६१पृ०)। भू प्राप्तावात्मनेपदी ग॰। भावयतेभवते। णिच्सन्नि-

योगेनैवात्मनेपदमित्येके। भवति ४२। गर्ह ४३ विनिन्दने। मार्ग ४४ अन्वेषणे। कठि ४५ शोके। उत्पूर्वोऽयमुत्कण्ठायाम्। कण्ठते इत्यात्मनेपदी (उ५२पृ०) गतः। मृज शौचालङ्कारयोः मार्जयति—मार्जति। मार्जिता मार्ष्टा ४६। मृष तितिक्षायाम्। स्वरितेत्। मर्षयति-मर्षते ४७। मृष्यति मृष्यते इति दिवादौ (उ१३६पृ०) सेचने (उ७५पृ०) शपि। मर्षति। धृष प्रसहने धर्षयति-धर्षति ४८। इत्याधृषीयाः।

अथादन्ताः। कथ वाक्यप्रबन्धे। अल्लोपस्य स्थानिवद्भावान्न वृद्धिः। कथयति। अग्लोपित्वान्न (उ६१पृ०सू०) दीर्घ-(६१पृ०सू०) सन्वद्भावौ। अचकथत् १। वर ईप्सायाम्। वरयति २। वारयतीति (उ१८०पृ०) गतम्। गण संख्याने। गणयति।

## ई च गणः। ७। ४। ९७।

गणेरभ्यासस्य ई स्याच्चङ्परे णौ। चादत्। अजगणत्-अजीगणत् ३। शठ श्वठ ५ सम्यगवभाषणे। पट ६ वट ७ ग्रन्थे। रह त्यागे। अररहत् ८। स्तन गदी देवशब्दे। स्तनयति ९। गदयति। अजगदत् १०। पत गतौ वा। वा णिजन्तः। वाऽदन्तइत्येके। आद्ये। पतयति—पतति। पताञ्चकार। अपतीत्। द्वितीये। पातयति। अपीपतत्। ११ पष अनुपसर्गात् ग०। गतावित्येव। पषयति १२। स्वर आक्षेपे। स्वरयति १३। रच प्रतियत्ने। रचयति १४। कल १५ गतौ संख्याने च। चह १६ परिकल्कने। परिकल्कनं दम्भः शाठ्यञ्च। मह पूजायाम्। महयति १७। महतीति शपि (उ७७पृ०) गतम्

सार कृप श्रथ दौर्बल्ये। सारयति १८। कृपयति १९। श्रथयति २०। स्पृह २१ ईप्सायाम्। भाम क्रोधे। अबभामत् २२। सूच पैशुन्ये। सूचयति। अषोपदेशत्वान्न षः। असुसूचत् २३। खेट २४ भक्षणे। तृतीयान्त २५ इत्येके। खोट २६ इत्यन्ये। चोट २७ क्षेपे। गोम २८ उपलेपने। अजुगोमत् २९। कुमार क्रीडायाम्। अचुकुमारत् ३०। शील ३१ उपधारणे। उपधारणमभ्यासः। साम सान्त्वप्रयोगे। अससामत् ३२। षाम सान्त्वने इत्यतीतस्य (उ१७२पृ०) तु असीषमत्। वेल कालोपदेशे। वेलयति ३३। काल इति पृथग्धातुरित्येके। कालयति ३४। पल्यूल ३५ लवनपवनयोः। वात सुखसेवनयोः। गतिसुखसेवनेष्वित्येके। वातयति। अववातत् ३६। गवेष मार्गणे। अजगवेषत् ३७। वास ३८ उपसेवायाम्। निवास आच्छादने। अनिनिवासत् ३९। भाज ४० पृथक्कर्म्मणि। सभाज प्रीतिदर्शनयोः। प्रीतिसेवनयोरित्यन्ये। सभाजयति ४१। ऊन परिहाणे। ऊनयति। ओः (२) पुयण्जीति सूत्रे (उ१८९पृ०)पययोरिति वक्तव्ये वर्णप्रत्याहारजकारग्रहो लिङ्गं णिचि अचआदेशो

(२) औननदित्यत्र णौ चङि नशब्दस्य द्वित्वमिटं तच्च न सम्भवति द्वित्वात् परत्वेन अल्लोपात्, णिचौ द्वित्वनिमित्तत्वाभावेन द्विर्वचनेऽचीति (उ२४पृ०) सूत्रस्याप्रवृत्तेश्चेत्याशङ्क्य ज्ञापकमाश्रित्य तत्सम्भवद्दत्याह ओरित्यादि। अयमाशयः णिचो द्वित्वनिमित्तत्वाभावेऽपि तन्निमित्तकाजादेशस्य निषेधः, स्थानिवत्त्वं वा लिङ्गेन ज्ञाप्यते तच्च लिङ्गम् ओरित्यादिसूत्रं तेन सूत्रेण हि अभ्यासोवर्णस्यावर्णपरे

न स्थानिवत्त्वे कार्य्ये । इति यत्र द्वित्वं अभ्यासोत्तरखण्डस्य आद्योऽच् प्रक्रियाया, म्परिनिष्ठिते रूपे वा अवर्णो लभ्यते तत्रैवायन्निषेधः ज्ञापकस्य सजातीयापेक्षत्वात्तेनाचिकीर्त्तदिति सिद्धम् । प्रकृते तु नशब्दस्य द्वित्वन्ततउत्तरखण्डेऽल्लोपः । औननत् । मा भवानूननत् ४२ । ध्वन शब्दे । अदध्वनत्४३कूट ४४ परितापे । परिदाहे इत्यन्ये ।(सङ्केत ग्राम कुण गुण) चामन्त्रणे । चात्कूटोपि । कूटयति । सङ्केतयति ४५ । ग्रामयति ४६ । कुणयति ४७ । गुणयति ४८ । पाठान्तरम् । केत श्रावणे निमन्त्रणे च केतयति । नि-केतयति । कुण गुण चामन्त्रणे । चकारात् केतने । कुण सङ्कोचनेऽपि । स्तेन चौर्य्ये । अतिस्तेनत् ४९ ।

आ गर्व्वादात्मनेपदिनः । पद गतौ । पदयते अपपदत १ । गृह ग्रहणे । गृहयते २ । मृग अन्वेषणे । मृगयते३ । मृग्यतीति कण्ड्वादिः ✱ (उ२२७४सू०) । कुह ४ विस्मापने । शूर ५ वीर ६ विक्रान्तौ । स्थूल परिवृंहणे । स्थूलयते । अतुस्थूलत ७ । अर्थ उपयाच्ञायाम् । अर्थयते ८ । आर्त्तथत । सत्र सन्तानक्रियायाम् । अससत्रत् ९ । अनेकाच्त्वान्न षोपदेशः ।

---

पवर्गयण्जकारे परे इत्त्वं विधीयते तच्च णिच्येव सम्भवति पूञोयौतेश्च सनि स्रिपृज्ञ्वोतीति (उ२०१३सू०) सनोवनतेति (उ२००५सू०) सूत्राभ्यामिटि कृते तन्निमित्तकाजादेशसम्भवेऽपि पययोरेव ग्रहणेनेष्टसिद्धौ पवर्गयण्प्रत्याहारग्रहणस्य व्यर्थत्वापत्त्या तद्ग्रहणमेव णौ स्थानिवत्त्वं ज्ञापयति अतएव ओः पुयण्जीति वचनं णावजादेशस्य स्थानिवत्त्वस्य ज्ञापक मिति ✱ वार्त्तिकम् । ज्ञापकफलं तु पवर्गादिभिन्नपरे नुनावयिषतीत्यादौ इत्त्वाभावः ।

✱ कण्ड्वादेराकृतिगणत्वेन तत्रैतस्य स्पष्टं पाठाभावेऽपि न क्षतिः ।

शिथिलयिषते। गर्व्व माने। गर्व्वयते १०। अदन्तत्वसामर्थ्या-णिज्विकल्पः। धातोरन्तउदात्तः, णिच्याम्, च फलम्। एव-मग्रेऽपि। इत्यागर्व्वीयाः।

सूत्र वेष्टने। सूत्रयति। असुसूत्रत् १। मूत्र प्रस्रवणे। मूत्रयति २। रूक्ष ३ पारुष्ये। पार तीर कर्म्मसमाप्तौ। अपपारत् ४। अतितीरत् ५। पुट संसर्गे। पुटयति ६। धेक दर्शने इत्येके। अदिधेकत् ७। कत्र शैथिल्ये। कत्र-यति ८। कर्त्तेत्यप्येके। कर्त्तयति ९।

प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च। प्रातिपदिकाद्धा-त्वर्थे णिच् स्यादिष्ठे * यथा प्रातिपदिकस्य पुंवद्भावटिलोप-विन्मतुल्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वत् णावपि स्युः। पटुमाचष्टे पटयति। परत्वाद्वृद्धौ सत्यां टिलोपः। अपीपटत्। णौ चङीत्यत्र भाष्ये तु टेर्लोपो बलीयानिति स्थितम्। अपपटत्। तत्करोति तदाचष्टे ग०। पूर्वस्य प्रपञ्चः। करोत्याचष्ट इति धात्वर्थमात्रं णिजर्थः, लडर्थस्त्व-विवक्षितः। तेनातिक्रामति ग०। अश्वेनातिक्रामति अश्व-यति। हस्तिनातिक्रामति। हस्तयति। धातुरूपञ्च ग०। णिच्प्रकृतिर्धातुरूपम्प्रतिपद्यते। चशब्दोऽनुक्तसमुच्चयार्थः। तथाच वार्त्तिकम्। आख्यानात् कृतस्तदाचष्टे कृल्लुक् प्रकृति-प्रत्यापत्तिः प्रकृतिवच्च कारकमिति *। कंसवधमाचष्टे कंसं घातयति। इह कंसहन् इति स्थिते (२)।

* इष्ठन्प्रत्ययप्रक्रिया ७००पृष्ठादौ द्रष्टव्या।

२) तद्ग्रहणेन गतिकारकपूर्व्वस्यापि ग्रहणात् कंसवधशब्दस्य कारक-

हनस्तोऽचिण्णलोः। ७। ३। ३२।

हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्ज्जे ञ्णिति णिति। नन्व-ङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता ततस्त्वाड्द्वित्वयो-र्दोषः, किञ्च कुत्वतत्वे न स्यातां धातोः स्वरूपग्रहणे तत्प्र-त्यये कार्य्यविज्ञानात्। सत्यम्। प्रकृतिवच्चेति चकारो (४) भिन्नक्रमः कारकं चात्कार्य्यम् हेतुमण्णिचः प्रकृतेर्हन्यादे-र्हेतुमणौ यादृशङ्कारकन्धातावनन्तरभूतं द्वितीयान्तं यादृशञ्च कार्य्यं कुत्वतत्वादि तदिहापीत्यर्थः। कंसमजीघतत्। कर्त्तृ-करणाद्धात्वर्थे ग०। कर्त्तृव्यापारार्थं यत्करणं न तु(५)चक्षु-रादिमात्रमित्यर्थः। असिना हन्ति असयति। वल्क १० दर्शने। चित्र चित्रीकरणे। आलेख्यकरण इत्यर्थः। कदाचिद्दर्शने।

पूर्व्वकत्वदन्ततया ततो णिचि क्वप्रत्ययस्य लुक् तस्य या प्रकृतिर्हन् इति तस्या विकारत्यागेन स्वेन रूपेणावस्थानमित्याशयेनाह कंसहन् इतीति।

(४) इह इयमतिदिष्टं कारकं कार्य्यञ्चेत्याह चकार इति। प्रकृतिवच्चेत्यत्र प्रकृतिशब्दार्थमाह हेतुमण्णिच्प्रकृतेरिति न तु लुप्यमानस्य क्वतः प्रकृतेः तथासति हेतुमणौ यादृशं रूपं तस्यातिदेशो न लभ्येत सएव चेष्यते तथैव भाष्यकतोदाहृतत्वात् कंसबधसुभद्राहरणादिनिरूढो-पाख्यानएव णिजित्यत्र नाग्रहः किन्तु प्रतिपादनमात्रेऽपि तेन राजगमनमाचष्टे इत्यादावपि णिजिति। विशेषस्तु मत्कृते शब्दार्थरत्ने द्रष्टव्यः।

(५) कर्तृग्रहणफलमाह न त्विति कर्त्तृग्रहणाभावे चक्षुरादीन्द्रियाणामेव लोके करणशब्दार्थतया चक्षुषा पश्यति चक्षयतीत्यादावेव स्यात् न तु करिभिरवबध्नाति अवकरयतीत्याद्यपीति भावः।

चित्रेत्ययमङ्ग तद्दर्शने णिचं लभते चित्रयति ११। अंस १२ समाघाते। वट १३ विभाजने। लज १४ प्रकाशने। वटि लजि इत्येके। वण्टयति १५। लञ्जयति १६। अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये। वण्टापयति। लञ्जापयति। शाकटायनस्तु कथादीनां सर्व्वेषां पुकमाह। तन्मते कथापयति। गणापयतीत्यादि। मिश्र १७ सम्पर्के। संग्राम युद्धे। अयमनुदात्तेत्। अकारप्रश्लेषात् (६)। अससंग्रामत १८। स्तोम श्लाघायाम्। अतुस्तोमत् १९। छिद्र २० कर्णभेदने। करणभेदन इत्यन्ये। कर्ण २१ इति धात्वन्तरमित्यन्ये। अन्ध दृष्ट्युपघाते। उपसंहार इत्यन्ये। आन्दधत् २२। दण्ड २३ दण्डनिपातने। अङ्क पदे लक्षणे च। आञ्चकत् २४। अङ्ग च। आञ्जगत् २५। सुख २६ दुःख २७ तत्क्रियायाम्। रस २८ आस्वादनस्नेहनयोः। व्यय वित्तसमुत्सर्गे। अवव्ययत् २९। रूप ३० रूपक्रियायाम्। रूपस्य दर्शनं करणं वा रूपक्रिया। छेद द्वैधीकरणे। अचिच्छेदत् ३१। छद अपवारण इत्येके। छदयति ३२। लाभ ३३ प्रेरणे। व्रण ३४ गात्रविचूर्णने। वर्ण वर्णक्रियाविस्तारगुणवचनेषु। वर्णक्रिया वर्णकरणम्। सुवर्णं वर्णयति कथां वर्णयति विस्तृणातीत्यर्थः। हरिं वर्णयति ३५ स्तौतीत्यर्थः। बहुलमेतन्निदर्शनम् ग०। अदन्तधातुनिदर्शनमित्यर्थः। बाहुलकादन्येऽपि

(६) अग्लोपित्वाभावेनोपधाह्रस्वत्वापत्तेः अससंग्रामतति न सिद्धेदित्याशङ्क्याह अकारप्रश्लेषादिति। संग्राम अ इति स्थिते संग्र मोत्तराकारस्यानुदात्ततया इत्त्वेऽपि धात्ववयवाकारस्थितेस्तथा निर्देशः तेनादन्तत्वमस्य, तथा चाग्लोपित्वान्नोपधाह्रस्व इति भावः। समिति नोपसर्गः किन्तु धात्ववयव इति न समः पूर्व्वमट्।

बोध्याः। तद्यथा। पर्ण हरितभावे। अपपर्णात् ३६ विष्क ३७ दर्शने। चप ३८ प्रेरणे। वस ३९ निवासे। तुत्थ ४० आवरणे। एवमान्दोलयति ४१। प्रेङ्खोलयति ४२। विडम्बयति ४३। अवधीरयतीत्यादि ४४। अन्ये तु दशगणीपाठो बहुलमित्याहुः। तेनापठिता अपि सौत्रलौकिकवैदिका बोध्याः। अपरे तु नवगणीपाठो बहुलमित्याहुः। तेनापठितेभ्योऽपि क्वचित् स्वार्थे णिच्। "रामो राज्यमचीकरदिति" यथेत्याहुः। चुरादिभ्य एव बहुलं णिजित्यर्थ इत्यन्ये। सर्वे पक्षाः प्राचां ग्रन्थे स्थिताः। णिङङ्गान्निरसने ग०। अङ्गवाचिनः प्रातिपदिकान्निरसनेऽर्थे णिङ् स्यात्। हस्तौ निरस्यति हस्तयते। पादयते। श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च ग०। श्वेताश्वादीनाञ्चतुर्णामश्वादयो लुप्यन्ते णिङ्-धात्वर्थे। श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते। अश्वतरमाचष्टे अश्वयते। गालोडितं वाचां विमर्शः। तत्करोति गालोडयते। आह्वरयते। केचित्तु णिचमेवानुवर्त्तयन्ति तन्मते परस्मैपदमपि। पुच्छादिषु धात्वर्थ एव इत्येव सिद्धम् ग०। णिजन्तादेव बहुलवचनादात्मनेपदमस्तु मास्तु पुच्छभाण्डेति णिङ्विधिः। सिद्धशब्दो ग्रन्थान्ते मङ्गलार्थः।

इति चुरादयः।

---

**तत्प्रयोजको हेतुश्च । १ । ४ । ५५ ।**

कर्त्तुः प्रयोजको हेतुसंज्ञः कर्त्तृसंज्ञश्च स्यात् ।

**हेतुमति च । ३ । १ । २६ ।**

प्रयोजकव्यापारे (१) प्रेषणादौ (२) वाच्ये धातोर्णिच् स्यात् । भवन्तम्प्रेरयति । भावयति णिचश्चेति (उ१७०पृ७) कर्त्तृगे फले आत्मनेपदम् । भावयते । भावयाम्बभूव ।

**ओः पुयण्ज्यपरे । ७ । ४ । ८० ।**

सनि परे यदङ्गन्तदवयवाभ्यासोकारस्येत्त्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । अबीभवत् । अपीपवत् । मूङ् । अमीमवत् । अयीयवत् । अरीरवत् । अलीलवत् । अजीजवत् ।

**स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा । ७ । ४ । ८१ ।**

एषामभ्यासोकारस्य इत्त्वं वा स्याल्लघ्वर्णपरे धात्वक्षरे परे ।

(१) स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेन हेतुर्यत्रास्ति स हेतुमान् व्यापारस्तस्मिन् वाच्ये णिजित्याह प्रयोजकव्यापार इति । प्रयोजकश्च चेतनाचेतनसाधारण्येन ग्राह्यः तत्र देवदत्तः पाचयतीत्यादौ चेतनः, भिक्षा वासयतीत्यादौ अचेतनेति भेदः ।

(२) भृत्यादेर्निकृष्टस्य प्रवर्त्तनं प्रेषणमात्रमित्यर्थः आदिशब्देनाध्येषणानुमत्यादीनां ग्रहणं समानस्याधिकस्य वा सत्कारपूर्वकं प्रवर्त्तनाऽध्येषणा प्रार्थनेत्यर्थः अनुमत्यादिस्तु राजादेस्तदनुमतिं विनाकार्य्यानिष्पत्तेः । लोडादितो णिचो विशेषस्तु हरिणा दर्शितः ।

असिस्रवत्—असुस्रवत्। नाग्लोपीति (७।७९सू०) ह्रस्वनिषेधः। अशशासत्। अडुढौकत्। अचीचकासत्। मतान्तरे (२)। अचचकासत्। अग्लोपीति सुब्धातुप्रकरणे (७२३२सू०)उदाहरिष्यते। णयन्तात्सिच्। पूर्व्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णिज्लोपः। (७६०टू०सू०) चोरयति। णौ चङीति (७६१सू०) ह्रस्वः दीर्घो लघोः (७६१सू०)। नचाग्लोपित्वाद्द्वयो(४)रप्यसम्भवः णयाकृतिनिर्द्देशात्(५)। अचूचुरत्।

## णौ च संश्चङोः। २। ४। ५१।

सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यात्। सम्प्रसारणन्तदाश्रयञ्च कार्य्यं बलवदिति वचनात्सम्प्रसारणम्। पूर्व्वरूपम् (१४८सू०सू०)। अशूशवत्। अलघुत्वान्न दीर्घः। अशिश्वयत्।

द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोट् विधीयते।
सक्रियस्य प्रयोगस्तु यदा स विषयो णिच इति॥

प्रपञ्चितञ्चैतत् शब्दार्थरत्ने१स्माभिस्तत्रैव द्रष्टव्यम्।

(२) मतान्तरे इति चङ्परे णौ यल्लघु तत्परो योऽङ्गस्याभ्यासस्तस्यैवेत्त्वमिति मते इत्यर्थस्तेन अचचकासदिति सिद्धिस्तत्र चङ्परतिमित्तकलघुत्वाभावात्।

(४) द्वयोरिति उक्तसूत्राभ्यामुपधाह्रस्वाभ्यासदीर्घयोरित्यर्थस्तथाचाचुचोरदिति स्यात्।

(५) णयाकृतीति चङ्परे णावित्यत्र णिशब्दश्चाकृतिपरो जातिपर इत्यर्थस्तथाच हेतुमणिचि परे स्वार्थिकणिचो लुप्तत्वेऽपि तस्य स्थानिवत्त्वात् णित्वस्यैष्टतया चोरयतीत्यादौ गुणवृद्ध्यादि अन्यथागणयतीत्यादौ अल्लोपस्य स्थानिवद्भावेनोपधाह्रस्वादेरभावइव प्रक्र-

## स्तन्भुसिवुसहां चङि। ८। ३। ११६।

उपसर्गनिमित्त एषां सस्य षो न स्याच्चङि। अभ्यतस्तम्भत्। पर्य्यसीषिवत्। न्यसीषहत्। आटिटत्। आशिशत्। बहिरङ्गोपुग्रपधाह्रस्वो द्वित्वात्प्रागेव(६) ओणेर्ऋदित्करणाल्लिङ्गात्। मा भवानिदिधत्। एजादावेधतौ(४२पृ०सू०)विधानान्न वृद्धिः। मा भवान् प्रेदिधत्। न न्द्रा इति (उ१२५पृ०) नदराणां न द्वित्वम्। औन्दिदत्। आड्डिडत्। आर्चिचत्। उदृज आर्ज्जवे उपदेशे दकारोपधः। भुजन्युब्जौ पाण्युपतापयोरिति(उ३१५पृ०) सूत्रे निपातनाद्धस्य बः (७) सचान्तरङ्गोऽपि द्वित्वविषये न न्द्रा इति निषेधाज्जिशब्दस्य द्वित्वे कृते प्रवर्त्तते न तु ततः प्राक् दकारोच्चारणसामर्थ्यात्। औब्जिजत्। अजादेः(८) रित्येव नेह। अदिद्रयत्।

## रभेरशब्लिटोः। ७। १। ६३।

रभेर्नुम् स्यादचि नतु शब्लिटोः। अररम्भत्।

---

तेऽपि स्यात् तच्चानिष्टम् तथाच स्थानिवद्भावेन स्वार्थिकणिचोऽपि चङ्परत्वसम्भवात् तदाश्रयेणैव ह्रस्वदीर्घयोः सम्भव इति भावः।

(६) यदि पूर्व्वं द्वित्वं भवेत्तदा अजादेर्द्वितीयस्येति (उ८५पृ०) सूत्रात् णिशब्दस्यैव द्विले कृते उपधाह्रस्वस्याप्राप्तेस्तत्प्रतिषेधार्थमोणृधातोः ऋदित्करणं व्यर्थं स्यादतस्तदेव उक्तार्थे ज्ञापकमित्येतदाह ओणृधातोरिति।

(७) न्युब्जेत्यत्र जकारयोगेएव वकारोच्चारणात् तत्सहयोगएव बकारो न तु समुद्र इत्यादौ कवर्गयोगेऽपीति बोध्यम्।

(८) न न्द्रा इत्यत्राजादेर्द्वितीयस्येत्यनुवर्त्तते तथाचादिभूतादचः परा एव नदरा न द्विर्वचना इत्यर्थः।

**लभेश्च । ७ । १ । ६४ ।**

अललम्भत् । हेरचङीति(७।४७६०)सूत्रेऽचङीत्युक्तेः कुत्वम् । अजीहयत् । अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् (७।७।९०) अस-स्मरत् । अददरत् । तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः ।

**विभाषा वेष्टिचेष्ट्योः । ७ । ४ । ९६ ।**

अभ्यासस्यात्त्वं वा स्याच्चङ्परे णौ । अववेष्टत्-अविवेष्टत् । अचचेष्टत्-अचिचेष्टत् । भ्राजभासेत्यादिना (७।७।९०) वोपधाह्रस्वः । अबिभ्रजत् अबभ्राजत् । काण्यादीनां वेति वक्तव्यम् * । ण्यन्ताः कणरणभणश्रणलुपहेठः । काण्यादयः षड् भाष्ये उक्ताः । ह्वायिवाणिलोटिलोपयस्तुत्वारोऽधिका न्यासे । चाणिलोठी इत्यप्यन्यत्र इत्थं द्वादश । अचीकणत् अचकाणत् ।

**स्वापेश्चङि । ६ । १ । १८ ।**

ण्यन्तस्य स्वापेश्चङि सम्प्रसारणं स्यात् । असूषुपत् ।

**शाच्छासाह्वाव्या(८) वे पां युक् । ७ । ३ । ३७ ।**

णौ । पुकोऽपवादः । शाययति । ह्वाययति ।

**ह्वः सम्प्रसारणम् । ६ । १ । ३२ ।**

सन्परे चङ्परे च णौ ह्वः सम्प्रसारणं स्यात् । अजूहवत्-अजुहावत् ‡ ।

(८) शाच्छासादीनां कृतात्त्वानां निर्देशः पुकः प्राप्तिसूचनाय पुको लाक्षणिकाकारवत्यपि प्रवृत्तेस्तेन अध्यापयति क्षापयतीत्यादिसिद्धिः ।

‡ ह्वायिवाणीत्यादि न्यासोक्तेर्नोपधा ह्रस्वः ।

## लोपः पिबतेरीच्चाभ्यासस्य। ७। ४। ४।

पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ। अपीप्यत्। अर्त्तिह्रीति (७।७४पृ०) पुक्। अर्पयति। ह्रेपयति। व्लेपयति। रेपयति। यलोपः। क्नोपयति। क्ष्मापयति। स्थापयति।

## तिष्ठतेरित्। ७। ४। ५।

उपधाया इदादेशः स्याच्चङ्परे णौ। अतिष्ठिपत्।

## जिघ्रतेर्वा। ७। ४। ६।

अजिघ्रिपत्-अजिघ्रपत्। उर्ऋत् (७।७२पृ०)। अचीकृतत्-अचिकीर्त्तत्। अवीवृतत्-अववर्त्तत्। अमीमृजत्-अममार्जत्। पातेर्णौ लुग्वक्तव्यः*। पुकोऽपवादः। पालयति।

## वो (१०) विधूनने जुक्। ७। ३। ३८।

वातेर्जुक् स्याण्णौ कम्पेऽर्थे। वाजयति। कम्पे किम् केशान्वापयति। विभाषा लीयतेः (७।२५पृ०)।

## लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने। ७। ३। ३९।

लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ स्तो वा णौ स्नेहद्रवे।

---

(१०) वहति वै शोषणे इत्यस्यैव ग्रहणं न तु वा गतिगन्धनयोरित्यस्य तस्य लुग्विकरणत्वात्। लुग्विकरणालुग्विकरणयोर्मध्येऽलुग्विकरणस्यैव ग्रहणमिति न्यायात्।

विलीनयति-विलापयति। विलालयति-विलाययति वा घृतम्। ली ई इति ईकारप्रश्लेषादात्त्वपक्षे नुक् न। स्नेहद्रवे किम्। लौहं विलापयति। प्रलम्भनाभिभवपूजासु लियो नित्यमात्त्वमिति वाच्यम् *।

**लियः सम्माननशालीनीकरणयोश्च। १। ३। ७०।**

लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्त्तृगेऽपि फले पूजाभिभवयोः प्रलम्भने चार्थे। जटाभिर्लापयते पूजामधिगच्छतीत्यर्थः। श्येनो वर्त्तिकामुल्लापयते अभिभवतीत्यर्थः। बालमुल्लापयते वञ्चयतीत्यर्थः।

**बिभेतेर्हेतुभये। ६। १। ५६।**

बिभेतेरेच आत्त्वं वा स्यात्प्रयोजकाद्भयञ्चेत्।

**भीस्म्योर्हेतुभये। १। ३। ६८।**

आभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्मयौ। सूत्रे भयग्रहणं धात्वर्थोपलक्षणम्। मुण्डो भापयते।

**भियो हेतुभये षुक्। ७। ३। ४०।**

भी ई इतीकारः प्रश्लिष्यते। ईकारान्तस्य भियः षुक् स्यात् णौ हेतुभये। भीषयते।

**नित्यं स्मयतेः। ६। १। ५७।**

स्मयतेरेचो नित्यमात्त्वं स्याण्णौ हेतोः स्मये। जटिलो विस्मा-

पयते। हेतोश्चेद्भयस्मयावित्युक्तेर्नेह। कुञ्चिकयैनम्भाययति, विस्माययति। कथन्तर्हि "विस्मापयन् विस्मितमात्मवृत्ताविति" "मनुष्यवाचेति" करणादेव हि तत्र स्मयः अन्यथा शानजपि स्यात्। सत्यम् विस्माययन्नित्येव पाठ इति साम्प्रदायिकाः। यद्वा मनुष्यवाक् प्रयोज्यकर्त्री विस्मापयते तया सिंहो विस्मापयन्निति णयन्ताच्छतृ शतेति व्याख्येयम्।

स्फायो वः। ७। ३। ४१।

णौ। स्फावयति।

शदेरगतौ तः। ७। ३। ४२।

शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ। शातयति। गतौ तु। गाः शादयति गोविन्दः गमयतीत्यर्थः।

रुहः पोऽन्यतरस्याम्। ७। ३। ४३।

णौ। रोपयति-रोहयति।

क्रीङ्जीनां णौ। ६। १। ४८।

एषामेचआत्त्वं स्याणौ। क्रापयति। अध्यापयति। जापयति।

णौ च संश्चङोः। ६। १। ३१।

सन्परे चङ्परे च णाविङो गाङ् वा स्यात्। अध्यजीगपत्-अध्यापिपत्।

सिध्यतेरपारलौकिके। ६। १। ४९।

ऐहलौकिकेऽर्थे विद्यमानस्य सिध्यतेरेचश्चात्त्वं स्यात्णौ । अन्नं साधयति निष्पादयतीत्यर्थः । अपारलौकिके किम् तापसः सिध्यति तत्त्वन्निश्चिनोति तं प्रेरयति सेधयति तापसन्तपः ।

प्रजने वीयतेः । ६ । १ । ५५ ।

अस्यैचश्चात्त्वं वा स्यात्णौ प्रजनेऽर्थे । वापयति वाययति वा गाः पुरोवातः गर्भं ग्राहयतीत्यर्थः ।

ऊदुपधाया गोहः (७८२ पृ०) । गूहयति ।

दोषो णौ । ६ । ४ । ६० ।

दुष इति सुवचम् । दुष्यतेरुपधाया ऊत्स्यात्णौ । दूतयपि ।

वा चित्तविरागे । ६ । ४ । ६१ ।

विरागोऽप्रीतता । चित्तं दूषयति दोषयति वा कामः । मितां ह्रस्वः (७१७ ४ पृ०) । घटादौ (७८५ पृ०) चुरादौ च (७१७४ पृ०) मितउक्ताः । घटयति । जनीजृष् (७८५ पृ० ग०) । जनयति । जरयति । जृणातेस्तु । जारयति । रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः * । मृगरमणमाखेटकम् । रजयति मृगान् । मृगेति किम् रञ्जयति पक्षिणः । रमणादन्यत्र तु । रञ्जयति मृगान् तृणदानेन । चुरादिषु ज्ञपादिश्चित्र् (७१७४ पृ०) । चिस्फुरोर्णौ (७१७४ पृ०) । चपयति-चययतीत्युक्तम् । चिनोतेस्तु । चापयति-चाययति । स्फारयति-स्फोरयति । अपुस्फुरत्- अपस्फुरत् ।

उभौ साभ्यासस्य । ८ । ४ । २१ ।

साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति। प्राणिणत्।

**णौ गमिरबोधने। २। ४। ४६।**

इणो गमिः स्याणौ। गमयति। बोधने तु। प्रत्याययति। इण्वदिकः (वा॰ १९४०)। अधिगमयति। हनस्तोऽचिण्णलोः (७१८६सू॰)। हो हन्तेरिति (७१५८सू॰)कुत्वम्। घातयति। ईर्ष्यतेस्तृतीयस्येति वक्तव्यम् *। तृतीयव्यञ्जनस्य तृयीयैकाच इति वार्थः। आद्ये षकारस्य द्वित्वं वारयितुमिदम्। द्वितीये त्वजादेर्द्वितीयस्येत्यस्य (७४९सू॰)अपवादतया सन्नन्ते प्रवर्त्तते। ऐर्ष्यियत्। ऐर्षिष्यत्। द्वितीयव्याख्यायां णिजन्ताच्चङि षकारएवाभ्यासे श्रूयते हलादिशेषात् द्वित्वन्तु द्वितीयस्यैव तृतीयाभावेन प्रकृतवार्त्तिकाप्रवृत्तेः। निवृत्तप्रेषणाद्धातोर्हेतुमणौ (११) धुष्टेन तुल्योऽर्थः। तेन“प्रार्थयन्ति शयनोत्थितप्रिया” इत्यादि सिद्धम्। एवं सकर्म्मकेषु सर्व्वेषूह्यम्।

इति णिच्प्रक्रिया।

---

(११) अर्थधातोरात्मनेपदित्वेन प्रार्थयन्तीत्यस्यासाधुत्वशङ्कायां तत्समर्थनायाह निवृत्तेति “निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते” इत्युक्तेः प्रार्थनं कुर्व्वन्तीत्यर्थकत्वमेव हेतुमणिच इत्यतो न अकर्त्तृगे फले परस्मैपदित्वव्याघात इति भावः।

**धातोः कर्म्मणः समानकर्त्तृकादिच्छायां वा। ३।१।७।**

इषिकर्म्मण इषिणैककर्त्तृकाद्धातोः सन् प्रत्ययो वा स्यादिच्छायाम्। धातोर्विहितत्वादिह सनआर्द्धधातुकत्वम्। इट् द्वित्वम्। सन्यतः (७६१सू०)। पठितुमिच्छति पिपठिषति। कर्म्मणः किम् गमनेनेच्छतीति करणान्मा भूत्। समानकर्त्तृकात्किम् शिष्याः पठन्त्वितीच्छति गुरुः। वाग्रहणात्पक्षे वाक्यमपि। लुङ्सनोर्घस्लृ(७११०सू०)। एकाच उपदेशइति (७२५सू०) नेट्। सस्य तत्त्वम्। अत्तुमिच्छति जिघत्सति। ईर्ष्यतेस्तृतीयस्येति (७१९७सू०) यिसनोर्द्वित्वम्। ईर्ष्यियिषति। ईर्ष्यिषिषति।

**रुदविदमुषग्रहिस्वपि प्रच्छः संश्च। १।२।८।**

एभ्यः संश्चात् क्त्वा च कितौ स्तः। रुरुदिषति। विविदिषति। मुमुषिषति।

**सनि ग्रहगुहोश्च (१)। ७।२।१२।**

ग्रहेर्गुहेरुगन्ताच्च सनइण्न स्यात्। ग्रहिज्येति (७१०६सू०) सम्प्रसारणम्। सनःषत्वस्यासिद्धत्वाड्ढष्भावः। जिघृक्षति। जुघुक्षति।

**किरश्च पञ्चभ्यः। ७।२।७५।**

---

(१) सनीति सूत्रे चकारात् श्र्युकः कितीति (७९७सू०) सूत्रात् उक इत्यनुवर्त्त्यते तेन बुभूषतीत्यादिसिद्धिः श्रयतिस्तु नानुवर्त्त्यते सनीवन्तर्द्धेति (७२००सू०) विशेषविधानात्।

कॄ गॄ दृङ् धृङ् प्रच्छ एभ्यः सनइट् स्यात्। चिकरिषति। जिगरिषति-जिगलिषति। अलेटो इतो वा (७१००पृ०) दीर्घो नेष्टः। दिदरिषते। दिधरिषते। कथमुद्दिधीर्षुरिति। भौवादिकयोर्धृङ्धृञोरिति (८४पृ०) इत्याह। पिपृच्छिषति।

## इको झल्। १। २। ९।

इगन्ताज्झलादिः सन् कित्स्यात्। बुभूषति। दीङ्। दातुमिच्छति दिदीषते। एज्विषयत्वाभावात् (२) मीनातिमिनोतीति(७१२४पृ०)आत्वन्न। अतएव सनि मीमेति सूत्रे(७२०२पृ०) माधातोः पृथङ्मीग्रहणं कृतम्।

## हलन्ताच्च। १। २। १०।

इक्समीपा (३) द्धलः परो झलादिः सन् कित्स्यात्। गुह्। जुघुक्षति। बिभित्सति। इकः किम् यियक्षते। झल्किम् विवर्द्धिषते। हल्ग्रहणं जातिपरम्। तृन्ह्। तितृक्षति-तितृंहिषति।

## अज्झनगमां सनि। ६। ४। १६।

अजन्तानां हन्तेरजादेशगमेश्च (४) दीर्घः स्याज्झलादौ सनि।

---

(२) सनः कित्त्वेन गुणाप्रसक्तेरेच्सम्भवाभावान्नात्त्वम्।

(३) पूर्वसूत्रादिकोऽनुवर्त्तनेऽपि तस्य हलवयवत्वासम्भवेन समीपवाची अन्तशब्दइत्याह इक्समीपादिति सौत्रत्वात् विशेषणस्यान्तशब्दस्य परनिपातः।

(४) गमः सामान्येन ग्रहणे गम्धातोरपि सञ्झिगंसते इत्यत्र स्यादतः सनि च (७२००पृ०) इङश्चेति(७२००पृ०) सूत्राभ्यां कृतादेशस्य इण्व दिकः (७११८पृ०) इत्यतिदिष्टस्य च ग्रहणमित्याशयेनाहाजादेशेति।

सन्लिटोर्जेः (७६१८पृ०)। जिगीषति। विभाषा चेः (७१४५पृ०)। चिकीषति। जिघांसति।

इङश्च। २।४।४७।

इणो गमिः स्यात्सनि न तु बोधने। जिगमिषति। बोधने प्रतीषिषति। इण्वदिकः (७११८पृ०)। अधिजिगमिषति। कर्म्मणि तङ्, परस्मैपदेष्वित्युक्तेः(७१०२पृ०)नेट्। झलादौ, सनीति(७१८८पृ०सू०)दीर्घः। जिगांस्यते। अधिजिगांसते। अजादेशस्येतुरक्तेर्गच्छतेर्न दीर्घः। जिगंस्यते। सञ्जिगंसते *।

इङश्च। २।४।४८।

इङो गमिः स्यात्सनि। अधिजिगांसते।

रलो व्युपधाद्धलादेः संश्च। १।२।२६।

उश्च इश्च वी ते उपधे यस्य तस्माद्धलादेः रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः। द्युतिस्वाप्योः सम्प्रसारणम् (७७७पृ०) दिद्युतिषते-दिद्योतिषते। रुरुचिषते-रुरोचिषते। लिलिखिषति-लिलेखिषति। रलः किम्। दिदेविषति। व्युपधात्किम्। विवर्त्तिषते। हलादेः किम्। एषिषिषति। इह नित्यमपि द्वित्वं गुणेन बाध्यते उपधाकार्य्यं हि द्वित्वात्प्रबलम् ओर्णोर्त्तेर्द्वित्करणस्य सामान्यापेक्षज्ञापकात्।

सनीवन्तर्द्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्। ७।२।४९।

---

* सञ्जिगंसते इत्यत्र समो गम्यृच्छिभ्याम् (७२४६पृ०) इति तङ्

इवन्तेभ्य ऋधादिभ्यश्च सन इड्वा स्यात् । इडभावे हलन्ताच्चेति (७।१।६।पृ०) कित्त्वम् । च्छ्वोरिति(७।१६६।पृ०) वस्य ऊठ् । यण् । द्वित्वम् । दुद्यूषति-दिदेविषति । स्तौतिण्योरेवेति (७२०४पृ०) वक्ष्यमाणनियमान्न षः । सुस्यूषति-सिसेविषति ।

## आप्ज्ञप्यृधामीत् । ७ । ४ । ५५ ।

एषामच ईत्स्यात्सादौ सनि ।

## अत्र लोपोऽभ्यासस्य । ७ । ४ । ५८ ।

सनि मीमेति (७२०७पृ०) आरभ्य यदुक्तन्तत्राभ्यासस्य लोपः स्यात् आप्तुमिच्छति ईप्सति अर्द्धितुमिच्छति रपरत्वम् चर्त्वम् । ईर्त्सति-अर्दिधिषति । बिभ्रज्जिषति-बिभर्जिषति-बिभ्रक्षति बिभर्क्षति ।

## दम्भइच्च । ७ । ४ । ५६ ।

दम्भेरच इत्स्यादीच्च सादौ सनि । अभ्यासलोपः । हलन्ताच्चेत्यत्र (७१६६पृ०) हल्ग्रहणाज्जातिपरमित्युक्तम् । तेन सनः कित्त्वान्नलोपः । धिप्सति-धीप्सति-दिदम्भिषति । शिश्रीषति-शिश्रयिषति । उदोष्ठ्यपूर्वस्य (७१२६पृ०) । सुस्वूर्षति-सिस्वरिषति । युयूषति-यियविषति । ऊर्णुनूषति-ऊर्णुनुविषति-ऊर्णुनविषति । न च परत्वाद्गुणावादेशयोः सतोरभ्यासे उकारो न श्रूयेतेति वाच्यम् द्विर्वचनेऽचीति (७२४पृ०) सूत्रेण द्वित्वे कर्त्तव्ये स्थानिरूपातिदेशादादेशनिषेधाद्वा । न च सन्नन्तस्य द्वित्वम्प्रति कार्य्यित्वान्निमित्तता कथमिति वाच्यम् "कार्य्यमनु-

भवन् हि कार्य्यनिमित्ततया नाश्रीयते" न त्वननुभवन्नपि न चेह सन् द्वित्वमनुभवति। बुभूर्षति बिभरिषति। ज्ञपिः पुगन्तो मित्संज्ञः (७।७२सू०) पकारान्तश्चौरादिकश्च। इडभावे इको झलिति (७।१८६सू०) कित्त्वान्न गुणः (५)। अज्झनेति (७।१८९सू०) दीर्घः परत्वाणिलोपेन बाध्यते। आप्ज्ञपीति (७।२०१सू०) ईत्। ज्ञीप्सति-जिज्ञपयिषति। अमितस्तु। जिज्ञापयिषति। जनसनेत्यात्वम् (७।१३२सू०)। सिषासति-सिसनिषति। तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः *।

**तनोतेर्व्विभाषा। ६। ४। १७।**

अस्योपधाया दीर्घो वा स्याज्झलादौ सनि। तितांसति-तितंसति-तितनिसति। आशङ्कायां सन्वक्तव्यः *। श्वा मुमूर्षति (६)। कूलम्पिपतिषति।

**सनि मीमाघुरभलभशकपतपदामच इस्। ७। ४। ५४।**

एषामच इस् स्यात्सादौ सनि अभ्यासलोपः। स्कोरिति (१६६सू०) सलोपः। पित्सति। दिदरिद्रिषति-दिदरिद्रासति। डुमिञ् मीञ् आभ्यां सन् कृतदीर्घस्य मिनोतेरपि मीरूपाविशेषादिस्। सः सीति (७७६सू०) तः। मित्सति। मित्सते। मा माने मित्सति। माङ्मेङोः। मित्सते। दोदाणोः। दित्सति। देङ्। दित्सते। दाञ्। दित्सति।

(५) न गुण इति णिचइकइतिशेषः।

(६) एकश्वविषयमरणाशंसेति बोधः।

दित्सते । धेट् । धित्सति । धाञ् । धित्सति । धित्सते । रिप्सते । लिप्सते । शक्लृ । शिक्षति । शक मर्षण इति (७१२९पृ०) दिवादिः । स्वरितेत् । शिक्षति-शिक्षते । पित्सते । राधो हिंसायां सनीस् वाच्यः * । रित्सति । हिंसायां किम् आरिरात्सति ।

## मुचोऽकर्मकस्य गुणोवा (७) । ७ । ४ । ५७ ।

षादौ सनि । अभ्यासलोपः । मोक्षते-मुमुक्षते वत्सः स्वयमेव । अकर्म्मकस्य किम् मुमुक्षति वत्सं कृष्णः । न वृद्भ्यश्चतुर्भ्यः (७७९पृ०) । विवृत्सति । तङि तु । विवर्त्तिषते । सेऽसिचीति (७१२०पृ०) वेट् । निनर्त्तिषति-निनृत्सति ।

## इट् सनि वा । ७ । २ । ४१ ।

वृङ्वृञ्भ्यामृदन्ताच्च सनइड्वा स्यात् । तितरिषति-तितरीषति-तितीर्षति । विवरिषति-विवरीषति-वुवूर्षति । वृङ् । वुवूर्षते-विवरिषते-विवरीषते ।

## स्मिपूङ्रञ्ज्वशां सनि । ७ । २ । ७४ ।

स्मि पूङ् ऋ अञ्जू अश् एभ्यः सन इट् स्यात् । सिस्मयिषते । पिपविषते । अरिरिषति । इह रिस्शब्दस्य (८) द्वित्वम् इस इति सनोऽवयवः कार्य्यभागिति कार्य्यिणोनिमित्तत्वायोगात्

(७) हलन्ताच्चेति (७१९९पृ०) कित्त्वेन गुणाप्रसङ्गे विकल्पेन विधानार्थमारम्भः ।

(८) सनि इटि गुणे च कृते अरिस इति स्थिते अजादेर्द्वितीयस्येति (७९पृ०) रिस्शब्दस्य द्वित्वमित्यर्थः ।

द्विर्वचनेऽचीति (७२४पृ०) न प्रवर्त्तते । अञ्जिजिषति । अग्नि-ग्निषते (९) । उभौ साभ्यासस्य (७१८६पृ०) । प्राणिणिषति । उच्छेः तुक् (७०पृ०सू०) । चुत्वम् । पूर्वत्रासिद्धीयमद्वित्वइति चक्काभ्यां सहितस्येटो द्वित्वं हलादिः शेषः (७९पृ०) । उचिच्छिषति । "निमित्तापाये नैमित्तिकापाय" इति त्वनित्यम् च्छ्वोरिति (७१६९पृ०) सतुक्कग्रहणात् ज्ञापकात् । प्रकृतिप्रत्यापत्तिवचनाद्वा णौ च संश्चङोरिति (७१९०पृ०) (७१९५पृ०) । सूत्राभ्यां (१०) इङो गाङ् श्वयतेः सम्प्रसारणञ्च वा । अधिजिगापयिषति-अध्यापिपयिषति । शिश्वाययिषति-शुशावयिषति । ह्वः सम्प्रसारणम् (७१९२पृ०) । जुहावयिषति । णौ द्वित्वात्प्रागचआदेशो नेत्युक्तत्वात्(७१८२पृ०) उकारस्य द्वित्वम् । पुस्फारयिषति । चुच्यावयिषति । ओः पुयण्ज्यपरे (७१८९पृ०) । पिपावयिषति । यियावयिषति । बिभावयिषति । रिरावयिषति । लिलावयिषति । जिजावयिषति । पुयण्जि किम् । नुनावयिषति । अपरे किम् बुभूषति । स्रवतीतीत्त्वं (७१८९पृ०) वा । सिस्रावयिषति-सुस्रावयिषतीत्यादि । अपरइत्येव । शुश्रूषते ।

## स्तौतिण्योरेव षण्यभ्यासात् । ८ । ३ । ६१ ।

अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यस्य । तुष्टूषति । द्युतिस्वाप्योः (७७पृ०) इत्युत्त्वम् । सुष्वापयिषति । सिषाधयिषति । स्तौतिण्योः किम् सिसिचति

(९) अनञ्जू व्यक्तिम्रक्षणादौ अभूङ् व्याप्तौ अनयोरुदित्त्वादिड्विकल्पे प्राप्ते नित्यमिट् अनेन विहितः ।

(१०) एकरूपं सूत्रद्वतमेकं द्वितीयेऽपरं पक्षे तत्राद्ये गाङादेशो, द्वितीये संप्रसारणम् ।

उपसर्गात्तु स्थादिष्वभ्यासेन चेति (७२६५सू०) षत्वम्। परि षिषिक्षति। षणि किम् तिष्ठासति। सुषुप्सति। अभ्यासादित्युक्तेर्नेह निषेधः। इण्। प्रतीषिषति(११)। इक्। अधीषिषति

## सः स्विदिस्वदिसहीनाञ्च। ८। ३। ६२।

अभ्यासेणः परस्य ण्यन्तानामेषां सस्य स एव न षः षणि परे। सिस्वेदयिषति। सिस्वादयिषति। सिसाहयिषति। स्थादिष्वेवाभ्यासस्येति (७२०सू०) नियमान्नेह। अभि सुस्रूषति।

> शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।
> सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते॥

शैषिकाच्छैषिकः सरूपो न। तेन शालीये भवइति वाक्यमेव न तु छान्ताच्छः। सरूपः किम् अहिच्छत्रे भव आहिच्छत्रः। आहिच्छत्रे भवआहिच्छत्रीयः। अणन्ताच्छः। तथा मत्वर्थात् सरूपः स न। धनवानस्यास्ति इह मतुबन्तान्मतुप् न। विरूपस्तु स्यादेव। दण्डिमती शाला। सरूपइत्यनुषज्यते अर्थद्वारा सादृश्यन्तस्यार्थः। तेन इच्छासन्नन्तात्सन् न, स्वार्थसन्नन्तात्तु स्यादेव। जुगुप्सिषते। मीमांसिषते।

इतिसन्प्रक्रिया।

(११) इह षभूते सनि इण् गताविति धातोः परस्य सस्य षत्वं भवत्येव।

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ्। ३।१।२२।**

पौनःपुन्यम्भृशार्थश्च क्रियासमभिहारस्तस्मिन् द्योत्ये यङ् स्यात्।

**गुणो यङ्लुकोः। ७।४।८२।**

अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च। सनाद्यन्ता इति (७५ ७पृ०) धातुत्वाल्लडादयः। ङिदन्तत्वादात्मनेपदम्। पुनः-पुनरतिशयेन वा भवति। बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट। धातोः(१)किम् आर्द्धधातुकत्वं यथा स्यात्। तेन ब्रूवो-वचि(७११७पृ०) रित्यादि। एकाचः किम् पुनःपुनर्जागर्त्ति। हलादेः किम् भृशमीक्षते। भृशं शोभते रोचते इत्यत्र यङ्गिति भाष्यम्। पौनःपुन्ये तु स्यादेव। रोरुच्यते। शोशुभ्यते। सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः *। आद्यास्त्रयश्चुरादावदन्ताः। सोसूच्यते। सोसूत्र्यते। अनेकाच्त्वेनाषोपदेशत्वात् षत्वन्न।

**यस्य हलः। ६।४।४९।**

यस्येति सङ्घातग्रहणम्(२)। हलः परस्य यशब्दस्य लोपः

---

(१) क्रियासमभिहारइत्यनेनैव धातुलाभेऽपि धातुग्रहणस्य फलं प्रतिपादयितुं पृच्छति धातोः किमिति वावच्यते चाख्यायते इत्यादिरूपसिद्धिस्तत्फलमित्यर्थः। धातुग्रहणाभावे धिगित्यव्ययादपि स्यात् तस्य क्रियावाचित्वादेकाच्त्वाच्चेति तु नव्याः।

(२) संघातोऽकारयकारसमुदायः तेन हर्यितेत्यादौ न यलोपः। सङ्घातग्रहणेन चार्थवत् (४५पृ०) परिभाषोपस्थित्या पुत्रकाम्येत्यादौ नातिप्रसङ्गः यवर्णमात्रग्रहणे तु परिभाषानुपस्थितेः स्यादेवेति भावः।

स्यादार्द्धधातुके। आदेः परस्य (२८४०)। अतो लोपः (७५७४०) सोसूचाञ्चक्रे। सोसूचिता। सोसूत्रिता। मोमूत्रिता।

## दीर्घोऽकितः। ७। ४। ८३।

अकितो(३)ऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च। अटाट्यते।

## यङि च। ७। ४। ३०।

अर्त्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि। यकारपररेफस्य (७११५पृ०सू०) न द्वित्वनिषेधः अराय्यते इति भाष्योदाहरणात् (४) अरारिता। अशाश्यता। ऊर्णोनूयते। बेभिद्यते। अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः। बेभिदिता।

## नित्यङ्कौटिल्ये गतौ। ३। १। २३।

गत्यर्थात् कौटिल्य (५) एव यङ् स्यान्न तु क्रियासमभिहारे कुटिलं व्रजति वाव्रज्यते।

## लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्। ३। १। २४।

(३) अभ्यासविकारेषु उत्सर्गविधीन् बाधका न बाधन्ते इति ज्ञापनायाह अकित इति तेन जञ्जभ्यते इत्यादौ दीर्घात्प्रागेव नुकि कृतेऽपि दीर्घं स्यादिति तद्वारणार्थमकित इत्युक्तम्।

(४) भाष्योदाहरणस्य सामान्येन ज्ञापकतया आर्य्यमाख्यत् आरर्य्यदित्यादि सिध्यति।

(५) नित्यशब्दोऽवधारणार्थक इत्याह कौटिल्ये एवेति।

एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् । गर्हितं लुम्पति । लोलुप्यते । सासद्यते ।

चरफलोश्च । ७ । ४ । ८७ ।

अनयोरभ्यासस्यातो नुक् स्याद्यङ्यङ्लुकोः । नुगित्यनेनानुस्वारो लक्ष्यते । स च पदान्तवद्वाच्यः । वा पदान्तस्येति (६२४०) यथा स्यात् ।

उत्परस्यातः । ७ । ४ । ८८ ।

चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्यङ्लुकोः । हलि चेति (१५७४०) दीर्घः । चंचूर्य्यते—चञ्चूर्य्यते । पम्फुल्यते- पंफुल्यते ।

जपजभदहदशभञ्जपशाञ्च (६)। ७ । ४ । ८६ ।

एषामभ्यासस्य नुक् स्याद्यङ्यङ्लुकोः । गर्हितञ्जपति । जञ्जप्यते इत्यादि ।

ग्रो यङि । ८ । २ । २० ।

गिरते रेफस्य लत्वं स्याद्यङि । गर्हितङ्गिलति । जेगिल्यते । घुमास्थेति (७११६४०) ईत्त्वम् । गुणः । देदीयते । पेपीयते । सेषीयते । विभाषा श्वेः(७१०८४०) । शोशूयते-शेश्वीयते । यङि च(७२०७४०) । सास्मर्य्यते । रीङ् ऋतः (५३२४०) चेक्रीयते । सुट् । सञ्स्क्रीयते ।

सिचो यङि । ८ । ३ । ११२ ।

(६) पशधातुर्दन्त्यान्तः सौत्रोगत्यर्थ इत्येके काशिकायान्तु तालव्यान्तः

षिचः सस्य षो न स्याद्यङि। नि-सेषिच्यते (७)।

**न कवतेर्य्यङि। ७। ४। ६३।**

कवतेरभ्यासस्य चुत्वन्न स्याद्यङि। कोकूयते। कौतिकुवत्योस्तु (८)। चोकूयते।

**नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्। ७। ४। ८४।**

एषामभ्यासस्य नीगागमः स्याद्यङ्यङ्लुकोः। अकितइति-(७२०७पृ०)उक्तेर्न्न दीर्घः। नलोपः। वनीवच्यते। सनीस्रस्यतइत्यादि।

**नुगतोऽनुनासिकान्तस्य। ७। ४। ८५।**

अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात्। नुकानुस्वारो लक्ष्यतइत्युक्तम् (७२०८पृ०)। यँय्यम्यते-यंयम्यते। तपरत्वसामर्थ्याद्भूतपूर्व्वदीर्घस्यापि न। भाम क्रोधे। बाभाम्यते। ये विभाषा (७६१पृ०)। जाजायते-जञ्जन्यते। हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः *। जेघ्नीयते। हिंसायाम् किम् जङ्घन्यते।

**रीगृदुपधस्य च। ७। ४। ९०।**

ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्यङ्लुकोः। वरीवृत्यते। वृत्भ्यादित्वान्न (१८२पृ०) णः। नरीनृत्यते।

---

(७) अभ्यासषकारस्य उपसर्गात्सुनोतीति (७३७पृ०) अभ्यासात् परस्य तु स्यादिष्वभ्यासेनेति (७३९पृ) षत्वे प्राप्ते षिचो यङीति निषेधारम्भः।

(८) कवतेरिति श्तिपा निर्देशफलमाह कौतिकुवत्योस्त्विति।

जरीगृह्यते। उभयत्र लत्वम्। चलीक्लृप्यते। रीगृत्वत इति वक्तव्यम् *। वरीवृश्च्यते। परीपृच्छ्यते।

**स्वपिस्यमिव्येञां यङि। ६। १। १९।**

सम्प्रसारणं स्यात् यङि। सोषुप्यते। सेसिम्यते। वेवीयते।

**न वशः। ६। १। २०।**

वावश्यते।

**चायः की (६)। ६। १। २१।**

चेकीयते।

**ई घ्राध्मोः। ७। ४। ३१।**

जेघ्रीयते। देध्मीयते।

**अयङ् यि क्ङिति। ७। ४। २२।**

शीङोऽयङादेशः स्याद्यादौ क्ङिति परे। शाशय्यते। अभ्यासस्य ह्रस्वः। ततो गुणः। डोढौक्यते। तोत्रौक्यते।

इति यङ्प्रक्रिया।

(६) यङि परे चायः की स्यात् दीर्घोच्चारणम् यङ्लुगर्थम्।

## यङोऽचि च। २। ४। ७४।

यङोऽच्प्रत्यये (१) लुक् स्याच्चकारात्तं विनापि बहुलं लुक् स्यात्। अनैमित्तिकोऽयम्(२)अन्तरङ्गत्वादादौ भवति। ततः प्रत्ययलक्षणेन यङन्तत्वात् (३) द्वित्वम्। अभ्यासकार्य्यम्। धातुत्वम् लडादयः। शेषात्कर्त्तरीति (७५पृ०) परस्मैपदम्। अनुदात्तङितइति (७४पृ०) तु न ङित्त्वस्य प्रत्ययाप्रत्यय (४) साधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः। यत्र हि प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत्। अतएव सुदृषत्प्रासाद (५)

(१) यङा साहचर्य्यादचीति प्रत्ययो गृह्यते न तु प्रत्याहारइत्याशयेनाह अच्प्रत्यये इति चकारेण बहुलं छन्दसीत्यतो (७४८२पृ०) बहुलमित्यनुकृष्यते इत्याह बहुलमिति।

(२) अनैमित्तिक इति निमित्तानिर्द्देशादनैमित्तिकत्वं नैमित्तिकत्वे बोभविता मर्मार्जितेत्यादौ गुणवृद्धिनिषेधापत्तेः न धातुलोपे आर्द्धधातुक इति (७२१८पृ०) सूत्रेणार्द्धधातुकनिमित्तकधात्वंशलोप एव गुणवृद्धोर्निषेधात् उक्तस्थले च यङ्लुकोऽनैमित्तिकत्वेनार्द्धधातुकनिमित्तकत्वाभावात् गुणवृद्धोरिष्टत्वम्। अचीति सप्तमीनिर्द्देशेन अच्प्रत्यये तु सनिमित्तकत्वमेव तेन लोलुयः लोलुव इत्यादौ आर्द्धधातुकरूपाच्प्रत्ययनिमित्तकतया गुणनिषेध इति विशेषः।

(३) यङन्तत्वादिति। सन्यङोरिति(७१०१पृ०)अत्र षष्ठी न तु सप्तमी तेन यङो लुका लुप्तत्वेन (११४पृ०सू०) प्रत्ययलक्षणाप्रवृत्तावपि न क्षतिः यङन्ततया द्वित्वनिमित्तत्वस्य तत्रापि सत्त्वात्।

( ४) ऋतेरीयङित्यादौ (७१०८पृ०) प्रत्यये चिक्षङ् मह्रीङादौ चाप्रत्यये च ङित्त्वस्य सत्त्वेन यङो लुका लुप्तत्वेन प्रत्ययलक्षणाप्रवृत्तेस्तदाश्रितङित्त्वेन नात्मनेपदमिति भावः।

(५ ) शोभना दृषदोऽस्मिन्निति बहुव्रीहौ दृषच्छब्दस्य वाक्ये जसन्ततया लुप्तस्य जसोऽसन्तत्वात् प्रत्ययलक्षणेन नासन्तत्वमिति न दीर्घः।

इत्यतात्वसन्तस्येति (१८२४पृ०) दीर्घो न। येऽपि स्पर्द्धगीङा-दयोऽनुदात्तङितस्तेभ्योपि न, अनुदात्तङित (७४पृ०) इत्यनु-बन्धनिर्द्देशात् तत्र च श्तिपा शपेति(७२४पृ०का०) निषेधात्। अतएव श्यन्नादयो न, गणेन निर्द्देशात्। किन्तु शबेव। चर्क-रीतञ्चेत्यदादौ (७१२७पृ०) पाठाच्छपो लुक्।

## यङो वा। ७। ३। ९४।

यङन्तात् (६) परस्य हलादेः पितः सार्व्वधातुकस्य ईड्वा स्यात्। भूसुवोरिति (७१८पृ०) गुणनिषेधो यङ्लुकि भाषायान्न बोभूतु तेतिक्ते इति (७५२६पृ०) छन्दसि निपा-तनात्। अतएव यङ्लुग् भाषायामपि सिद्धः। न च (७) यङ्लुक्यप्राप्तएव गुणाभावो निपात्यतामिति वाच्यम् प्रकृति-ग्रहणे यङ्लुगन्तस्यापि ग्रहणात् द्विप्रयोगो द्विर्व्वचनं षाष्ठ-मिति सिद्धान्तात्। बोभवीति-बोभोति। बोभूतः। बोभुवति। बोभवाञ्चकार। बोभविता। अबोभवीत्-अबोभोत्। अबोभू-ताम्। अबोभवुः। बोभूयात्। बोभूयाताम्। बोभूयास्ताम्। गातिस्थेति(७१८पृ०)सिचो लुक्। यङो वेतीट् पक्षे गुणं बाधि-त्वा नित्यत्वाद्वुक्। अबोभूवीत्-अबोभूत्। अबोभूताम्। अभ्य-

(६) श्रूयमाणयङन्तात् अनुवृत्तस्य पित्सार्व्वधातुकहलोटसम्भवेन यङ्-शब्देन यङ्लुगेव गृह्यते तस्य च लुका लुप्तत्वेऽपि यङन्तत्वमस्त्येव प्रत्ययनिमित्तककार्य्ये एव लुका लुप्तस्य निमित्ततानिषेधात्।

(७) बोभूत्विति समुदायस्य द्विरुक्ततयातिरिक्तत्वात् भूसुवोरिति निषे-धाप्रवृत्तिमाशङ्कते न चेति समाधत्ते प्रकृतीति तथा च प्रकृतिग्रहणे यङ्लुगन्तग्रहणे श्तिबादिनिर्द्देशानां निषेधानुपपत्तिरिति भावः।

स्ताश्रयो जुस् (८)। नित्यत्वाद्वुक्। अबोभूवुः। अबोभविष्य-
दित्यादि। पास्पर्द्धीति—पास्पर्द्धि। पास्पर्द्धः। पास्पर्द्धति।
पास्पर्त्सि। झलभ्यो हेर्धिः(७१०९पृ०)। पास्पर्द्धि। लङ्। अपा
स्पर्त्-अपास्पर्द्। सिपि। दश्चेति(७।२१पृ०)रुत्वपक्षे रोरि(८०पृ०)।
अपास्पाः। जागाद्धि। जाघात्सि। अजाघात्। सिपि।
रुत्वपक्षे। अजाघाः। नाथृ। नानात्ति। नानात्तः। दध।
दादद्धि। दादद्धः। दाधत्सि। अदाधत्। अदादधुः। अदाधः-
अदाधत्। लुङि। अदादाधीत्-अदादधीत्। चोस्कुन्दीति-
चोस्कुन्ति। अचोस्कुन्। अचोस्कुन्ताम्। अचोस्कुन्दुः।
मोमुदीति—मोमोत्ति। मोमोदाञ्चकार। मोमोदिता।
अमोमुदीत्—अमोमोत्। अमोमुत्ताम्। अमोमुदुः। अमो-
मुदीः-अमोमोः-अमोमोत्। लुङि गुणः। अमोमोदीत्।
चोकूर्त्ति-चोकूर्दीति। लङ् तिप्। अचोकूर्त्त-अचोकूर्दीत्।
सिप् पक्षे। अचोकूः अचोखूः (९) अजोगूः। वनीवञ्चीति-
वनीवङ्क्ति। वनीवक्तः। वनीवचति। अवनीवञ्चीत्—अव-
नीवन्। जङ्गमीति-जङ्गन्ति। अनुदात्तोपदेशेति (७११०पृ०)
अनुनासिकलोपः। जङ्गतः। जङ्गमति। म्वोश्च(७५०पृ०)। जङ्ग-
न्मि। जङ्गन्वः। एकाज्ग्रहणोक्त(७२६पृ०)त्वान्नेण्निषेधः। जङ्ग-
मिता। अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक्। जङ्ग-
हि। मो नो धातोः(१५१पृ०)। अजङ्गन्। अनुबन्धनिर्देशान्न च्लेरङ्।

---

(८) गातिस्थेति (७।१९पृ०) सिचो लुकि सिचः परत्वाभावेऽपि अभ्यस्त-
परत्वात् झेर्जुस् (७।७पृ०)इत्याहाभ्यस्ताश्रय इति।

(९) कुर्द खुर्द गुर्द क्रीडायामिति त्रयाणां क्रमेण लङ्सिपि रूपाणि।

ह्मान्तेति न(७५२पृ०)वृद्धिः अजङ्घनीत्। अजङ्घनिष्टाम्। हन्ते-र्यङ्लुक् (१०)। अभ्यासाच्चेति(७११०पृ०)कुत्वम्। यद्यपि हो-हन्तेरित्यतो (१५८पृ०) हन्तेरित्यनुवर्त्त्य विहितम्। तथापि यङ्लुकि भवत्येवेति न्यासकारः। श्तिपा शपेति (७२५पृ०) निषेधस्त्वनित्यः गुणो यङ्लुकोरिति (७२०६पृ०) (११) सामा-न्यापेक्षज्ञापकादिति भावः। जङ्घनीति-जङ्घन्ति। जङ्घतः। जंघ्नति। जङ्घनिता। श्तिपा निर्द्देशाज्जादेशो (७१११पृ०) न। जङ्घहि। अजङ्घनीत्-अजङ्घन्। जङ्घन्यात्। आशिषि तु। बध्यात् (१२)। अबधीत् अबधिष्टामित्यादि। बधादेशस्य द्वित्वन्न भवति स्थानिवत्त्वेनानभ्यासस्येति(७६पृ० सू०) निषेधात्। तद्धि समानाधिकरणन्धातोर्व्विशेषणम् बहुव्रीहिबलात्। आङ्पूर्व्वात्तु आङो यमहन (७१४५०) इत्यात्मनेपदम्। आज-ङ्घते इत्यादि। उत्परस्येति (७२०८पृ०) तपरत्वान्न गुणः। हलि चेति(१५७पृ०) दीर्घस्तु स्यादेव तस्यासिद्धत्वेन तपरत्वनि-वर्त्यत्वायोगात्। चञ्चुरीति-चञ्चूर्त्ति। चञ्चूर्त्तः। चञ्चुरति।

---

(१०) हन्तेरित्यनुवर्त्तने तस्य श्तिपा निर्द्देशात् यङ्लुकि कुत्वं न भवती-त्याशङ्क्य तन्निषेधस्यानित्यतया कुत्वमिति समाहितम्।

(११) सामान्यापेक्षेति। एकाचो द्वे (७६पृ०) इत्यत्रैकाज्ग्रहणात् यङ्-लुकि द्वित्वं कुत्रापि न भवति तथा च गुणो यङ्लुकोरिति (७२०६पृ०) अभ्यासस्य विहितो गुणो विषयमलभमानः श्तिपेत्यादिनिषेधानां क्वचित् यङ्लुक्यप्रवृत्तिं ज्ञापयति।

(१२) बध्यादिति कृतद्वित्वस्यापि हनः स्थाने बधादेश इति सिद्धान्तः तेन पुनर्न द्वित्वं तत्र हेतुमाह स्थानिवत्त्वेनेति अनभ्यासस्येति लिटि धातोरनभ्यासस्येति (७६पृ०) सूत्रेऽनभ्यासपदे नास्ति अभ्यासो यस्येति बहुव्रीहिसमासः तच्च धातोर्व्विशेषणं तेन हनधातोरभ्यस्ततया तदादेशबधस्याप्यभ्यस्तत्वान्न द्वित्वमिति भावः।

अचञ्चुरीत्-अचञ्चूः। चङ्कनीति-चङ्कन्ति। जनसनेत्यात्त्वम् (उ१२२पृ०)। चङ्कातः। गमहनेति(उ६८पृ०)उपधालोपः। चंखति। चङ्काहि। चङ्कनानि। अचंखनीत् अचङ्कन्। अचङ्काताम्। अचंख्नुः। ये विभाषा(उ६१पृ०) चङ्कायात्-चङ्कन्यात्। अचङ्कानीत्। उतो वृद्धिरित्यत्र (उ११४पृ०) नाभ्यस्तस्येत्य (उ१३१पृ०मू) नुवृत्तेरुतो वृद्धिर्न। योयोति-योयवीति। अयोयवीत्-अयोयोत्। योयुयात्। आशिषि दीर्घः। योयूयात्। अयोयावीत्। नोनवीति-नोनोति। जाहेति-जाहाति। ई हल्यघोः (उ१३०पृ०) जाहीतः। इश्च जहातेश्च(उ१३०पृ०। आ च हौ (उ१३०पृ०)लोपो यि (उ१३०पृ०) घुमास्था (उ११६पृ०) एर्लिङीत्येते (उ६४पृ०) पञ्चापि न भवन्ति श्तिपा निर्देशात्। जाहाति। जाहासि-जाहेषि। जाहीथः। जाहीथ। जाहीहि। अजाहेत्-अजाहात्। अजाहीताम्। अजाहुः। जाहीयात्। आशिषि। जाहायात्। अजाहासीत्। अजाहासिष्टाम्। अजाहिष्यत्। लुका लुप्ते प्रत्ययलक्षणाभावात् स्वपिस्यमीत्युक्तं(उ२१०पृ०) न। रुदादिभ्य इति(१२३पृ०)गणनिर्दिष्टत्वादिण्न। सास्वपीति-सास्वप्ति। सास्वप्तः। सास्वपति। असास्वपीत्-असास्वप्। सास्वप्यात्। आशिषि तु। वचिस्वपीत्युक्तम्(उ१०५पृ०)। सासुप्यात्। असास्वापीत्-असास्वपीत्।

## रुग्रिकौ च लुकि। ७। ४। ९१।

ऋदुपधस्य धातोरभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युर्यङ्लुकि।

ऋतश्च। ७। ४। ६२।

ऋदन्तधातोरपि तथा। वर्वृतीति-वरिवृतीति-वरीवृतीति-वर्वर्त्ति-वरिवर्त्ति-वरीवर्त्ति। वर्वृत्तः। वर्वृतति। वर्वर्त्तामास। वर्वर्त्तिता। गणनिर्द्दिष्टत्वान्न इङ्गस्त्वतुर्भ्यः। इति (७७८पृ०) न। वर्वर्त्तिष्यति। अवर्वृतीत्—अवर्वर्त्। सिपि दश्चेति (७।२१पृ०) रुत्वपक्षे रोरि (८०पृ०)। अवर्वाः। गणनिर्द्दिष्टत्वादङ्न। अवर्वर्त्तीत्। चर्करीति-चर्कर्ति-चरिकर्त्ति-चरीकर्त्ति। चर्कृतः। चर्क्रति। चर्करांचकार। चर्करिता। अचर्करीत्-अचर्कः। चर्क्रयात्। आशिषि रिङ्। चक्रियात्। अचर्कारीत्। ऋतश्चेति तपरत्वान्नेह। कॄ विक्षेपे। चाकर्त्ति। तातर्त्ति। तातीर्त्तः। तातीर्हि तातराणि। अतातरीत्-अतातः। अतातीर्त्ताम्। अतातरुः। अतातारीत्। अतातारिष्टामित्यादि। अर्त्तेर्यङ्लुकि द्वित्वेऽभ्यासस्य उरत्वं रपरत्वम्। हलादिः शेषः (७६पृ०)। रुक्। रिग्नीकोस्तु अभ्यासस्यासवर्णे इति (७४५पृ०)। इयङ्। अरर्त्ति-अरियर्त्ति-अररीति-अरियरीति। अरृतः। अरियृतः। झि, अत्, यण्। रुको रोरीति (८०पृ०) लोपः। नच तस्मिन् कर्त्तव्ये यणः स्थानिवत्त्वम् पूर्व्वत्रासिद्धे तन्निषेधात्। आरति। अरियृति। लिङि। श्तिपा निर्द्देशाद्गुणोऽर्त्तीति (७८६पृ०) गुणो न। रिङ्। रलोपः दीर्घः। आरियात्-अरिरियात्-अरीरियात्। ग्रह ग्रहणे। जर्गृहीति-जर्गर्ढि। जर्गृढः। जर्गृहति। अजर्घर्ट्। ग्रहातेस्तु। जाग्रहीति-जाग्राढि। तसादौ ङिन्निमित्तं सम्प्रसारणम् तस्य वहिरङ्गत्वेनासिद्धत्वान्न ढत्वादयः। जागृढः। जागृहति। जाग्रहीषि-जाग्रक्षि। लुटि। जाग्रहिता। ग्रहोऽलि

टीति (७।६६८सू०) दीर्घस्तु न तत्रैकाचइत्यनुवृत्तेः। माधवस्तु दीर्घमाह तद्भाष्यविरुद्धम्। जर्गृधीति-जर्गर्द्धि। जर्गृद्धः। जर्गृधति। जर्गृधीषि-जर्घर्त्सि। अजर्गृधीत्। ईडभावे गुणः हल्ङ्यादि (१११सू०सू०) लोपः। भष्भावः। जश्चर्त्वे। अजर्घर्त्। अजर्गृद्धाम्। सिपि। दश्चेति (७।२१सू०) पक्षे रुत्वम्। अजर्घाः-अजर्गर्धीत्। अजर्गर्धिष्टाम्। पाप्रच्छीति-पाप्रष्टि। तसादौ ग्रहिज्येति (७।०६सू०) सम्प्रसारणन्न भवति श्तिपा निर्देशात्। च्छोः शूडिति (७।६६८सू०) शः। व्रश्चेति (१२०सू०) षः। पाप्रष्टः। पाप्रच्छति। पाप्रश्मि। पाप्रच्छः। पाप्रश्मः। यकारवकारान्तानां तु ऊडभाविनां यङ्लुङ्नास्तीति च्छोरिति सूत्रे भाष्ये ध्वनितम् (१२) कैयटेन स्पष्टीकृतम्। इदं च च्छोरिति यत्रोठ् तद्विषयकम्। ज्वरत्वरेति- (७२१८सू०) ऊडभाविनोः स्त्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यम् माधवादिसम्मतञ्च। मव्य बन्धने। अयं यान्त ऊड्भावी। तेवृ देवृ देवने इत्यादयो वान्ताः। हय गतौ। जाहयीति-जाहति। जाहतः। जाहयति। जाहयीषि-

(१२) ध्वनितमिति च्छोः शूड़िति सूत्रे किद्ग्रहणमनुवर्त्तते न वेति विकल्प्य कांश्चित् दोषानुद्भाव्य परिहृत्य चोक्तं भाष्यकृता एतावानेव विशेषः अनुवर्त्तमाने किद्ग्रहणे छः षत्वं वक्तव्यमननुवर्त्तने तु अनेन छस्य शत्वे कृते शान्तत्वादेव षो भविष्यति तथाच व्रश्चादिसूत्रे छग्रहणं न कर्त्तव्यं तद्विनापि प्रष्टा प्रष्टुमित्यादिरूपसिद्धेरिति भावः। एवं वदता च भाष्यकृता ऊड्भाविभ्यो यङ्लुक् नास्तीत्युक्तप्रायमन्यथा-दिवेर्यङ्लुकि ईड़भावपक्षे देदेतीति देदेषीत्यादौ ऊठो भावाभावाभ्यां महान् विशेषः स्यात् किद्ग्रहणाननुवृत्तावूठः प्रवृत्त्या देद्योतीत्यादिरूपविशेषसत्त्वेन एतावानेवेत्येवकारविरोधापत्तेः।

जाहसि। वलि (४२१४०सू०) लोपे। यञादौ (७८४०सू०) दीर्घः। जाहामि। जाहावः। जाहामः। हर्य गतिकान्त्योः। जाहर्यीति-जाहर्त्ति। जाहर्त्तः। जाहर्य्यति। लोटि। जाहर्हि। अजाहः। अजाहर्त्ताम्। अजाहर्य्युः। मव बन्धने।

## ज्वरत्वरस्त्रिव्यविमवामुपधायाश्च। ६। ४। २०

ज्वरादीनामुपधावकारयोरूठ् स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये। अत्र क्ङितीति नानुवर्त्तते अवते स्तुनि ओतुरिति दर्शनात्। अनुनासिकग्रहणञ्चानुवर्त्तते अवतेर्म्मनिन्प्रत्यये तस्य टिलोपे ओमिति दर्शनात्। ईड्भावे ऊठि पिति गुणः। मामोति मामवीति। मामूतः। मामवति। मामोषि। मामोमि। मामावः। मामूमः। मामोतु। मामूतात्। मामूहि। मामवानि। अमामोत्। अमामोः। अमामवम्। अमामाव। अमामूम। तुर्वी हिंसायाम्। तोतूर्वीति।

## राल्लोपः। ६। ४। २१।

रेफात्परयोश्च्छ्वोर्ल्लोपः स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये। इति वलोपः। (७१२४०सू०) लघूपधगुणः।

## न धातुलोप आर्द्धधातुके। १। १। ४।

धात्वंशलोपनिमित्ते (१४) आर्द्धधातुके परे इको गुणवृद्धी

(१४) आर्द्धधातुके धातुलोपोनास्तीति लक्षणया धातुपदं धात्वंशपरमित्याशयेनाह धात्वंशेति। धातोर्लोपो यस्मिन्निति बहुव्रीहिणा

न स्तः। इति नेह निषेधः तिबादीनामनार्द्धधातुकत्वात्। हलि चेति (१५७पृ०) दीर्घः। तोतूर्त्तः। तोतूर्व्वति। तोथोर्त्ति। दोदोर्त्ति। दोधोर्त्ति। मूर्च्छा। मोमोर्त्ति। मोमूर्त्तः। मोमूर्च्छतीत्यादि। आर्द्धधातुके (१५) इति विषयसप्तमी तेन यङि विवक्षिते अजेर्व्वी। वेवीयते। अस्य यङ्लुग्नास्ति लुका अपहारेण विषयत्वासम्भवेन वीभावस्याप्रवृत्तेः।

इति यङ्लुक्प्रक्रिया।

धातुलोपपदं तन्निमित्तपरं तच्चार्द्धधातुकविशेषणमित्याह लोपनिमित्तइति यङो लोपस्तु निर्निमित्तइत्यार्द्धधातुके न गुण वृद्धिनिषेधइत्युक्तं (७२११पृ०) प्राक्। प्राञ्चस्तु धात्वंशलोपे सति आर्द्धधातुके परे गुणवृद्धिनिषेधं सूत्रार्थं मत्वा बेभिदिता मर्मृजितेत्युदाजह्रुः।

(१५) अधिकृते इत्यादिः आर्द्धधातुकइत्यधिकृत्य अजेर्वीभावविधानात्।

**सुप आत्मनः क्यच् । ३ । १ । ८ ।**

इषिकर्म्मणः (१) एषितृसम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच्-प्रत्ययो वा स्यात् । धात्ववयवत्वात्सुब्लुक् (२२०पृ०सू०) ।

**क्यचि च । ७ । ४ । ३३ ।**

अस्य ईत्स्यात् । आत्मनः पुत्रमिच्छति पुत्रीयति । वान्तो यिप्रत्यये (३८पृ०) । गव्यति । नाव्यति । लोपः शाकल्य-स्येति (४१पृ०) तु न अपदान्तत्वात् । तथाहि ।

**नः क्ये । १ । ४ । १५ ।**

क्यचि क्यङि (२) च नान्तमेव पदं स्यान्नान्यत् । सन्निपातपरिभाषया (३) क्यचो यस्य लोपो न । गव्याञ्चकार । गव्यिता । नाव्याञ्चकार । नाव्यिता । नलोपः (१०६पृ०सू०) । राजीयति (४) ।

(१) धातोः कर्मणः (१८८पृ०) इति सूत्रादिच्छायामिति, कर्म्मण इति, वेति चानुवर्त्तते तत्र च सन्निधानादिच्छाया एव कर्म्मण इत्यन्वय इत्याशयेनाह इषिकर्म्मण इत्यादि । परस्य पुत्रमिच्छतीत्यादावतिप्रसङ्गवारणाय सूत्रे आत्मन इत्युपात्तमात्मशब्दश्च स्वशब्दपर्यायः स च क इत्याकाङ्क्षायां सन्निधानादिच्छाकर्त्तैव गृह्यते इत्याशयेनाह एषितृसम्बन्धिन इति सुबन्तस्योक्तविशेषणद्वयमर्थद्वारा बोध्यम् । तत्त्व० ।

(२) हलन्तात् क्यष् दुर्लभ इत्याशयेनाह क्यचि क्यङीति ।

(३) यस्य हल इति (७२६पृ०) लोपमाशङ्क्याह सन्निपातेति । यकारे परे वान्तादेशविधानात् वकारोयलोपस्य निमित्तं न भवतीति भावः । तत्त्व० ।

(४) क्यचि चेति अत्वस्येत्त्वे कर्त्तव्ये पूर्व्वत्रासिद्धमिति (१२पृ०) नलोपोऽसिद्धो न भवति नलोपः सुप्स्वरेति (१५६पृ०) नियमात् ।

प्रत्ययोत्तरपदयोश्च (५६८पृ०)। त्वद्यति। मद्यति। एकार्थयोरित्येव। युष्मद्यति। अस्मद्यति। हलि च(१५७पृ०)। गीर्यति। पूर्यति। धातोरित्येव। नेह। दिवमिच्छति दिव्यति। इह पुरमिच्छति पुर्यतीति माधवोक्तमप्रत्युदाहरणञ्चिन्त्यम् पूर्गिरो: साम्यात्। दीव्यतीति दीर्घस्तु प्राचः प्रामादिक(५)एव। अदस्यति। रीङृतः (५३२पृ०) कर्त्रीयति।

क्यच्व्योश्च (७३०पृ०) (६)। गार्गीयति। वाच्यति (७)। अकृत्सार्वेति (७५१पृ०) दीर्घः। कवीयति। समिध्यति।

## क्यस्य विभाषा ६।४।५०।

हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्द्धधातुके। आदेः परस्य (२८पृ०)। अतो लोपः (७५७पृ०)। तस्य स्थानिवत्त्वाल्लघूपधगुणो (७१२पृ०)न। समिधिता-समिध्यिता। मान्तप्रकृतिक(८)सुबन्तादव्ययाच्च क्यच् न। किमिच्छति। इदमिच्छति। स्वरिच्छति।

## अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु। ७।४।३४।

(५) प्रामादिक इति दिवधातोः क्विपि द्यूरिति ततः क्यचि द्यूयतीत्येव भवति क्विचि तु उपधागुणे देविति स्यात् ततः क्यचि देव्यतीति स्यात्। दिवमिच्छति दिव्यतीति तु कप्रत्ययान्तदिवशब्दस्येति बोध्यम्।

(६) अपत्यप्रत्यययाकारलोपं स्मारयति क्यच्व्योश्चेति।

(७) नः क्ये इति (७२२पृ०) नियमेन पदत्वाभावात् कुत्वं नेत्युदाहरति वाच्यतीति।

(८) मान्ताव्ययेभ्यः प्रतिषेधो वक्तव्य * इति वार्त्तिकस्य यथाश्रुतव्याख्याने पुत्रमिच्छतीत्यत्रापि न स्यात् तस्य मान्तत्वात् किन्तु पुत्रौ पुत्रान् वा इच्छतीत्यादावेव स्यादतो व्याचष्टे मान्तप्रकृतिकेति।

क्यजन्ता निपात्यन्ते। अशनायति (९)। उदन्यति। धनायति। बुभुक्षादौ किम् अशनीयति। उदकीयति। धनीयति।

## अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि। ७। १। ५१।

एषां क्यचि असुगागमः (१०) स्यात्। अश्ववृषयोर्मैथुनेच्छायाम् *। अश्वस्यति वडवा। वृषस्यति गौः। क्षीरलवणयोर्लालसायाम् *। क्षीरस्यति बालः। लवणस्यति उष्ट्रः। सर्व्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ *। दधिस्यति ‡। दध्यस्यति। मधुस्यति। मध्वस्यति।

## काम्यच्च। ३। १। ९।

उक्तविषये(११)काम्यच् स्यात्। आत्मनः पुत्रमिच्छति पुत्रकाम्यति। पुत्रकाम्यिता। इह यस्य हल इति(उ२०६पृ०)लोपो न, अनर्थकत्वात् यस्येति सङ्घातग्रहणमित्युक्तम् (उ२०६पृ०)। यशस्काम्यति। सर्पिष्काम्यति। मान्ताव्ययेभ्योऽप्ययं स्यादेव। किंकाम्यति। स्वःकाम्यति।

## उपमानादाचारे। ३। १। १०।

(९) सद्योभोजनेच्छा बुभुक्षा सद्यउदकपानेच्छा पिपासा धनवतोऽपि धनेच्छा गर्द्धः। प्रत्युदाहरणं तु कालान्तरोपयोगिभोजनोदकेच्छायां दरिद्रस्य च धनेच्छायां बोध्यम्।

(१०) आज्जसेरसुगित्यतो(उ५२९पृ०) ऽसुगित्यनुवर्त्तते।

(११) उक्तविषये इति इषिकर्म्मण एषितृसम्बन्धिनः सुबन्तादित्युक्तार्थे इत्यर्थः।

‡ सुकः आगमत्वेनादेशप्रत्यययोरिति नियमात् (९५पृ०) न षः

उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्यात्। पुत्रमिवाचरति पुत्रीयति छात्रम्। विष्णूयति द्विजम्। अधिकरणाच्चेति वक्तव्यम् *। प्रासादीयति कुट्यां भिक्षुः। कुटीयति प्रासादे।

**कर्तुः क्यङ् सलोपश्च। ३। १। ११।**

उपमानात्कर्तुः सुबन्तादाचारे क्यङ् वा (१२) स्यात्। सान्तस्य तु कर्तृवाचकस्य लोपो वा स्यात्। क्यङ् वेत्युक्तेः पक्षे वाक्यम्। सान्तस्य लोपस्तु क्यङ्सन्नियोगशिष्टः। स च व्यवस्थितः।

"ओजसोऽप्सरसो नित्यमितरेषां विभाषया"।

कृष्ण इवाचरति कृष्णायते। ओजःशब्दो वृत्तिविषये तद्वति। ओजायते। अप्सरायते। यशायते--यशस्यते। विद्वायते विद्वस्यते। त्वद्यते। मद्यते। अनेकार्थत्वे तु। युष्मद्यते। अस्मद्यते। क्यङ्मानिनोश्च(४०७पृ०)। कुमारीवाचरति कुमारायते। हरिणीवाचरति हरितायते। गुर्वीव गुरूयते। सपत्नीव-(१३) सपत्नायते-सपतीयते-सपत्नीयते।

---

(१२) धातोः कर्मणः समानकर्तृकादिच्छायां वेत्यतो वेत्यनुवर्त्तते।

(१३) सपत्नीवेति त्रितयसाधारणं वाक्यं सपत्नायते इति शत्रुपर्य्यायाच्छार्ङ्गरवादि (२४१पृ०) ङीनन्तात् सपत्नशब्दात क्यङि पुंवद्भावेऽकृत्सार्वेति (७५१पृ०) दीर्घे सिद्धम्। सपतीयते इति समानस्वामिकाभिधायिनोभाषितपुंस्कस्य, नित्यं सपत्न्यादिष्विति (२२४पृ०) नादेशे नान्तत्वात् ङीप् ततः क्यङि पुंवद्भावे च दीर्घः। सपत्नीयते इति विवाहजन्यसंस्कारविशेषनिमित्तेन पतिशब्देन समासे नित्यस्त्रीत्वात् न पुंवदिति भेदः।

युवतिरिव युवायते। पट्वीमृद्व्याविव पट्वीमृदूयते (१४)। न कोपधायाः (४०८पृ०)। पाचिकायते। आचारेऽवगल्भक्लीवहोडेभ्यः (१५) क्विब् वा *। वाग्रहणात् क्यङपि। अवगल्भादयः पचाद्यजन्ताः। क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वञ्च प्रत्ययस्य प्रतिज्ञायते तेन तङ्। अवगल्भते। क्लीवते। होडते। भूतपूर्व्वादप्यनेकाचआम्३५(७पृ०सू०)एतद्वार्त्तिकारम्भसामर्थ्यात्। न च अवगल्भते इत्यादिसिद्धिस्तत्फलम् केवलानामेवाचारेऽपि वृत्तिसम्भवात् धातूनामनेकार्थत्वात्। अवगल्भाञ्चक्रे। होडाञ्चक्रे। वार्त्तिकेऽवेत्युपसर्ग्गविशिष्टपाठात् केवलादुपसर्ग्गान्तरविशिष्टाच्च क्यङेवेति माधवादयः। तङ् नेति तूचितम्। सर्व्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः *। पूर्व्ववार्त्तिकन्तु अनुबन्धासङ्गार्थन्तत्र क्विबनूद्यते। प्रातिपदिकग्रहणादिह सुप इति न सम्बध्यते तेन पदकार्य्यन्न (१६)। कृष्णइवाचरति। कृष्णति। अतो गुणइति (८८पृ०)शपा सह पररूपम्। स्व इवाचरति। स्वति। स्वतः। स्वन्ति। प्रत्ययग्रहणमपनीय अनेकाच (३५७पृ०सू०) इत्युक्तेर्न्नाम्। सौ। स्वतुः। स्वुः। द्वित्वम्। अतो गुणे (८८पृ०)। अतआदेरिति (३२६पृ०) दीर्घः। णल औ वृद्धिः। अतुसादिषु तु आतो लोप इटि चेति (३८४पृ०) आलोपः। मालेवाचरति मालाति।

---

(१४) पूर्व्वपदस्य क्यङ्परत्वाभावान्न पुंवत्।

(१५) गल्भ धार्ष्ट्ये क्लीव आधार्ष्ट्ये होडृ अनादरे इत्यर्थकधातुभ्यः पचाद्यच्।

(१६) पदकार्य्यन्नेति तेन तनोतीति तत् सइवाचरति ततति त्वचमिवाचरति त्वचतीत्यादौ जश्त्वकुत्वे नेत्यर्थः।

लिङ्गविशिष्टपरिभाषया, एकादेशस्य (४६४०) पूर्व्वान्तत्वाद्वा क्विप्। मालाश्चकार। लङि। अमालात्। अत्र हलङ्यादि- (१११सू०) लोपो न, ङीसाहचर्य्याद्दापोऽपि सोरेव लोपविधा- नात्। इट्सकौ (७८५सू०सू०)। अमालासीत्। कविरिव कवयति। आशीर्लिङि। कवीयात्। सिचि वृद्धिरित्यत्र (७५०सू०)धातोरित्यनुवर्त्त्य ✱ धातुरेव यो धातुरितिव्याख्याना- न्नामधातोर्न्न वृद्धिरिति कैयटादयः। अकवयीत्। माध- वस्तु नामधातोरपि वृद्धिमिच्छति। अकवायीत्। विरिव वयति। विवाय। विव्यतुः। अवयीत्–अवायीत्। श्रीरिव श्रयति। शिश्राय। शिश्रियतुः। पितेव पितरति। आशिषि (७८३सू०सू०) रिङ्। पित्रियात्। भूरिव। भवति। अत्र गाति- स्थेति, (७८८सू०) भुवोवुगिति, (७८९सू०) भवतेरिति (७१०सू०) च न भवति अभिव्यक्तत्वेन धातुपाठस्यस्यैव तत्र ग्रहणात्। अभावीत्। बभाव। द्रुरिव। द्रवति। णिश्रीति (७६०सू०) न चङ्। अद्रावीत्।

**अनुनासिकस्य क्विब्झलोः क्ङिति। ६।४।१५।**

अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति। इदमिवाचरति इदामति। राजेव राजानति। पन्था इव पथीनति। मथीनति। ऋभुक्षीणति। द्यौरिव देवतीति माधवः। अत्र ऊठि द्यवतीत्युचितम्। कइव कति। चकाविति हरदत्तः। माधवस्तु यण्लोपाविति(७६०सू०वा०)(१७)

---

✱ क्तवद्धातोरित्यतः (७१००सू०) सूत्रादिति शेषः।

(१७) यण्लोपावियङुयण्गुणवृद्धि दीर्घेभ्यः पूर्व्वविप्रतिषेधेनेति वार्त्तिकवच- नात् अतोलोपः सन्निहितत्वात् अनन्तरस्येति न्यायात् अकृत्सार्व्व-

वचनात् णलि वृद्धिं बाधित्वाऽतो लोपात् (७५७पृ०सू०) चक्र इति रूपमाह। स्व इव सस्वौ-सस्व। यत्तु स्वामास स्वाञ्चकारेति तदनाकरमेव (१८)।

**भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः। ३। १। १२।**

अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे (१९) क्यङ् स्यात्। हलन्तानामेषां लोपश्च। अभृशो भृशो भवति भृशायते। अच्वेरिति पर्युदासबलादभूततद्भाव इति लभ्यम् तेनेह न क्व दिवा भृशा भवन्ति। ये रात्रौ भृशाः नक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थः। सुमनस् अस्य सलोपः। सुमनायते। चुरादौ संग्राम युद्ध इति (७१८७पृ०) पठ्यते तत्र संग्रामेति प्रातिपदिकम् (२०) तस्मात्तत्करोतीति (७१८५पृ०) णिचि सिद्धः। तत्सन्नियोगेनानुबन्ध (२१) आसज्यते। युद्धे योऽयं ग्रामशब्द इत्युक्तेऽपि

---

धात्वकेति(७५१पृ०)दीर्घमेव बाधते न तु व्यवहितमपि अत आदेरिति (७६६पृ०)दीर्घमपीति माधवग्रन्थादनेन हरदत्तग्रन्थस्य विरोध इति। तत्त्व०।

(१८) अनेकाच्त्वाभावादित्यर्थः अन्ये तु भाष्ये प्रत्ययग्रहणमपनीयेत्युक्तेः प्रत्ययान्ततया स्वामासेत्यादिरूपं शुद्धमेवेत्याहुः।

(१९) भुवीति व्याचष्टे भवत्यर्थे। भृश शीघ्र मन्द पण्डित दुर्मनस् सुमनस् उन्मनस् भृशादि।

(२०) ग्रसेराच् (७२९२पृ०) इत्यौणादिकमन्प्रत्ययान्ततया सिद्धम् न तु धातु-रिति शेषः प्रातिपदिकत्वादेव वक्ष्यमाणं ज्ञापकं संगच्छते इति भावः।

(२१) अनुबन्ध इति मध्यस्थाकाराद्भिन्नोऽकारोऽनुबन्ध इत्यर्थः तथाच तेन अतो गुणे इति (८८पृ०) पररूपं बोध्यम्। यदि तु मकारादकारोऽनुबन्धो न स्यात्तदा असंग्रामतेत्यादौ णौ चङि उपधाह्रस्वः स्यादिति णिच्संयोगेनानुबन्धाकरणे अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्याप्रवृत्त्या परगामिफले आत्मनेपदं च न स्यादिति भावः।

सामर्थ्यात्संग्रामशब्दे तद्वे विशिष्टपाठो ज्ञापयति उपसर्ग-समानाकारं पूर्वपदन्धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते इति। तेन मनःशब्दात्प्रागट्। स्वमनायत। उन्मनायते। उदमनायत। एवञ्चावागलभत अवागल्भिष्टे-त्यादावप्यवेत्यस्य पृथक्करणम्बोध्यम्। ज्ञापकञ्च सजातीयवि-षयम्। तेन यत्नोपसर्गस्वरूपं सकलं श्रूयते गत्वादेशेनाप-हृतन्तत्रैव पृथक्कृतिः। एवञ्च आ ऊढः ओढः स इवाचर्य ओढायित्वा अत्र उन्मनाय्य अवगल्भ्येतिवन्न ल्यप् ज्ञापकस्य विशेषविषयत्वे षाष्ठवार्त्तिकन्तद्भाष्यञ्च प्रमाणम्। तथाहि। उस्योमाङ्स्वाटः प्रतिषेधः *। उसि ओमाङोश्च परयोराटः पररूपन्नेत्यर्थः। उस्रामैच्छत्–औस्रीयत् (२२)। औङ्का-रीयत्। औढ़ीयत् (२३)। आटश्चेति (११७पृ०) चशब्देन पुनर्वृद्धिविधाना (२४) दिदं सिद्धमिति षाष्ठे स्थितम्।

(२२) उस्राशब्दात् क्यजन्ताल्लुङि उस्रपदान्तादिति (७१७पृ०) आटः पर-रूपे प्राप्ते उस्योमाङ्स्विति (६।१।९०।सू० वा०) निषेधः। अर्थवत्प-रिभाषा नेह प्रवर्त्तते, अपदान्तात् किं कोस्रेति भाष्ये प्रत्युदाहरणे अनर्थकस्यापि उस्शब्दस्य ग्रहणात् ज्ञापकात्।

(२३) औढीयदिति उपसर्गरूपं यत्वादेशेनापहृतं तत्रापि यदि पृथक्-कृतिस्तदा आङः परत्वाटा भाव्यमिति उस्योमाङ्स्विति आङि पर-रूपनिषेधो व्यर्थः स्यात्। तत्त्व०।

(२४) चशब्दं प्रयुञ्जानः सूत्रकारोऽपि ज्ञापकस्य विशेषविषयत्वमङ्गीचकार इत्याह चशब्देनेति। अत्रेदं बोध्यं बहुलमेतन्निदर्शनमिति(७।८७पृ०) बाहुलकात् अवधीरधातुर्धीरधातुश्चोहितस्तत्र अवधीरधातोर्ग्रहणे आववधीरदिति कामधेनुप्रयोगः धीरधातुग्रहणे तु "इतीव धारामवधी-र्य्येति" श्रीहर्षप्रयोग इति।

लोहितादिडाज्भ्यः क्यष्। ३।१।१३।

लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात्।

वा क्यषः। १।३।९०।

क्यषन्तात्परस्मैपदं वा स्यात्। लोहितायति। लोहितायते। अभूततद्भाव इति वृत्त्याऽभूततद्भावविषयत्वं लभ्यं तच्च लोहितशब्दस्यैव विशेषणम् नतु डाचोऽसम्भवात्। नाप्यादिशब्दग्राह्याणां तस्य प्रत्याख्यानात्। तथा च वार्त्तिकम्। लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणीति *। नचैवङ्काम्यचइव क्यषोऽपि ककारः श्रूयेत उच्चारणसामर्थ्यादिति वाच्यम् तस्यापि (२५) भाष्ये प्रत्याख्यानात्। पटपटायते। कृभ्वस्तियोगं विनापीह डाच्, डाजन्तात् क्यषो विधानसामर्थ्यात्। यत्तु

लोहितश्यामदुःखानि हर्षगर्वसुखानि च।
मूर्छा निद्रा कृपा धूमाः करुणा नित्यचर्मणीति॥

पठित्वा श्यामादिभ्योऽपि क्यषि पदद्वयमुदाहरन्ति तद्भाष्यवार्त्तिकविरुद्धम्। तस्मात्तेभ्यः क्यङेव। श्यामायते। दुःखादयो वृत्तिविषये तद्वति वर्त्तन्ते। लिङ्गविशिष्टपरिभाषया लोहिनीशब्दादपि क्यष्। लोहिनीयति (२६) लोहिनीयते।

(२५) तस्यापि क्यषः ककारस्यापीत्यर्थस्तेन नः क्ये (उ२२०पृ०) क्यस्य विभाषेति (उ२२१पृ०) सूत्रद्वये क्यषो न ग्रहणम्।

(२६) लोहिनीयतीति क्यङि सति तङेव स्यात् क्यङ्मानिनोश्चेति(उ४०७पृ०) पुंवद्भावश्च स्यादिति भावः। तत्त्व०।

**कष्टाय क्रमणे। ३। १। १४।**

चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् (२७) स्यात्। कष्टाय क्रमते कष्टायते पापङ्कर्त्तुमुत्सहत इत्यर्थः। सत्रकक्षक-ष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् *। कण्व-म्पापम्। सत्रादयो वृत्तिविषये पापार्थाः तेभ्यो द्वितीया-न्तेभ्यः (२८) चिकीर्षायां क्यङ्। पापं चिकीर्षतीत्यस्वपद-विग्रहः। सत्रायते। कक्षायते इत्यादि।

**कर्मणोरोमन्थतपोभ्यां वर्त्तिचरोः। ३। १। १५।**

रोमन्थतपोभ्याङ्कर्म्मभ्यां (२९) क्रमेण वर्त्तनायाञ्चरणे चार्थ क्यङ् स्यात्। रोमन्थं वर्त्तयति रोमन्थायते। हनुचलन इति वक्तव्यम् *। चर्व्वितस्याकृष्य पुनश्चर्व्वणा इत्यर्थः। नेह। कीटो रोमन्थं वर्त्तयति अपानप्रदेशान्निःसृतन्द्रव्यमिह रोमन्थ- तद्वर्तातीत्यर्थ इति कैयटः। वर्त्तुलङ्करोतीत्यर्थइति न्यासकारहरदत्तौ। तपसः परस्मैपदञ्च *। तपश्चरति तपस्यति।

---

(२७) कष्टायेति क्यङ्न्वेहानुवर्त्तते स्वरितत्वात् कष्टायेति निर्द्देशाच्चतुर्थ्यन्तं लभ्यते क्रमणमुत्साहः वृत्तिसर्गतायनेष्विति (७२५०पृ०) क्रमेरात्मने-पदविधायके सूत्रे सर्गशब्दस्योत्साहार्थकतायाः सर्व्वैः स्वीकारादत्रापि तथार्थत्वौचित्यात्। कष्टं कृच्छ्रं तच्च दुःखं न च दुःखं कर्त्तुमुत्साहः संभवतीति तत्साधनं पापमिह संगृह्यते इत्याशयेनाह पापं कर्त्तुमिति।

(२८) चिकीर्षायां द्वितीयान्तस्यैवान्वययोग्यत्वादाह द्वितीयान्तेभ्य इति।

(२९) कर्म्मणोरोमन्थतपोभ्यां सामानाधिकरण्यात् प्रत्येकं संबन्धादेकव-

**बाष्पोष्मभ्यामुद्वमने । ३ । १ । १६ ।**

आभ्याङ्कर्म्मभ्यां क्यङ् स्यात् । बाष्पमुद्वमति बाष्पायते । ऊष्मायते । फेनाच्चेति वाच्यम् * । फेनायते ।

**शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे । ३ । १ । १७ ।**

एभ्यः कर्म्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दङ्करोति शब्दायते । पक्षे तत्करोतीति (७१८५ सू०) णिजपीष्यत इति न्यासः । शब्दयति । सुदिनदुर्दिननीहारेभ्यश्च * । सुदिनायते ।

**सुखादिभ्यः कर्त्तृ(३०)वेदनायाम् । ३ । १ । १८ ।**

सुखादिभ्यः कर्म्मभ्यो वेदनायामर्थे क्यङ् स्याद्वेदनाकर्त्तुरेव चेत्सुखादीनि स्युः । सुखं वेदयते सुखायते । कर्त्तृग्रहणात्किम् परस्य सुखं वेदयते ।

**नमोवरिवश्चित्रङः क्यच् । ३ । १ । १९ ।**

करणे इत्यनुवृत्तेः क्रियाविशेषे पूजायां (३१) परिचर्य्याया-

---

चनमि.त द्योतयन्नाह कर्मभ्यामिति सूत्रे वर्त्तीति यथासंख्यं(७४५२सू०) युचं बाधित्वा वृत्तेर्ण्यन्तात् अनेनैव निपातनेन क्तिन् ।

(३०) कर्त्तृ इति लुप्तषष्ठीकं पृथक्पदं विद चेतनाख्यानविवादेष्विति चौरादिकस्य युचि निष्पन्नो वेदनाशब्दो ज्ञानवाची तदपेक्षमेव कर्त्तृत्वं स एव कर्त्ता सुखादिभिरन्वेति तदेतदाह वेदनाकर्त्तुरेवेति तथा च यन्निष्ठं सुखं तद्भिन्नो ज्ञानकर्त्ता चेत्तत्र वाक्यमेव । आदिपदात् दुःखतत्प्रभृतीनां ग्रहणम् ।

(३१) नमआदिशब्दसाहचर्य्यात् क्यच् क्रियाविशेषमेव द्योतयतीत्याह पूजायामित्यादि चित्रङोङित्करणं तङर्थम् ।

भाश्चर्ये च। नमस्यति देवान् पूजयतीत्यर्थः। वरिवस्यति गुरून्। शुश्रूषते इत्यर्थः चित्रीयते विस्मयते इत्यर्थः। विस्मापयते इत्यन्ये।

## पुच्छभाण्डचीवराण्णिङ्। ३। १। २०।

पुच्छादुदसने व्यसने (३२) पर्य्यसने च॰। विविधं विरुद्धं वोत्क्षेपणं व्यसनम्। वि पुच्छयते। उत्पुच्छयते। परिपुच्छयते। भाण्डात्समाचयने॰। सम्भाण्डयते। भाण्डानि समा चिनोति राशीकरोतीत्यर्थः। समबभाण्डत। चीवरादर्ज्जने परिधाने च॰। सञ्चीवरयते भिक्षुः। चीवराण्यर्ज्जयति परिधत्ते वेत्यर्थः।

## मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्। ३। १। २१।

कृञर्थे। मुण्डङ्करोति मुण्डयति। व्रताद्भोजनतन्निवृत्त्योः*। पयः शूद्रान्नं वा व्रतयति। वस्त्रात्समाच्छादने*। सं वस्त्रयति। हल्यादिभ्यो ग्रहणे*। हलिकल्योरदन्तत्वञ्च(३३) निपात्यते। हलिं कलिं वा गृह्णाति। हलयति। कलयति। महद्धलं हलिः। परत्वाद्वृद्धौ सत्यामपीष्ठवद्भावेन(७।२८५ पृ०)अगेव लुप्यते अतः(३४)

---

(३२) अत्रापि करण इत्यनुवर्त्तते क्रिया च विशेषरूपा तदाह पुच्छादित्यादि वार्त्तिकम्।

(३३) अयमेव निपातो वृद्धौ सत्यां टिलोप इत्यत्र ज्ञापकः।

(३४)अतः अग्लोपित्वादित्यर्थः अन्यथा अदन्तत्वनिपातनाभावे हलेर्वृद्धौ औकारे सति टिलोपे अग्लोपित्वाभावात् सन्वद्भावदीर्घौ स्यातामित्यर्थः।

सन्वद्भावदीर्घौ न। अजहलत्। अचकलत्। कृतं गृह्णाति कृतयति (३५)। तूस्तानि विहन्ति वितूस्तयति। तूस्तङ्क्लेश इत्येके। जटीभूताः केशा इत्यन्ये। पापमित्यपरे। मुण्डादयः सत्यापपाशेत्यत्रैव(७।७०पृ०) पठितुं युक्ताः। प्रातिपदिकाद्धात्वर्थे(७।८५पृ०) इत्येव सिद्धे केषाञ्चिद्ग्रहणं सापेक्षेभ्योऽपि णिजर्थम्। मुण्डयति माणवकम्। मिश्रयत्यन्नम्। श्लक्ष्णयति वस्त्रम्। लवणयति व्यञ्जनमिति। हलकलयोरदन्तत्वार्थम्। सत्यस्य आपुगर्थम् (३६)। केषाञ्चित्तु प्रपञ्चार्थम्। सत्यङ्करोत्याचष्टे वा सत्यापयति। अर्थवेदयोरप्यापुग्वक्तव्यः। अर्थापयति। वेदापयति। पाशं विमुञ्चति विपाशयति रूपं पश्यति रूपयति। वीणयोपगायत्युप वीणयति। तूलेनानुकुष्णात्यनु तूलयति तृणाग्रं तूलेनानुघट्टयतीत्यर्थः। श्लोकैरुपस्तौति उप श्लोकयति सेनया अभि याति अभि षेणयति। उपसर्गात् सुनोतीति(७२७पृ०) षः। अभ्यषेणयत्। प्राक्सितादिति (७७८पृ०) षः। अभि षिषेणयिषति। स्थादिष्वभ्यासेन चेति (७२९पृ०) षः। लोमान्यनुमार्ष्टि अनु लोमयति त्वच संवरणे। षः (३७)। त्वचं गृह्णाति त्वचयति। चर्म्मणा सन्नह्यति। सञ्चर्म्मयति। वर्णं गृह्णाति। वर्णयति। चूर्णैरव ध्वंसते अव चूर्णयति। इष्टवदित्यतिदेशात् (७।८५पृ०) पुंवद्भावादयः (३८)। एनीमाचष्टे एतयति। दरदमा-

(३५) कृतमुपकारं स्वीकरोतीत्यर्थः।

(३६) सत्यापपाशेत्यादिसूत्रे(१७०पृ०)सत्यापेति आपुग्विशिष्टग्रहणमापुगर्थमित्याह सत्यस्येति।

(३७) ष इति पुंसि संज्ञायामित्यनेन(७।५६पृ०) इति शेषः।

(३८) आदिपदात् रभावटिलोपादयोग्राह्याः।

चष्टे दारदयति (३९)। पृथुम् प्रथयति। इष्ठौ सत्यां पूर्ववत् टिलोपः। अपिप्रथत् (४०) अपप्रथत्। म्रदुम्। म्रदयति। अमिम्रदत्। भृशं, कृशं, दृढम्, भ्रशयति, क्रशयति, द्रढयति। अबभ्रशत्। अचक्रशत्। अदद्रढत्। परि व्रढयति। पर्य्यवव्रढत्। ऊढिमाख्यत्। औजिढत्। ढत्वादीनामसिद्धत्वात् हतिशब्दस्य द्वित्वम् पूर्वत्रासिद्धीयमद्वित्वे इति त्वनित्यमित्युक्तम् (७१पृ०)। ढि इत्यस्य द्वित्वमित्यन्ये। अडिढत्। ऊढमाख्यत्। औजढत् (४१)। औडढत्। ओः पुयण्जीति (७१८९पृ०) वर्ग्गप्रत्याहारजग्रहो लिङ्गम् द्वित्वे कार्य्ये णावचआदेशो नेति ऊनयतावुक्तम्(७१८२पृ०)। प्रकृत्यैकाच् (७०२पृ०)। इष्ठिपुकौ। स्वापयति। त्वां मां वाचष्टे त्वापयति मापयति। मपर्य्यन्तस्य त्वमौ (४२)। पररूपात्पूर्व्वं नित्यत्वाट्टिलोपः। इष्ठिः पुक्। त्वादयति मादयतीति तु न्याय्यम् अन्तरङ्गत्वात्पररूपे कृते प्रकृत्यैकाजिति प्रकृतिभावात्। न च प्रकृतिभावो भाष्ये प्रत्याख्यात इति भ्रमितव्यम् भाष्यस्य प्रेष्ठाद्युदाहरणविशेषेऽन्यथासिद्धि (४३) परत्वात्। युवामावां वा-

(३९) दरदोऽपत्यं दारदी द्व्यञ्मगधेत्यण् (५०९पृ०) तस्य स्त्रियाम् अतश्चेति (५२५पृ०)लुकि दरदमाचष्टे इत्युक्तं तत्र पुंवद्भावे दारदयतीति।

(४०) रऋतो हलादेरिति (६५२पृ०)रभावः। इष्ठौ सत्यां टिलोपेऽनग्लोपित्वात् सन्वद्भावे सन्यतः(७६१पृ०) इतीत्वं इष्ठेः पूर्व्वं टिलोपे तु अग्लोपित्वात् तदभाव इति भेदात् पदद्वयं तदाह अपिप्रथदित्यादि।

(४१) इह टिलोपे सति णिचसहितस्य द्वित्वे पश्चादभ्यासेऽकारो दुर्लभ इत्यत आह ओः पुयण्जीति अच आदेशः लोपालोपरूप इत्यर्थः।

(४२) त्वामाविति प्रत्ययोत्तरपदयोश्चेतिसूत्रेणेति (५६८पृ०) शेषः।

(४३) प्रस्थाद्यादेशविधायकस्य प्रियस्थिरादित्यादेः (७०३पृ०) असिद्धवदत्रा-

युष्मयति (४४)। अस्मयति। श्वानमाचष्टे शावयति। नस्त-द्धित इति(२२४४पृ०)टिलोपः। प्रकृतिभावस्तु न,येन नाप्राप्तन्यायेन टेरिति(६५२पृ०)अस्यैव बाधकोहि (४५) सः। भत्वात्सम्प्रसारणम्। अन्ये तु। नस्ताद्धितइति नेहातिदिश्यते इष्ठनि तस्या-दृष्टत्वात्। ब्रह्मिष्ठइत्यादौ परत्वात् टेरित्यस्यैव प्रवृत्ते-स्तेन शुनयतीति रूपमाहुः। विद्वांसमाचष्टे विद्वयति। अङ्गवृत्तपरिभाषया (१८७पृ०सू०) सम्प्रसारणं नेत्येके। सम्प्र-सारणे इक्ष्वावावादेशे च विदावयतीत्यन्ये। नित्यत्वाट्टिलोपा-त्प्राक् सम्प्रसारणम् अन्तरङ्गत्वात्पूर्वरूपं, टिलोपः। विद्-यति इत्यपरे। उदञ्चमाचष्टे उदीचयति (४६)। उदैचि-चत्। प्रत्यञ्चम् प्रतीचयति (४७)। प्रत्यचिचत्। इकोऽ-सवर्णे इति (७५२पृ०) प्रकृतिभावपक्षे। प्रतिअचिचत्।

---

भात् (७११पृ०) इत्यसिद्धवद्भावेन प्रस्यादावकारोच्चारणसामर्थ्येन वा तद्विषयकमेव प्रकृतिभावप्रत्याख्यानमिति बोध्यम्।

(४४) युष्मयतीति द्वयोरुक्तौ युवावाविति (१६८पृ०) तु नेह प्रवर्त्तते विभक्ति-परत्वाभावात् विभक्तेश्च लुका लुप्तत्वेन प्रत्ययलक्षणाप्रवृत्तेरतएव प्रत्य-योत्तरपदयो (५६८पृ०) श्चेत्येकवचने पृथक्सूत्रारम्भः। प्रागादेशस्तु विधीन् वहिरङ्गो लुग् बाधते इति न्यायात् न भवति।

(४५) यत्र यत्र प्रकृत्यैकाजित्यस्य प्रवृत्तिस्तत्र टेरित्यस्य प्रवृत्तिर्न तु नस्तद्धित इत्यस्य स्रजिष्ठइत्यादौ तस्याप्रवृत्तेरिति भावः। तत्त्व०।

(४६) उपसर्गं पृथक्कृत्य अच्शब्दादेव णिजिति प्रकृत्यैकाजितिप्रवृत्तेर्न टिलोप इति बोध्यम् उद ईदिति(१८१पृ०) ईत्त्वम् चङि द्विर्वचनेऽ-चीति (७२४)णिलोपस्य निषेधात् चिशब्दस्य द्वित्वम्।

(४७) प्रतीचयतीत्यादौ अचः (१७८पृ०) इत्यल्लोपे चाविति(१७८पृ०) पूर्वस्य दीर्घः चङि तु चिशब्दात् प्रागटि पक्षे यण्।

सम्यञ्चमाचष्टे समीचयति। सम्यचिचत्--समिअचिचत्। तिर्यञ्चमाचष्टे तिराययति। अञ्चेष्टिलोपेनापहारेऽपि बहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः (१८१पृ०)। असिद्धवदत्रेति (११पृ०) चिणो (४८) लुङ्न्यायेन प्रथमं टिलोपोऽसिद्धः अतः पुनष्टिलोपो न, अकृद्धत्तपरिभाषया वा। चङ्यग्लोपित्वा(४९) दुपधाह्रस्वो न। अतितिरायत्। सध्र्यञ्चमाचष्टे सध्रायति। असधायत्। विष्वद्र्यञ्चम्--अविविष्वद्रायत्। देवद्र्यञ्चम् (५०) अदिदेवद्रायत्। अदद्र्यञ्चम् आददद्रायत्। अदमुयञ्चम् अदमुञ्च यति। आददमुयायत्। अमुमुयचम्, अमुमुआययति। चङ्। आमुमुआयत्। भुवम् भावयति। अबीभवत्। भ्रुवम्-अबुभ्रवत्। श्रियम-अशिश्रयत्। गाम्-अजूगवत्। रायम्-अरीरयत्। नावम्-अनूनवत्। स्वम्-स्वाशश्वत्। स्वः-अव्ययानां भमात्रे टिलोपः। स्वयति। अससवत्-असिस्वत् (५१)। बहून् भावयति (५२)।

---

(४८) यथा अपाचितरामित्यत्र चिणः परस्य तशब्दस्य लुकि पुनस्तरप्प्रत्ययतकारस्य लुक् न भवति प्रथमलुकोऽसिद्धत्वेन व्यवधानात्तथा पुनष्टिलोपो नेति तिर्यादेशस्येकारस्य लोपो नेत्यर्थः।

(४९) अनग्लोपिनोऽपि अग्लोपित्वस्वीकारादित्यर्थः।

(५०) देवद्र्यञ्चमिति वाक्ये आख्यानात् कृतस्तदाचष्टे (७१८५पृ०) इत्यादिवार्त्तिकेन कारकस्य पृथक्करणप्रसक्तिर्नास्ति यत्राख्याने कृत् श्रूयते तत्रैव तत्प्रवृत्तेः कृल्लुगिति सन्नियोगशिष्टत्वात्।

(५१) अनग्लोपिन्यऽग्लोपित्वाभ्युपगमेऽपि अजूहलादेशेटजादेशो नास्तीति मते णिच्सहितस्यैव द्वित्वमित्याशयेनाह असिस्वदिति।

(५२) बहोर्लोपो भू च बहोरितीष्ठनि (७०२पृ०) भूभावस्तद्वद्भावाद्भूभावः। इष्ठवदित्यत्र इष्ठनीव इष्ठवदिति(७६५।१पृ०सू०)सप्तम्यन्ताद्वतिः तेन इष्ठनि

बह्वयतीत्यन्ये (५३) । स्रग्विणम् । स्रजयति । संज्ञापूर्व्वकत्वान्न वृद्धिः । श्रीमतीं श्रीमन्तं वा श्रययति । अशिश्रयत् । पयस्विनीम्-पयसयति । इह टिलोपो न तदपवादस्य लुकः (५४) प्रवृत्तत्वात् । स्थूलम् स्थवयति ।·दूरम् दवयति । कथन्तर्हि "दूरयत्यवनते विवस्वतीति" । दूरमतति अयते वा दूरात् दूरातं कुर्व्वतीत्यर्थः ।. युवानम् । युवयति कनयति । युवाल्पयोरिति (७०४पृ०) वा कन् । अन्तिकम्-नेदयति । वाढ़म्-साधयति । प्रशस्यम्-प्रशस्ययति । इह, अज्यौ न उपसर्गस्य पृथक्कृते: । वृद्धम् ज्यापयति-वर्षयति (५५) । प्रियम्-प्रापयति । स्थिरम्-स्थापयति । स्फिरम्-स्फापयति । उरुम्-वरयति-वारयति (५६) । बहुलम् बंहयति । गुरुम् गरयति । तृपम्-त्रपयति । दीर्घम्-द्राघयति । वृन्दारकम्-वृन्दयति ।

इति नामधातुप्रक्रिया ।

---

परे यत् कार्य्यं तदेव न तु इष्ठनः स्थाने यत् कार्य्यं तदपि तेन णिचः स्थाने यिड़ागमो (७०३पृ०सू०)नेति बोध्यम् ।

(५३) यिड़भावे तत्सन्नियोगशिष्टस्य भूभावस्याप्यभाव इत्यन्येषामाशयः ।

(५४)विन्मतोरिति(७०४पृ०)लुकोपवादत्वेन बाधकतया पूर्व्वं प्रवृत्तत्वादित्यर्थः ।

(५५) वृद्धस्य चेति (७०२पृ०)ज्यादेशः प्रियस्थिरेतिवर्षादेशेन (७०३पृ०) सह विकल्प्यते इत्याशयेनोदाहरति वर्षयतीति ।

(५६) वरादेशे कृते संज्ञापूर्व्वकविधेरनित्यत्वात् बाहुलकाद्वा विकल्पेनोपधावृद्धिः ।

## कण्ड्वादिभ्यो यक्। ३। १। २७।

एभ्यो धातुभ्यो नित्यं (१) यक् स्यात् स्वार्थे। धातुभ्यः किम् प्रातिपदिकेभ्यो मा भूत् द्विधा (२) हि कण्ड्वादयः धातवः प्रातिपदिकानि च। कण्डूञ् गात्रविघर्षणे। कण्डूयति कण्डूयते। मन्तु अपराधे। रोषइत्येके। मन्तूयति। चन्द्रस्तु ञितमाह। मन्तूयते। वल्गु पूजामाधुर्य्ययोः। वल्गूयति। असु उपतापे। अस् असूञ् इत्येके। अस्यति। असूयति असूयते। लेट् लोट् धौर्त्ये पूर्व्वभावे स्वप्ने च। दीप्ताविव्येके। लेट्यति। लेटिता। लोट्यति। लोटिता। लेला दीप्तौ। इरस् इरज् इरञ् ईर्ष्यायाम् इरस्यति। इरज्यति। हलि चेति (१५७पृ०) दीर्घः। ईर्य्यति ईर्य्यते। उषस् प्रभातीभावे। वेट धौर्त्ये स्वप्ने च। मेधा आशुग्रहणे। मेधायति कुषुभ क्षेपे। कुषुभ्यति। मगध परिवेष्ठने। नीचदास्ये इत्यन्ये

---

(१) कण्ड्वादीनां नामधातुत्वाभावेन नामधातून् समाप्य पृथगेव कण्ड्वादिभ्यः प्रत्ययविधानार्थोयमारम्भः। धातोरेकाचइत्यतः (३२०पृ०) धातोरित्यनुवर्त्तते वेति निवृत्तमन्यथा कण्डवतीत्यनिष्टप्रयोगः पक्षे स्यादित्याशयेनाह धातोर्नित्यमिति।

(२) द्विधेति यकः कित्त्वेन धातवः, दीर्घपाठेन च प्रातिपदिकानीत्यर्थस्तथाहि कण्ड्वादयो यदि धातवएव स्युस्तर्हि ह्रस्वपाठेऽपि यकि परे अकित्सार्वधातुकयोरिति(३५१पृ०)दीर्घसम्भवात् दीर्घपाठो व्यर्थः स्यात् प्रातिपदिकमात्रत्वे प्रातिपदिकानां गुणाप्रसक्तेर्यकः कित्त्वं व्यर्थं स्यादत उभयसामञ्जस्याय द्वैविध्यम्। तदुक्तं भाष्ये।

धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि।
आह चायमिमं दीर्घमन्ये धातुविभाषित इति॥

तन्तस् पम्पस् दुःखे । सुख दुःख तत्क्रियायाम् । सुख्यति । दुःख्यति । सुखं दुःखञ्चानुभवतीत्यर्थः । सपर पूजायाम् । आरर आराकर्म्मणि । भिषज् चिकित्सायाम् । भिष्णज् उपसेवायाम् । इषुध शरधारणे । चरण वरण गतौ चुरण चौर्य्ये तुरण त्वरायाम् । भुरण धारणपोषणयोः । गद्गद वाक्स्खलने । एला केला खेला विलासे । इलेत्यन्ये । लेखा स्खलने च । अदन्तोऽयमित्यन्ये । लेख्यति । लिट अलंकुत्सनयोः । लिट्यति । लाट जीवने । हृणीङ् रोषणे लज्जायाञ्च महीङ् पूजायाम् । महीयते पूजां लभत इत्यर्थः । रेखा ग्लाघासादनयोः । द्रवस् परितापपरिचरणयोः । तिरस् अन्तर्द्धौ । अगद नीरोगत्वे । उरस् बलार्थः । उरस्यति बलवान् भवतीत्यर्थः । तरण गतौ । पयस् प्रसृतौ (३) । संभूयस् प्रभूतभावे (४) । अम्बर सम्बर सम्भरणे । आकृतिगणोऽयम् (५) ।

इति कण्ड्वादयः ।

---

(३) प्रसृतिरत्र परिमाणविशेषः ।

(४) प्रभूतभावे बाहुल्ये इत्यर्थः नेह संशब्दस्य पृथक् कृतिर्यत्र प्रातिपदिकाद्धातुसंज्ञाप्रयोजकप्रत्ययविधानं तत्रैवोपसर्गस्य पृथक्कृतेः स्वीकारादेतस्य च स्वतोधातुत्वादतः असंभूयसीदित्येव रूपम् ।

(५) आकृतिगण इति तेन दुवस्युङ् संदीपने इत्यादि सिद्धमतः समिधाग्निं दुवस्यत इत्यादि साधु । अन्यत्र नमस् मनस् अवाग्र इत्यादयोऽप्यत्र पठिताः ।

कण्डूयतेः सन् सन्यङोरिति(७।०१पृ०) प्रथमस्यैकाचो (७८पृ०सू०) द्वित्वे प्राप्ते (१)। कण्ड्वादेस्तृतीयस्येति वाच्यम् *। कण्डूयियिषति। क्यजन्तात्सन्। यथेष्टन्नामधातुषु। आद्यानान्त्रयाणामन्यतमस्य द्वित्वमित्यर्थः। पुपुत्रीयिषति पुतित्रीयिषति पुत्रीयियिषति। अजादेस्त्याद्येतरस्य। अशिश्वयिषति अश्वीयियिषति। नदराणां संयुक्तानामचः परस्यैव द्वित्वनिषेधः। इन्द्रीयतेः सन्। द्रीशब्दयिशब्दयोरन्यतरस्य द्वित्वम्। इन्दिद्रियिषति चन्द्रीयियिषति। चिचन्द्रीयिषति चन्दिद्रीयिषति चन्द्रीयियिषति। प्रियमाख्यातुमाचक्षाणां प्रेरयितुं वेच्छति। पिप्रापयिषति प्रापिपयिषति। प्रापयियिषति। उरुम्-विवारयिषति वारिरयिषति वारयियिषति। बाढम्-सिसाधयिषतीत्यादि रूपत्रयम्। षत्वन्तु नास्ति (२)। यङ्सन् ण्यन्तात्सन्। बोभूयिषयिषति। यङ्णिच्सनन्तात्सिच्। बोभूययिषतीत्यादि (३)।

इति प्रत्ययमाला।

---

(१) प्रथमस्येति अजादेस्तु द्वितीयस्य (७८पृ०सू०)द्वित्वे प्राप्ते इत्यपि बोध्यम्।

(२) षत्वं तु नास्तीति आदेशावयवत्वाभावात् आदेशप्रत्यययोरिति (८५पृ०) सूत्रे प्रत्ययस्यैवावयवग्रहणात्।

(३) इह यङ्निमित्ते द्वित्वे कृते सन्निमित्तं द्वित्वन्तु न लिटि धातोरनभ्यासस्येति (७८पृ०) अनभ्यासस्येति निषेधात्।

अनुदात्तङित आत्मनेपदम् (७४पृ०) आस्ते । शेते ।

**भावकर्मणोः (१) । १ । ३ । १३ ।**

बभूवे । अनु-बभूवे ।

**कर्त्तरि कर्मव्यतिहारे । १ । ३ । १४ ।**

क्रियाविनिमये द्योत्ये कर्त्तर्यात्मनेपदं स्यात् । व्यति-लुनीते । (७१२२पृ०)अन्यस्य योग्यं लवनं (२) करोतीत्यर्थः । श्नसोरित्य ल्लोपः । व्यति-स्ते । व्यति-षाते । व्यति-षते । तासस्त्योरिति (७१२पृ०) सलोपः । व्यति-से (३) । धि च (७२७पृ०) । व्यति-ध्वे । ह्एति (७२७ पृ०) व्यति-हे । व्यत्यसै । व्यत्यास्त । व्यति-षीत । व्यति-राते । व्यति-भाते । व्यति-बभे ।

**न गतिहिंसार्थेभ्यः (४) । १ । ३ । १५ ।**

व्यति-गच्छन्ति । व्यति-घ्नन्ति । प्रतिषेधे हसादीनामुपसंख्यानम् * । हसादयो हसप्रकाराः शब्दक्रियाः । व्यति-हसन्ति । व्यति-जल्पन्ति । हरतेरप्रतिषेधः * । सम्प्र-हरन्ते राजानः ।

---

(१) भावे कर्म्मणि च विहितलकारस्यात्मनेपदं स्यादिति सूत्रार्थः ।

(२) यद्यस्य न योग्यं तस्य तत्करणं कर्म्मव्यतिहार तथाच शूद्रस्य योग्यं शस्यादिलवनं ब्राह्मणः करोतीत्यर्थः परस्परकरणमपि व्यतिहारः संप्रहरन्ते राजान इत्यादिप्रयोगात् ।

(३)व्यति-से इत्यत्र उपसर्गप्रादुर्भ्यामिति (७१२२पृ०) न षत्वं सकारस्यास्यवयवत्वाभावात् आदेशप्रत्यययोरिति(७८५पृ०)षत्वमपि न, सात्पदाद्योरिति (७३०पृ०)निषेधादेकदेशविकृतन्यायेन सेइति प्रत्ययमात्रस्यापोह पदत्वात् ।

(४) कर्म्मव्यतिहारे यदात्मनेपदं तस्य निषेधः अर्थग्रहणसामर्थ्यात्तु ये शब्दान्तरमनपेक्ष्य गतिहिंसयोर्वर्त्तन्ते तएवेह गृह्यन्ते ।

**इतरेतरान्योन्योपपदाच्च। १। ३। १६।**

परस्परोपपदाच्चेति वक्तव्यम् *। इतरेतरस्यान्योन्यस्य परस्परस्य वा व्यति-लुनन्ति।

**नेर्विशः। १। ३। १७।**

नि-विशते।

**परिव्यवेभ्यः क्रियः। १। ३। १८।**

अकर्त्त्रभिप्रायार्थमिदम्। परि-क्रीणीते। वि-क्रीणीते। अव-क्रीणीते।

**विपराभ्यां जेः। १। ३। १९।**

वि-जयते। परा-जयते।

**आङो दोऽनास्यविहरणे। १। ३। २०।**

आङ्पूर्व्वाद्ददातेर्म्मुखविकसनादन्यत्रार्थे (५) वर्त्तमानादात्मनेपदं स्यात्। विद्यामा-दत्ते। अनास्येति किम्। मुखं व्या-ददाति। आस्यग्रहणमविवक्षितम्। विपादिकां व्या-ददाति। "पादस्फोटो विपादिका"। नदी कूलं व्या-ददाति। पराङ्गकर्म्मकान्न निषेधः *। व्या-ददते पिपीलिकाः पत-

**क्रीडोऽनुसम्परिभ्यश्च। १। ३। २१।**

---

(५) ददातेरुभयपदित्वेन अकर्त्रभिप्राये आत्मनेपदार्थं सूत्रम् "व्या दत्ते विहगपतिर्मुखं स्वकीयमिति" प्रयोगस्तु कर्त्रभिप्रायफलविवक्षणात्।

ङ्गस्य मुखम्। चाटाङ्गः। अनु-क्रीडते। सं-क्रीडते। परि-क्रीडते। आ-क्रीडते। अनोः कर्म्मप्रवचनीयान्न उपसर्गेण समा साहचर्यात्। माणवकमनु क्रीडति तेन सहेत्यर्थः। तृतीयार्थे (२६४१०) इत्यनोः कर्म्मप्रवचनीयत्वम्। समोऽकूजने *। सं-क्रीडते। कूजने तु। सं-क्रीडति चक्रम्। आगमेः क्षमायाम् *। ण्यन्तस्येदं ग्रहणम्। आ-गमयस्व तावत् मा त्वरिष्ठाइत्यर्थः। शिक्षेर्जिज्ञासायाम् *। धनुषि शिक्षते। धनुर्विषये ज्ञाने शक्तो (६) भवितुमिच्छतीत्यर्थः। आशिषि नाथः *। आशिष्येवेति नियमार्थं (७) वार्त्तिकमित्युक्तम् (उ२२१०)। सर्पिषो नाथते। सर्पिर्मे स्यादित्याशास्तइत्यर्थः। कथं "नाथसे किमु पतिन्न भूभृतामिति" नाधसे इति पाठ्यम्। हरतेर्गतताच्छील्ये *। गतप्रकारः। पैतृकमश्वा अनु-हरन्ते मातृकङ्गावः, पितुर्मातुश्च गतप्रकारं सततम्परिशीलयन्तीत्यर्थः। ताच्छील्ये किम् मातुरनु-हरति (८)। किरतेर्हर्षजीविकाकुलायकरणेषु वाच्यम् *। हर्षादयो विषयाः तत्र हर्षो विक्षेपस्य कारणम् इतरे फले।

अपाच्चतुष्पाच्छकुनिष्वालेखने। ६। १। १४२।

अपात्किरतेः सुट् स्यात्। सुडपि हर्षादिष्वेव वक्तव्यः *।

---

(६) शिक्षेर्जिज्ञासायामित्यत्र शिक्ष विद्योपादाने(उ७१८०) इत्यस्य न ग्रहणं तस्यानुदात्तेत्त्वादात्मनेपदसिद्धेः किन्तु शकः सन्नन्तस्येति ध्वनयन् व्याचष्टे धनुर्विषये ज्ञाने शक्तोभवितुमिच्छतीति।

(७) अनुदात्तेत्त्वेनैवात्मनेपदसिद्धेर्नियमार्थमित्यर्थः अनुदात्तेत्त्वन्तु अनुदात्तेतश्च हलादेरिति (उ२७१५) युच् प्रत्ययार्थं तेन नाथनइति सिद्धम्।

(८) मातुरनु-हरतीत्यत्र सादृश्यमात्रं विवक्षितं न तु प्रकारताच्छील्यम्।

अप-स्किरते वृषो हृष्टः, कुक्कुटो भक्षार्थी, श्वा आश्रयार्थी च। हर्षादिष्विति किम्। अप-किरति कुसुमम्। इह तङ्सुटौ न। हर्षादिमात्रविवक्षायां यद्यपि तङ् प्राप्तस्तथापि सुडभावे नेष्यत इत्याहुः। गजोऽप-किरति (९)। आङि नुप्रच्छ्योः *। आ-नुते। आ-पृच्छते। शपउपालम्भे *। आक्रोशार्थात् स्वरितेतः कर्तृगेऽपि फले शपथरूपेऽर्थे आत्मनेपदं वक्तव्यमित्यर्थः। कृष्णाय शपते।

## समवप्रविभ्यः स्थः। १। ३। २२।

सन्तिष्ठते। स्थाघ्वोरिच्च (७१००४०)। समस्थित। समस्थिषाताम्। समस्थिषत। अव-तिष्ठते। प्र-तिष्ठते। वि-तिष्ठते। आङः प्रतिज्ञायामुपसंख्यानम् *। शब्दन्नित्यमातिष्ठते नित्यत्वेन प्रतिजानीते इत्यर्थः।

## प्रकाशनस्थेयाख्ययोश्च (१०)। १। ३। २३।

गोपी कृष्णाय तिष्ठते आशयम्प्रकाशयतीत्यर्थः। "संशय्य-कर्णादिषु तिष्ठते यः" कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः।

## उदोऽनूर्द्ध्वकर्म्मणि (११)। १। ३। २४।

---

(९) गजोऽपकिरतीत्यत्र हर्षे सत्यपि आलेखनाभावान्न सुट् नातस्तङित्यर्थः।

(१०) प्रकाशनं ज्ञापनं स्थेयोविवादपदनिर्णेता 'स्थेयोविवादस्थानस्य निर्णेतरि पुरोहिते' इतिमेदिन्युक्तेः।

(११) ऊर्द्ध्वदेशसंयोगानुकूलं यत्कर्म्म तदूर्द्ध्वकर्म्म तदन्यस्मिन्नित्यर्थः स्वरूप-

मुक्तावुत्तिष्ठते। अनूर्द्ध्वेति किम्। पीठादुत्तिष्ठति। ईहायामेव। नेह। ग्रामाच्छतमुत्तिष्ठति।

उपान्मन्त्रकरणे। १। ३। २५।

आग्नेय्याग्नीध्रमुप तिष्ठते (१२)। मन्त्रकरणे किम् भर्त्तारमुपतिष्ठति यौवनेन। उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम् *। आदित्यमुप-तिष्ठते। कथन्तर्हि "स्तुत्यं स्तुतिभिरर्थ्याभिरुप-तस्थे सरस्वतीति" देवतात्वारोपात् नृपस्य देवतांशत्वाद्वा। गङ्गा यमुनामुप-तिष्ठते उपश्लिष्यतीत्यर्थः। रथिकानुप-तिष्ठते मित्रीकरोतीत्यर्थः। पन्थाः स्रुघ्नमुपतिष्ठते प्राप्नोतीत्यर्थः। वा लिप्सायामिति वक्तव्यम् *। भिक्षुकः प्रभुमुप-तिष्ठते उप-तिष्ठति वा लिप्सया उप-गच्छतीत्यर्थः।

अकर्म्मकाच्च। १। ३। २६।

उपात्तिष्ठतेरकर्म्मकादात्मनेपदं स्यात्। भोजनकाले उप-तिष्ठते सन्निहितो भवतीत्यर्थः।

उद्विभ्यां तपः। १। ३। २७।

---

नुवर्त्तते यद्यपि अनूर्द्ध्व इत्युक्तेऽप्यनूर्द्ध्वक्रियायां वर्त्तमानादुत्पूर्व्वात्तिष्ठतेरात्मनेपदं स्यादित्यर्थो लभ्यते तथापि परिस्पन्दात्मककर्म्मबोधनाय कर्मपदमित्याह ईहायामेवेति इच्छापूर्व्विका चेष्टा ईहा सा च ग्रामाच्छतमुत्तिष्ठतीत्यादौ नास्तीति न तङ्।

(१२) यत्र मन्त्रकरणिका स्तुतिस्तत्र वर्त्तमानादित्यर्थः आग्नेय्या अग्निदेवताकया अग्नीध्रमग्निभेदम्।

अकर्म्मकादित्येव। उत्तपते। वि-तपते दीप्यतइत्यर्थः। स्वाङ्गकर्म्मकाच्चेति (१३) वक्तव्यम्॥। स्वमङ्गं स्वाङ्गन्नतु अद्रवमिति(२३४पृ०)परिभाषितम्। उत्तपते वि-तपते पाणिम्। नेह। सुवर्णमुत्तपति सन्तापयति वि-लाययति वेत्यर्थः। चैत्रो मैत्रस्य पाणिमुत्तपति सन्तापयतीत्यर्थः।

## आङो यमहनः। १। ३। २८।

आ-यच्छते। आ-हते। अकर्म्मकात् स्वाङ्गकर्म्मकादित्येव। नेह। परस्य शिरआ-हन्ति। कथन्तर्हि 'आ-जघ्ने विषमविलोचनस्य वक्ष, इति भारविः "आ-हध्वं मा रघूत्तममिति" भट्टिश्च प्रमादएवायमिति भागवृत्तिः। प्राप्य (१४) इत्यध्याहारो वा। ल्यब्लोपे पञ्चमीति (२८८पृ०) तु ल्यबन्तं विनैव तदर्थावगतिर्य्यत्र तद्विषयम्। भेत्तुमित्यादितुमुन्नन्ताध्याहारो वास्तु। समीपमेत्येति वा (१५)।

## आत्मनेपदेष्वन्यतरस्याम्। २। ४। ४४।

हनो बधादेशो वा लुङि आत्मनेपदेषु परेषु। आबधिष्ट। आबधिषाताम्।

## हनः सिच्। १। २। १४।

---

(१३) स्वाङ्गकर्म्मकाच्चेति चकारेणाकर्म्मकस्य संग्रहस्तेन उत्तपते वि-तपते।

(१४) प्राप्येति तथाच हन्तेरकर्म्मकत्वात् आ-जघ्ने इत्यादावात्मनेपदसिद्धिः।

(१५) समीपमेत्येति स्वकीयमेव वक्षआजघ्ने मल्लइव सन्तोषातिशयादास्फोटनं चकारेत्यर्थः।

कित्स्यात्। अनुनासिकलोपः (७।११०पृ०५९०)। आहत। आहसाताम्। आहसत।

यमो गन्धने। १। २। १५।

सिचु कित्स्यात्। गन्धनं सूचनं परदोषाविष्करणम्। उदायत। गन्धने किम् उदायंस्त पादम् आकृष्टवानित्यर्थः।

समोगम्यृच्छिभ्याम् (१६)। १। ३। २९।

अकर्म्मकाभ्यामित्येव। सङ्गच्छते।

वा गमः। १। २। १३।

गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः। सङ्गसीष्ट-सङ्गंसीष्ट। समगत-समगंस्त। समृच्छते। अकर्म्मकाभ्यां किम् ग्रामं सङ्गच्छति। विदिप्रच्छिस्वरतीनामुपसंख्यानम् *। वेत्तेरेव ग्रहणम्। सं-वित्ते। सं-विदाते।

वेत्तेर्व्विभाषा। ७। १। ७।

वेत्तेः परस्य झादेशस्यातोरुडागमो वा स्यात्। सं-विद्रते सं-विदते। सम्पृच्छते। सं-स्वरते। अर्त्तिश्रुदृशिभ्यश्चेति वक्तव्यम् *। अर्त्तीति द्वयोर्ग्रहणम् अङ्विधौ त्वियर्त्तेरेवेत्युक्तम्(७६७पृ०)। मा समृत। मा समृषाताम्। मा समृषतेति।

---

(१६) समोगम्यृच्छिप्रच्छिस्वरत्यर्त्तिविदिभ्य इति वृत्तिस्थपाठमुपेक्ष्य भाष्यस्थपाठमनुसरति समो गम्यृच्छिभ्यामिति। सङ्गच्छते सङ्गतो भवतीत्यर्थः। तत्त्व०

समार्त। समार्षाताम। समार्षतेति च भ्वादेः। इयत्तौ तु मा समरत। मा समरेताम्। मा समरन्त। समारत। समारेताम्। समारन्तेति च। सं—शृणुते। सम्पश्यते। अकर्म्मकादित्येव। अतएव "रत्नांसीतिपुरापि संशृणुमहे" इति मुरारिप्रयोगः प्रामादिक इत्याहुः। अध्याहारो वा इति कथयन्तुइति। अथास्मिन्नकर्म्मकाधिकारे हनिगम्यादीनां कथमकर्म्मकतेति चेत्। शृणु।

"धातोरर्थान्तरे वृत्तेर्द्धात्वर्थेनोपसं-ग्रहात्।
प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रिया"।

वहति भारम्। नदी वहति (१७) स्यन्दत इत्यर्थः। जीवति। नृत्यति। प्रसिद्धेर्यथा। मेघो वर्षति। कर्म्मणोऽविवक्षातो यथा। "हितान्न यः संशृणुते स किं प्रभुः"। उपसर्गादस्यत्यूह्यो र्वेति वाच्यम्। अकर्म्मकादिति निवृत्तम्। वस्यन्निरस्यति-निरस्यते। समूहति-समूहते।

## उपसर्गाद् ह्रस्व ऊहते। ७। ४। २३।

---

(१७) वहतेः सकर्म्मकतां प्रदर्श्य स्यन्दनमात्रार्थत्वेऽकर्म्मकत्वं दर्शयति नदी वहतीति। प्राणधारणं जीवनं गात्रविक्षेपविशेषोन्नृत्यं तयोर्द्वयोरपि धात्वर्थप्रविष्टकर्म्मकत्वादकर्म्मकत्वम्। प्रसिद्धिश्च सत्ताजागरणादीनां तेषां फलसमानाधिकरणव्यापारबोधकत्वादकर्मकत्वम्। अविवक्षितकर्म्मत्वं कर्म्मानाकाङ्क्षव्यापारबोधकत्वं तथा च फलव्यधिकरणव्यापारबोधकानामपि विवक्षाभावात् फलसामानाधिकरण्येन फलशून्यव्यापारबोधकत्वादकर्म्मकत्वम्। प्रपञ्चितश्चैतदस्माभिः शब्दार्थरत्ने।

यादौ क्ङिति । ब्रह्म समुच्चात् । अग्निं समुच्चात् ।

**निसमुपविभ्यो ह्वः । १ । ३ । ३० ।**

नि--ह्वयते ।

**स्पर्द्धायामाङः । १ । ३ । ३१ ।**

कृष्णश्चाणूरमा-ह्वयते । स्पर्द्धायां किम् पुत्रमा-ह्वयति ।

**गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः । १ । ३ । ३२ ।**

गन्धनं हिंसा (१८)। उत्कुरुते सूचयतीत्यर्थः । सूचनं हि प्राणवियोगानुकूलत्वाद्धिंसैव । अवक्षेपणम्भर्त्सनम् श्येनो वर्त्तिकामुदा-कुरुते भर्त्सयतीत्यर्थः । हरिमुप--कुरुते सेवते । परदारान् प्र-कुरुते तेषु सहसा (१६) प्र-वर्त्तते इत्यर्थः । एधोदकस्योपस्कुरुते गुणमाधत्ते । गाथाः प्र-कुरुते प्र-कथयतीत्यर्थः शतम्प्र-कुरुते धर्म्मार्थं विनि-युङ्क्ते । एषु किम् कटङ्करोति ।

**अधेः प्रसहने । १ । ३ । ३३ ।**

प्रसहनं क्षमाभिभवश्च षह मर्षणेऽभिभवे चेति पाठात् । शत्रुमधि-कुरुते क्षमते इत्यर्थः अभि-भवतीति वा ।

---

(१८) गन्ध अर्द्दने इति (७।७६।१०)चौरादिकस्य गन्धधातोरर्थानुसरणादाह गन्धनं हिंसेति ।

(१६) सहसा वर्त्तते साहसिकस्तस्य कर्म्म साहसिक्यं तथा च सहसा प्रवृत्तिधीत्यर्थस्तदाह तेषु सहसा प्रवर्त्ततइति ।

**वेः शब्दकर्मणः। १। ३। ३४।**

स्वरान्वि-कुरुते उच्चारयतीत्यर्थः। शब्दकर्म्मणः किम् चित्तं वि-करोति कामः।

**अकर्म्मकाच्च। १। ३। ३५।**

वेः कृञ इत्येव। छात्रा वि-कुर्व्वते विकारं लभन्ते।

**सम्माननोत्सञ्जनाचार्य्यकरणज्ञानभृतिविगणनव्ययेषु नियः। १। ३। ३६।**

अतोत्सञ्जनज्ञानविगणनव्यया नयतेर्व्वाच्याः इतरे प्रयोगोपाधयः। तथाहि शास्त्रे नयते शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः। तेन च शिष्यसम्माननं फलितम्। उत्सञ्जने। दण्डमुन्नयते उत्-क्षिपतीत्यर्थः। माणवकमुप-नयते विधिना आत्मसमीपम्प्रापयतीत्यर्थः। उपनयनपूर्व्वकेणाध्यापनेन हि उपनेतरि आचार्य्यत्वं क्रियते (२०)। ज्ञाने। तत्त्वं नयते निश्चिनोतीत्यर्थः। कर्म्मकरानुप-नयते भृतिदानेन स्वसमीपम्प्रापयतीत्यर्थः। विगणनम्ऋणादेर्न्निर्य्यातनम्। करं वि-नयते राज्ञे देयं भागम्परि-शोधयतीत्यर्थः। शतं वि-नयते धर्म्मार्थं वि-नि-युङ्क्तइत्यर्थः।

(२०) उपनयोवेदार्हताप्रयोजकसंस्कारस्तस्य परगामित्वात् परस्मैपदे प्राप्ते-नेन तङ् विधीयते नह्युपनयनमात्रेणाचार्य्यत्वं किन्तु तत्पूर्व्वकाध्यापनेन "उपनीय ददद् वेदमाचार्य्यः सउदाहृत" इतिस्मृतेरेवञ्चाचार्य्यकरणस्य प्रयोगोपाधित्वं परम्परया बोध्यम्।

## कर्त्तृस्थे चाशरीरे कर्म्मणि । १ । ३ । ३७ ।

नियः कर्त्तृस्थे कर्म्मणि (२१) यदात्मनेपदम्प्राप्तन्तच्छरीरावयव-भिन्ने एव स्यात् । सूत्रे शरीरशब्देन तदवयवो लक्ष्यते । क्रोधं वि-नयते अप-गमयति । तत्फलस्य चित्तप्रसादस्य कर्त्तृगत्वात् स्वरितञितः (२५१०) इत्येव सिद्धे नियमार्थमिदम् । तेनेह न । गण्डं वि-नयति (२२) । कथं तर्हि "विगणय्य नयन्ति पौरुषमिति" कर्त्तृगामित्वाविवक्षायाम्भविष्यति ।

## वृत्तिसर्गतायनेषु क्रमः । १ । ३ । ३८ ।

वृत्तिरप्रतिबन्धः । ऋचि क्रमते बुद्धिर्न्न प्रति-हन्यतइत्यर्थः । सर्ग्गउत्साहः । अध्ययनाय क्रमते उत्सहते । क्रमन्तेऽस्मिन् शास्त्राणि स्फीतानि भवन्तीत्यर्थः ।

## उपपराभ्याम् । १ । ३ । ३९ ।

वृत्त्यादिष्वाभ्यामेव क्रमेर्नतूपसर्ग्गान्तरपूर्व्वात् । उप-क्रमते । परा-क्रमते । नेह । सं-क्रामति ।

## आङ उद्गमने । १ । ३ । ४० ।

आ-क्रमते सूर्य्यः उदयते इत्यर्थः । ज्योतिरुद्गमनइति वाच्यम् * । नेह । आ-क्रामति धूमो हर्म्म्यतलात् ।

---

(२१) कर्त्तृस्थे कर्म्मणि कर्त्तृस्थे क्रियाफले इत्यर्थः व्यपदेशिवद्भावात् कर्म्मणोऽपि फलत्वात् फलवत्त्वेनैव कर्म्मणः कर्मभावात् कर्म्मणीति पदमावर्त्त्य अनवयवे कर्म्मणि सतीति व्याख्येयम् ।

(२२) गण्डोरोगविशेषस्तस्य कर्त्तृस्थत्वेऽपि सावयवत्वात् न तत्कर्म्मणि तङिति बोध्यम् ।

## वेः पादविहरणे। १। ३। ४१।

साधु वि-क्रमते वाजी। पादविहरणे किम् वि-क्रामति सन्धिः द्विधा भवति स्फुटतीर्थः।

## प्रोपाभ्यां समर्थाभ्याम्। १। ३। ४२।

समर्थौ तुल्यार्थौ शकन्ध्वादित्वात् (४७४०) पररूपम्। प्रारम्भेऽनयोस्तुल्यार्थता। प्र-क्रमते। उप-क्रमते। समर्थाभ्यां किम् प्र-क्रामति गच्छतीत्यर्थः। उप-क्रामति (२३) आगच्छतीत्यर्थः।

## अनुपसर्गाद्वा। १। ३। ४३।

क्रामति-क्रमते। अप्राप्तविभाषेयम्। वृत्त्यादौ तु नित्यमेव।

## अपह्नवे ज्ञः। १। ३। ४४।

शतमप-जानीते अप लपतीत्यर्थः।

## अकर्मकाच्च (२४)। १। ३। ४५।

सर्पिषोऽनु-जानीते सर्पिषा उपायेन प्र-वर्त्तत इत्यर्थः।

## सम्प्रतिभ्यामनाध्याने। १। ३। ४६।

शतं सञ्जानीते अवेक्षत इत्यर्थः। शतं प्रति-जानीते अङ्गीकरोत्यर्थः। अनाध्यान इति योगो विभज्यते। तस्मा-

---

(२३) इत्यादिष्ववार्थेषु प्रोपाभ्यामित्यस्य प्रवृत्तेरभावात्तदर्थत्वाभावाच्च तङ्।

(२४) अनुपसर्गाज्ज्ञः (२६५४०) इत्यनेनैव सिद्धे सर्पिषोऽनु-जानीते इति सोपसर्गार्थमिदम्।

मर्य्यादकर्म्मकाच्चेति प्राप्तिरपि वार्य्यते । मातरं मातुर्वा सञ्जानाति । कर्म्मणः शेषत्वविवक्षायां षष्ठी ।

भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः । १ । ३ । ४७ ।

उपसम्भाषोपमन्त्रणे धातोर्व्वाच्ये इतरे प्रयोगोपाधयः । शास्त्रे-वदते भासमानो ब्रवीतीत्यर्थः । उपसम्भाषोपसान्त्वनम् । भृत्यानुप-वदते सान्त्वयतीत्यर्थः । ज्ञाने । शास्त्रे वदते । यत्ने । क्षेत्रे वदते । विमतौ । क्षेत्रे वि-वदन्ते । उपमन्त्रणमुपच्छन्दनम् । उप-वदते प्रार्थयतइत्यर्थः ।

व्यक्तवाचां समुच्चारणे । १ । ३ । ४८ ।

मनुष्यादीनां सम्भूयोच्चारणे वदेरात्मनेपदं स्यात् । सम्प्र-वदन्ते ब्राह्मणाः । नेह सम्प्र-वदन्ति खगाः ।

अनोरकर्मकात् । १ । ३ । ४९ ।

व्यक्तवाग्विषयादनुपूर्व्वादकर्म्मकाद्वदेरात्मनेपदं स्यात् । अनु-वदते(२५) कठः कलापस्य । अकर्म्मकात्किम् उक्तमनु-वदति । व्यक्तवाचां किम् अनु-वदति वीणा ।

विभाषा विप्रलापे । १ । ३ । ५० ।

विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणे उक्तं वा स्यात् । वि-प्र-वदन्ते वि-प्र-वदन्ति वा वैद्याः ।

(२५) अनुः सादृश्ये तेन कलापस्येति तुल्यार्थयोगेऽपि शेषविवक्षया षष्ठी ।

**अवाद्ग्रः। १। ३। ५१।**

अव-गिरते। गृणातिस्त्ववपूर्व्वो न प्र-युज्यत एवेति भाष्यम्।

**समः प्रतिज्ञाने। १। ३। ५२।**

शब्दं नित्यं सङ्गिरते प्रति-जानीतइत्यर्थः। प्रतिज्ञाने किम् सङ्गिरति ग्रासम्।

**उदश्चरः सकर्मकात्। १। ३। ५३।**

धर्म्ममुच्चरते उल्लङ्घ्य गच्छतीत्यर्थः। सकर्म्मकात्किम् वाष्प-उच्चरति उपरिष्टाद्गच्छतीत्यर्थः।

**समस्तृतीयायुक्तात्। १। ३। ५४।**

रथेन सञ्चरते।

**दाणश्च सा चेच्चतुर्थ्यर्थे। १। ३। ५५।**

सम्पूर्व्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात् तृतीया चेच्चतु-र्थ्यर्थे। दास्या सं यच्छते। पूर्व्वसूत्रे समइति षष्ठी तेन सूत्रद्वयमिदं व्यवहितेऽपि प्रवर्त्तते। रथेन समुदा चरते। दास्या सम्प्र-यच्छते।

**उपाद्यमः स्वकरणे। १। ३। ५६।**

स्वकरणं स्वीकारः। (२६) भार्य्यामुप-यच्छते।

---

(२६) स्वकरणमित्यत्र विकल्पेन च्विर्न भवति समर्थानां प्रथमाद्वेत्यतो (४८८पृ०) वेत्यनुवृत्तेः। स्वीकारश्च भार्य्यास्वीकारोऽन्यस्वीकारो वेत्यत्र नाग्रहस्तेन "शस्त्राण्युपायंसत जित्वराणीति" भट्टिः सङ्गच्छते।

**विभाषोपयमने।१।३।५६।**

यमः सिच् किद्वा स्याद्विवाहे। रामः सीतामुपायत-उपायंस्त वा उदवोढेत्यर्थः। गन्धनाङ्के (२७) उपयमे तु पूर्व्वविप्रतिषेधान्नित्यङ्कित्त्वम् (२८)।

**ज्ञाश्रुस्मृदृशां सनः।१।३।५७।**

सनन्तानामेषां (२९) प्राग्वत्। धर्म्मं जिज्ञासते। शुश्रूषते। सुस्मूर्षते। दिदृक्षते।

**नानोर्ज्ञः।१।३।५८।**

पुत्रमनु-जिज्ञासति। पूर्व्वसूत्रस्यैवायन्निषेधः अनन्तरस्येति न्यायात्। तेनेह न। सर्पिषोऽनु-जिज्ञासते सर्पिषा प्रवर्त्तितुमिच्छतीत्यर्थः। पूर्ववत्सनः(उ२५५पृ०) इति तङ्। अकर्म्मकाच्चेति (उ२५१पृ०) केवलाद्विधानात्।

**प्रत्याङ्भ्यां श्रुवः।१।३।५९।**

आभ्यां सनन्ताच्छ्रुवस्तङ् न स्यात्। प्रति-शुश्रूषति। आ-शु-

---

(२७) नवेति विभाषेति (२१पृ०) सूत्रभाष्ये पूर्व्वप्रतिषेधस्याहोक्तत्वादाह गन्धनाङ्क इति सूचनार्थं इत्यर्थः।

(२८) यमोगन्धने इति (उ२४६पृ०) पूर्व्वसूत्रेणेत्यर्थः।

(२९) अपह्नवे ज्ञ इति(उ२५१पृ०)ज्ञाधातोरर्त्ति श्रुदृशिभ्यश्चेति (उ२५६पृ०वा०) श्रुदृशिधात्वोः तङः सिद्धत्वेन पूर्व्वत्सनः (उ२५५पृ०) इत्यनेन सन्नन्तेभ्यस्तेभ्योऽपि तङः सिद्धावपि विषयान्तरे तङ् विधानार्थमिदम्।

शूषति। कर्म्मप्रवचनीयात्स्यादेव। देवदत्तं प्रति शुश्रूषते। शदेः शितः (७६०पृ०) म्रियतेर्लुङ्लिङोश्च (७१५४पृ०) (२०) व्याख्यातम्।

## पूर्व्ववत्सनः।१।३।६२।

सनः पूर्व्वो यो धातुस्तेन तुल्यं सनन्तादप्यात्मनेपदं स्यात्। एदिधिषते। शिशयिषते। नि-विविक्षते। पूर्व्ववत्किम्। बुभूषति। शदेरित्यादिसूत्रद्वये सनो (२१) नेत्यनुवर्त्त्य वाक्य भेदेन व्याख्येयम्। तेनेह न। शिशत्सति। मुमूर्षति। आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य (७२२पृ०)। एधाञ्चक्रे।

## प्रोपाभ्यां युजेरयज्ञपात्रेषु।१।३।।६४

प्र-युङ्क्ते। उप-युङ्क्ते। स्वराद्यन्तोपसर्गादिति (२२) वक्तव्यम् *। उद्युङ्क्ते। नि-युङ्क्ते। अयज्ञपात्रेषु किम्। द्वन्द्वं न्यञ्चि पात्राणि प्र-युनक्ति।

## समः क्ष्णुवः।१।३।६५।

सं-क्ष्णुते शस्त्रम् (२३)।

(२०) म्रादौ शदधातुस्तुदादौ च म्रधातुरक्तस्तत्रैते सूत्रे व्याख्याते।

(२१) सनो नेति न सूत्रं किन्तु नानोर्ज्ञ इत्यतो (७२५४पृ०) नेति पूर्व्ववत्सन इत्यतः सनइत्यनुवर्त्त्य योगविभागात् सनो नेत्यन्वयात्तदर्थकं भाष्यवाक्यम्।

(२२) स्वरवर्णएवाद्यन्तयोर्यस्य तस्मादुपसर्गादित्यर्थस्तेन दुर्निभ्यां समश्च नेति बोध्यम्।

(२३) समगम्यृच्छीत्यत्र (७२४६पृ०) क्ष्णुधातुमपठित्वा पृथक्सूत्रकरणं सकर्मकादपि तङ्विधानार्थमिति ध्वनयन्नुदाहरति सं-क्ष्णुते शस्त्रमिति।

**भुजोऽनवने (३४)। १। ३। ६६।**

ओदनं भुङ्क्ते अभ्यवहरतीत्यर्थः। "बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्"। "वृद्धो जनो दुःखशतानि भुङ्क्ते"। इहोपभोगो भुजेरर्थः। अनवने किम् महीम्भुनक्ति।

**णेरणौ यत्कर्म णौ चेत्स कर्त्ताऽनाध्याने। १। ३। ६७।**

ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव चेण्ण्यन्ते-नोच्यतेऽणौ यत्कर्म कारकं स चेण्णौ कर्त्ता स्यान्न-त्वाध्याने (३५)। णिचश्चेति (७१७०पृ०) सिद्धेऽकर्त्रभिप्रायार्थ-मिदम्। कर्त्रभिप्राये तु विभाषोपपदेनेति (७२६०पृ०) विकल्पो, (३६) ऽणावकर्मकादिति (७२६४पृ०) परस्मैपदे च परत्वात्प्राप्ते पूर्वविप्रतिषेधेनेदमेवेष्यते (३७) कर्त्तृस्थ-

---

(३४) अवनं पालनम् अत्र अदनइति वक्तव्येऽनवने इतिपर्य्युदासग्रहणं भुजेरौधादिकस्यैव ग्रहणार्थं तथा च अवनभिन्नार्थे उपभोगादावर्थेऽपि तङ्थेमिदं तदेतद्गुहारणे स्वयमेव स्पष्टीचकार।

(३५) इहावान्तरवाक्यानि चत्वारि णेरात्मनेपदमित्येकं, तच्च स्यादित्यनेनान्वितम् अणौ यत् कर्म णौ चेदिति द्वितीयं, तत्र कर्मशब्दः क्रियापरः "कर्म क्रियेति" कोषात् तथाचाणौ या क्रिया सैव चेत् ण्यन्तेनोच्यतइत्यर्थः, स कर्त्तेति तृतीयं अणौ यत् कर्म णौ चेदिति सर्व्वमत्रानुवर्त्तते कर्मशब्दस्यात्र कारकविशेषपरइत्याशयेन व्याचष्टे अणौ यत् कर्मेत्यादि। अनाध्याने इति चतुर्थं, व्याचष्टे नत्विति आध्यानमुत्कण्ठापूर्व्वकं स्मरणम्।

(३६) विकल्पे इति परत्वात् प्राप्ते इत्युत्तरेण संबध्यते।

(३७) इदमेवेष्यत इति। स्वं यज्ञं यजति यजते वेत्यादौ विभाषोपपदेनेत्यस्य (७२६०पृ०)विषयः। दर्शयते राजेत्यादौ णेरणावित्यस्यावकाशः।

भावका: (३८)कर्त्तृस्थक्रियाश्चोदाहरणम्। तथा हि पश्यन्ति (३९) भवम्भक्ताः चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थः। प्रेरणांशत्यागे (४०) पश्यति भवः विषयो भवतीत्यर्थः। ततो (४१) हेतुमणिच्। दर्शयन्ति भवम्भक्ताः पश्यन्तीत्यर्थः। पुनर्ण्यर्थस्या-(४२)-विवक्षायाम्। दर्शयते भवः। इह प्रथमातृतीययोरवस्थयोर्द्वितीयाचतुर्थ्योश्च तुल्योऽर्थः(४३) तत्र तृतीयक-

---

येते कृष्णस्तं गोपी शाययतीत्यादौ अणावकर्म्मकादित्यस्य (उ२६४पृ०) विषयः लावयति केदारः स्वयमेवेति णेरणावित्यस्य(उ२५६पृ०) विषयः। तत्र हि लूयते केदारम् स्वयमेवेति द्वितीयकक्षायामकर्म्मकमिति भावः।

(३८) अपरिस्पन्दनसाध्यो धात्वर्थो भावः सपरिस्पन्दनसाध्या तु क्रिया। साधनञ्च कारकं तत्र गमनारोहणादौ सपरिस्पन्दएव कर्त्ता क्रियां साधयति श्रवणदर्शनादिकं तु स्पन्दनरहितोऽपीत्यनयोर्भेदादाह कर्त्तृस्थभावका इत्यादि।

(३९) कर्त्तृस्थभावकमुदाहरति पश्यन्तीति स्पन्दनं विनापि धात्वर्थदर्शनादेः साध्यत्वात्तथात्वम्।

(४०) प्रेरणांशेति कर्म्मणः सौकर्य्यविवक्षया तदीयव्यापारमात्रस्यैव वाच्यत्वे इत्यर्थः।

(४१) ततः त्यक्तप्रेरणांशाद्धातोरित्यर्थः।

(४२) पुनर्ण्यर्थस्येति उपायनिवृत्तावपि उपेयानिवृत्तिरिति न्यायात् णिचो न निवृत्तिरितिद्योतनाय ण्यर्थस्येत्युक्तम् एवञ्च स्वार्थ एव णिजिति फलितार्थः।

(४३) तुल्योऽर्थ इति प्रथमाद्वितीययोश्चाक्षुषज्ञानानुकूलव्यापारबोधकत्वाविशेषात् तृतीय चतुर्थ्योस्तु चाक्षुषज्ञानरूपफलमात्रबोधकत्वविशेषाच्च तुल्यत्वम्।

च्छायां (४४) न तङ् क्रियासाम्येऽपि (४५) अणौ कर्म्मकारकस्य णौ कर्त्तृत्वाभावात्। चतुर्थ्यान्तु तङ् द्वितीयामादाय (४६) क्रियासाम्यात् प्रथमायाङ्कर्मणो भवस्येह कर्त्तृत्वाच्च। एवमा-रोहयते (४७) हस्तीत्यप्युदाहरणम्। आ-रोहति हस्तिनं हास्तिकाः न्यग्भावयन्तीत्यर्थः। तत आ-रोहति (४८) हस्ती न्यग्भवतीत्यर्थः। ततो (४९) णिच्। आ-रोहन्ति आ-रोहन्तीत्यर्थः। ततश्चा-रोहयते (५०) न्यग्भवतीत्यर्थः। यद्वा (५१)। पश्यन्त्या-रोहन्तीति प्रथमकक्षा प्राग्वत्। ततः कर्मण एव हेतुत्वारोपाण्णिच्। दर्शयति भवः आ-रोहयति हस्ती पश्यत आरोहतस्च प्रेरयतीत्यर्थः। ततो णिजभ्या-

---

(४४) प्रथमाद्वितीययोरर्थन्तत्वाभावात् प्रवृत्तिर्नास्तीत्यतस्तृतीयकक्षायामित्युक्तम्।

(४५) क्रियासाम्येऽपीति प्रथमकक्षया तुल्यार्थत्वेऽपि द्वितीयकक्षाया अण्यन्तावस्थाया ध्यानरूपार्थस्य कर्म्माभावात् णौ कर्त्तुः भक्तस्य द्वितीयकक्षायां कर्म्मत्वाभावाच्च।

(४६) द्वितीयामादायेति तथा च अणौ या क्रिया चाक्षुषज्ञानात्मिका द्वितीयकक्षास्था सैव ण्यन्तेनोच्यते, तृतीयायाः प्रथमासाम्यात् प्रथम क्रियायां कर्म्मणो भवस्य कर्त्तृत्वाच्च तङिति फलितम्।

(४७) कर्त्तृस्थक्रियाकमुदाहरति एवमा-रोहयते हस्तीति।

(४८) प्रेरणांशत्यागे उदाहरणमा-रोहति हस्तीति।

(४९) तत इति निवृत्तप्रेषणात् अविवक्षितन्यग्भावानुकूलव्यापाराद्वातोरित्यर्थः।

(५०) पुनर्ण्यर्थस्याविवक्षायामुदाहरति आ रोहयते इति तत्र क्रियासाम्यतङादिकं प्राग्वत्।

(५१) एवं निवृत्तप्रेषणपक्षमुपपाद्यारोपितप्रेषणपक्षमाह यद्वेति।

न्तप्रकृतिभ्याञ्च उपात्तयोर्द्वयोरपि प्रेषणयोस्त्यागे दर्श्यते आ-रोहयते इत्युदाहरणम् अर्थः प्राग्वत्। अस्मिन् पक्षे द्वितीयकक्षायान्न तङ् समानक्रियात्वाभावात्त्विजर्थस्याधिक्यात्। अनाध्याने किम् स्मरति वनगुल्मं कोकिलः। स्मरयति वनगुल्मः उत्कण्ठापूर्व्वकस्मृतौ विषयो भवतीत्यर्थः। भीस्म्योर्हेतुभये (७।६४पृ०) व्याख्यातम्।

## गृधिवञ्च्योः प्रलम्भने। १। ३। ६९।

प्रतारणेऽर्थे ण्यन्ताभ्यामाभ्याम्प्राग्वत्। माणवकं गर्द्धयते वञ्चयते वा। प्रलम्भने किम् श्वानङ्गर्द्धयति अभिकाङ्क्षा-मस्योत्पादयतीत्यर्थः। अहिं वञ्चयति वर्ज्जयतीत्यर्थः। लियः सम्मानशालीनीकरणयोश्च (७।६४पृ०) व्याख्यातम्।

## मिथ्योपपदात्कृञोऽभ्यासे। १। ३। ७१।

णेरित्येव (५२)। पदम्मिथ्या कारयते स्वरादिदुष्टमसकृदु-च्चारयतीत्यर्थः। मिथ्योपपदात्किम् पदं सुष्ठु कारयति। अभ्यासे किम् सकृत्पदम्मिथ्या कारयति। स्वरितञितः कर्त्र-भिप्राये क्रियाफले (७५पृ०)। यजते। सुनुते। कर्त्रभि-प्राये किम् ऋत्विजो यजन्ति (५३)। सुन्वन्ति।

---

(५२) इह करोतिरुच्चारणार्थत्वादकर्म्मकः। उच्चारणञ्च निःसरणं ण्यन्तस्य तूच्चारणं निःसारणं तच्च सकर्म्मकमुच्चारयति निःसारयतीत्यर्थः असकृदुच्चारणे धातोर्लक्षणा तत्र आत्मनेपदं द्योतकम्।

(५३) दक्षिणावेतनादिकं तु न यागफलं स्वर्गकामो यजेतेति स्वर्गाद्युद्देशे-नैव यागविधानात् अतो दक्षिणादिफलस्य ऋत्विग्गामित्वेऽपि न तङ्

**अपाद्वदः।१।३।७३।**

न्यायमप-वदते। कर्त्रभिप्राय इत्येव। अप-वदति। णिचश्च (७१७०पृ०)। कारयते।

**समुदाङ्भ्यो यमोऽग्रन्थे।१।३।७५।**

अग्रन्थे इति छेदः। व्रीहीन् सं-यच्छते। भारमुद्यच्छते। वस्त्रमा–यच्छते (५४)। अग्रन्थे किम् उद्यच्छति वेदम् अधिगन्तुमुद्यमङ्करोतीत्यर्थः। कर्त्रभिप्राये इत्येव।

**अनुपसर्गाज्ज्ञः (५५)।१।३।७६।**

गाञ्जानीते। अनुपसर्गात्किम् स्वर्गं लोकन्न प्र-जानाति। कथन्तर्हि भट्टिः "इत्थं नृपः पूर्व्वमवालुलोचे ततोऽनु-जज्ञे गमनं सुतस्येति"। कर्मणि लिट्। नृपेणेति विपरिणामः।

**विभाषोपपदेन (५६) प्रतीयमाने।१।३।७७।**

---

"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।
तत्प्रधानं फलं तासां न लाभादि प्रयोजनमिति"
हरिवचनात्।

(५४) आङो यमहनइत्येव (७२४५पृ०) सिद्धे पुनर्यमोग्रहणं सकर्म्मकार्थमिति द्योतयन्नुदाहरति वस्त्रमा यच्छते इति।

(५५) अकर्म्मकाच्चेत्येव (७२५१पृ०) सिद्धे सकर्मकार्थमारम्भः।

(५६) उपपदेन फलस्य कर्त्तृगामित्वे द्योतिते तङः प्राप्तौ विभाषेयम्। नव्यास्तु क्रियाफले इत्येवात्रानुवर्त्तते तथाच परगे कर्त्तृगे वा फले उपपदेन द्योतिते प्राप्ताप्राप्तविभाषेत्याहुः तेन पितृस्वर्गकाम इष्टा-पूर्त्तेन यजेतेति सिद्धं तत्र पितृस्वर्गकाम इत्युपपदेन फलस्य परगा-

स्वरितञितइत्यादि (७५९०) पञ्चसूत्र्या यदात्मनेपदं विहित-न्तत्समीपोच्चारितेन पदेन क्रियाफलस्य कर्त्तृगामित्वे द्योतिते वा स्यात्। स्वं (५७) यज्ञं यजति यजते वा। स्वङ्कटङ्करोति कुरुते वा। स्वम्पुत्रमप-वदति अप-वदते वा। स्वं यज्ञङ्कारयति कारयते वा। स्वं व्रीहिं सं-यच्छति सं-यच्छते वा। स्वाङ्गा-ञ्जानाति जानीते वा।

इत्यात्मनेपदम्।

---

मित्वद्योतनात् एतेन प्रकृतस्यत्वसमर्थनार्थं स्वरितञितः कर्त्रभि-प्राये क्रियाफले इति(७५९०)सूत्रेऽभिप्रायशब्दस्य इच्छापरतायाः कल्प-नेन कर्तृगामित्वेन विवक्षाविवक्षाभ्यां पदव्यवस्थेति वदन् शब्दचिन्ता-मणिकृत् परास्तः। किञ्च पितृस्वर्गकाम इति शब्देन स्मृत्या परगा-मिफलस्यैवोद्देश्यताबोधनात्तथासमर्थनमपि अकिञ्चित्करम्। तत्सर्वं प्रायिकमित्यादिशब्दशक्तिप्रकाशिकोक्तिरपि साहसिक्येव पदव्यव-स्थापकसूत्रस्यैव प्रायिकत्वकल्पनेऽव्यवस्थापत्तेरतोऽनेनैव सूत्रेण परगामिन्यपि फले उपपदेन द्योतिते विभाषेति नवीनपद्धतिराद-रणीया।

(५७) स्वमित्युपलक्षणं स्वार्थमात्मार्थं यज्ञं यजते इत्याद्यपि ग्राह्यम्।

शेषात् (१) कर्त्तरि परस्मैपदम् (७५पृ०)। अस्ति।

### अनुपराभ्यां कृञः। १। ३। ७९।

कर्त्तृगेऽपि फले गन्धनादौच परस्मैपदार्थमिदम्। अनु-करोति परा-करोति। कर्त्तरीत्येव भावकर्म्मणोर्म्मा भूत्। नचैवमपि कर्म्मकर्त्तरि प्रसङ्गः कार्य्यातिदेशपचस्य मुख्यतया तत्र कर्म्म-वत् कर्म्मणा(७२७४पृ०)इत्यात्मनेपदेन परेणास्य (२) बाधात्। शास्त्रातिदेशपचे (३) तु कर्त्तरि शब्(७७पृ०) इत्यतः शेषा-दित्यतश्च (७५पृ०) कर्त्तृग्रहणद्वयमनुवर्त्य कर्त्तैव यः कर्त्ता न तु कर्म्मकर्त्ता तत्रेति व्याख्येयम्।

### अभिप्रत्यतिभ्यः क्षिपः। १। ३। ८०।

क्षिप प्रेरणे स्वरितेत् (४)। अभि-क्षिपति।

### प्राद्वहः। १। ३। ८१।

प्र-वहति।

---

(१) अनुदात्तङितः (७४पृ०) इत्यादिनात्मनेपदमेवेति नियमात् न तत्र परस्मैपदस्य सम्भवः तथा च कर्त्तरि परस्मैपदमित्येतावतैव नियमसम्भवे शेषादिति पदं स्पष्टार्थम्।

(२) अस्य अनुपराभ्यामिति सूत्रविहितस्येत्यर्थः। अतएव कर्म्मवत् कर्म्म-णेति सूत्रे (२७४पृ०)कार्य्यातिदेशोऽयमिति वक्ष्यति।

(३) शास्त्रातिदेशपचे कर्म्मवत् कर्म्मणेत्यनेनात्मनेपदं न विधीयते किन्तु तद्विधायकं भावकर्म्मणोरिति(२४०पृ०)शास्त्रमतिदिश्यते तस्य च पूर्व्वत्वात् परेण अनुपराभ्यामित्यनेन बाधमाशङ्क्याह शास्त्राति-देशेति।

(४) स्वरितेत्त्वादुभयपदसिद्धौ कर्तृगेऽपि फले परस्मैपदार्थमारम्भः।

परेर्मृषः (५)। १। ३। ८२।

परि-मृष्यति। भौवादिकस्य तु। परि-मर्षति। इह परेरिति योगं विभज्य वहेरपीति केचित्।

व्याङ्परिभ्यो रमः। १। ३। ८३।

वि-रमति।

उपाच्च। १। ३। ८४।

यज्ञदत्तमुप-रमति उपरमयतीत्यर्थः अन्तर्भावितण्यर्थोऽयम्।

विभाषाऽकर्म्मकात्। १। ३। ८५।

उपाद्रमेरकर्म्मकात्परस्मैपदं वा। उप-रमति उप-रमते वा निवर्त्तत इत्यर्थः।

बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः। १। ३। ८६।

एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात्। णिचश्च(उ१७०४०)इत्यस्यापवादः। बोधयति पद्मम्। योधयति काष्ठानि। नाशयति दुःखम्। जनयति सुखम्। अध्यापयति। प्रावयति प्रापयतीत्यर्थः। द्रावयति विलापयतीत्यर्थः। स्रावयति स्यन्दयतीत्यर्थः (६)।

निगरणचलनार्थेभ्यश्च। १। ३। ८७।

(५) स्वरितेत्त्वादुभयपदे प्राप्तेऽयमारम्भः कर्तृगे फले परस्मैपदार्थः।

(६) प्रुद्रुस्रुवां चलनार्थतयोत्तरसूत्रेणैव ग्रहणे सिद्धेऽत्र सूत्रे पुनर्ग्रहणमर्थान्तरार्थं तद्द्योतयन् विवृणोति प्रापयतीति, विलापयतीति, स्यन्दयतीति च।

निगारयति। आशयति। भोजयति। चलयति। कम्पयति। अदेः प्रतिषेधः*। आदयते देवदत्तेन। गतिबुद्धीति(२५६पृ०) कर्म्मत्वम् आदिखाद्योर्नेति(२५८पृ०वा०)प्रतिषिद्धम्। निगरण-चलनेति सूत्रेण प्राप्तस्यैवायन्निषेधः शेषादिति (७५पृ०) अकर्त्रभिप्राये परस्मैपदं स्यादेव। आदयत्यन्नं वटुना।

**अणावकर्मकाच्चित्तवत्कर्त्तृकात्। १। ३। ८८।**

ण्यन्तात्परस्मैपदं (७) स्यात्। शेते कृष्णस्तङ्गोपी शाययति।

**न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवद-वसः। १। ३। ८९।**

एभ्यो ण्यन्तेभ्यः परस्मैपदन्न। पिबतिर्न्निगरणार्थः। इतरे चित्तवत्कर्त्तृकाकर्मकाः। नृतिस्वलनार्थोऽपि। तेन सूत्रद्वयेन प्राप्तिः। पाययते। दमयते। आ-यामयते। आ-यासयते। परि-मोहयते। रोचयते। नर्त्तयते। वादयते। वासयते। धेट उपसंख्यानम्*। "धापयेते शिशुमेकं समीची" (८)।

---

(७) क्रियाफलस्य कर्तृगामित्वेन तङि प्राप्ते परस्मैपदार्थमारम्भः अणाविति किं हेतुमण्ण्यन्तादकर्म्मकात् पदनियमो मा भूत् तेन आरोहयमाणं प्रयुङ्क्ते आ-रोहयते न्यग्भवतीत्यत्र न परस्मैपदम् बुधादिसूत्रात् (७२६३पृ०) इह णेरित्यनुवर्त्तते बुधादिभ्यश्च हेतुमण्णिजेव संभवति। तथाच तदन्तादेवायं विधिरेवं च अणाविति प्रतिषेधः प्रत्यासत्त्या हेतुमण्णिचएव न्याय्यः तेन बुधादिण्यन्ताद्धेतुमण्णौ न परस्मैपदं भवत्येवेति भाष्ये स्थितम्। तत्त्व०।

(८) समीची इति प्रथमाद्विवचनम्।

अकर्त्रभिप्राये शेषादिति(७५८सू०)परस्मैपदं स्यादेव। तस्मात् पाययति पयः। "दमयन्ती कमनीयता मदम्"। भिक्षा वासयति। वा क्यषः(७२२८सू०)। लोहितायति-लोहितायते। द्युद्भ्यो लुङि (७७७सू०)। अद्युतत्-अद्योतिष्ट। वृद्भ्यः स्यसनोः (७७९सू०)। वर्त्स्यति। वर्त्तिष्यते। विवृत्सति। विवर्त्तिषते। लुटि च क्लृपः (७८०सू०)। कल्प्ता। कल्प्तासि। कल्पितासे। कल्प्स्यति। कल्पिष्यते-कल्प्स्यते। चिक्लृप्सति चिकल्पिषते-चिक्लृप्सते।

इति परस्मैपदप्रक्रिया।

समाप्ता पदव्यवस्था।

अथ भावकर्म्मणोर्लडादयः। भावकर्म्मणोरिति(ऊ२४०पृ०)तङ्।

**सार्व्वधातुके यक्।३।१।६७।**

धातोर्य्यक् प्रत्ययः स्याद्भावकर्म्मवाचिसार्व्वधातुके परे (१)। भावो भावना (२) उत्पादना क्रिया सा च धातुत्वेन सकल(३) धातुवाच्या भावार्थकलकारेणानूद्यते। युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमपुरुषः (४)। तिङ्वाच्य(५)भावनाया

---

(१) धातोरेकाच (ऊ२०६पृ०) इत्यतः धातोरिति चिण् भावकर्मणोरित्यतः (ऊ२६८पृ०) भावकर्म्मणोरिति चानुवर्त्तते।

(२) अनुवृत्तं भावपदं व्याचष्टे भावनेति उत्पत्त्यर्थकाद्भवतेर्णिजन्तादचि भाव इति पदं सिद्धमिति भावः।

(३) सकलेति 'फलव्यापारयोर्धातुरि'त्युक्तेः "व्यापारो भावना सैवोत्पादना सैवच क्रिया" इत्युक्तेश्च तथार्थतेति भावः। व्यापारस्य फलसामानाधिकरण्येऽकर्मकत्वं फलव्यधिकरणत्वे सकर्मकत्वमिति भेदः "फलव्यापारयोरेकनिष्ठतायामकर्मकः धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृत" इत्युक्तेः।

(४) लकारस्य सामानाधिकरण्यं कर्त्तृधर्म्माभिधायिनएव संभवति न तु भावाभिधायिन इत्याशयेन व्याचष्टे युष्मदित्यादि शेषे प्रथम (ऊ७पृ०) इत्यस्य तु युष्मदस्मद्भिन्नोपपदे प्रथम इति न व्याख्यानं किन्तु मध्यमोत्तमयोरविषये प्रथमः स्यादिति व्याख्यानमित्याशयेनाह प्रथमेति।

(५) तिङ्वाच्येति घञादिवाच्यायास्तु सत्वरूपतैव।

"साध्यरूपा क्रिया तत्र धातुरूपनिबन्धना।

सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धन" इति

हर्य्युक्तेरिति भावः। अतएव पाकं पाकौ वा करोतीत्यादौ द्वितीया संख्याद्यन्वयः "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति भाष्योक्तेः लिङ्गसंख्यान्वयित्वं च प्रकृते द्रव्यत्वं सत्वरूपायाश्च तस्या न तथात्वं

"क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः।

असत्वरूपता तस्या इयमेवावधार्य्यतामिति" हर्य्युक्तेः।

असत्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न्न द्विवचनादि किन्त्वेकवचनमेव। तस्यौत्सर्गिकत्वेन (६) संख्यानपेक्षत्वादनभिहिते कर्त्तरि तृतीया। त्वया मयाऽन्यैश्च भूयते। बभूवे।

**स्यसिच्सीयुट्तासिषु भावकर्म्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च। ६। ४। ६२।**

उपदेशे योऽच्(७)तदन्तानां हनादीनाञ्च चिणीवाङ्गकार्य्यं(८)

(६) भावाख्याते एकवचनस्य न सार्व्वत्रिकत्वम् उष्ट्रासिकाः आस्यन्ते हतशायिकाः शय्यन्ते इति भाष्योदाहरणे बहुवचनस्यापि दर्शनादित्याशयेनाह तस्यौत्सर्गिकत्वेनेत्युक्तम्। उभयत्र धात्वर्थनिर्द्देशे स्त्रियां ण्वुलि कृदभिहितो भावो द्रव्यवत्प्रकाशते इत्यासिकाः शायिका इत्यनयोर्बहुत्वविवक्षया तयोरुपमानत्वेन तदुपमेयेऽपि आस्यन्ते शय्यन्ते इत्यत्र बहुवचनम् उष्ट्राणां यादृशान्यासनानि हतानां यादृशशयनानि तादृशानि आसनशयनानीति बोधात् उभयोस्तुल्यसंख्यकत्वम्। प्रपञ्चस्त्वस्मत्कृतशब्दार्थरत्ने द्रष्टव्यः।

(७) उपदेश इत्यजादीनां द्वन्द्वनिर्द्दिष्टत्वेऽप्यच एव विशेषणम् नत्वन्येषामभिव्यभिचारादित्याशयेनाह उपदेशे योऽजिति उपदेशेऽजन्तानामिति तु नोक्तं तथासति णिजन्तानामुपदेशाभावात् तेभ्यो न स्यात् साक्षादुच्चारणं हि उपदेशः स च णिच एव नतु णिजन्तस्य।

(८) चिणीव चिण्वदिति सप्तम्यन्ताद्वतिः स्यादिषु सप्तमीनिर्द्देशादित्याशयेनाह चिणीवेति तद्भावनिर्द्देशात् परिगणितकार्य्याण्येव भवन्ति यदाहुः

"चिण्वद्वृद्धियुक् च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति।
इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तोऽविघातीति"॥

अयमर्थः चिण्वदित्यतिदेशाद्वृद्ध्यादिकं भवति तथा च भाविनित्यादौ वृद्धिर्दायितेत्यादौ युक् घानिष्यतेइत्यादौ घत्वं शय्यन्तात् शमेः

वा स्यात्स्यादिषु परेषु भावकर्म्मणोर्गम्यमानयोः स्यादीना-मिडागमश्च । अयमिट् चिण्वद्भावसन्नियोगशिष्टत्वात्तदभावे न । इहार्द्धधातुकइत्यधिकृतं सीयुटो विशेषणन्नेतरेषामव्य-भिचारात् । चिण्वद्भावाद्वृद्धिः । भाविता-भविता । भावि-ष्यते-भविष्यते । भूयताम् । अभूयत । भूयेत । भाविषीष्ट-भविषीष्ट ।

## चिण् भावकर्मणोः । ३ । १ । ६६ ।

च्लेश्चिण् स्याद्भावकर्म्मवाचिनि तशब्दे परे । अभावि । अभा-विष्यत-अभविष्यत । तिङोक्तत्वात्कर्मणि न द्वितीया । अनुभू-यते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम्-अन्वभविषाताम् । णिलोपः । भाव्यते । भावयाञ्चक्रे । भाव-याम्बभूवे । भावयामासे । इह तशब्दस्य एशि इटएत्वे च कृते ह्एतीति (७२७सू०) हत्वन्न तासिसाहचर्य्यात् अस्तेरपि व्यतिहे इत्यादौ सार्व्वधातुके एव एति हत्वप्रवृत्तेरित्याहुः । भाविता । चिण्वदिटआभीयत्वेनासिद्धत्वाण्णिलोपः । पक्षे । भावयिता । भाविष्यते-भावयिष्यते । भाव्यताम् । अभाव्यत । भाव्येत । भाविषीष्ट-भावयिषीष्ट । अभावि । अभाविषाताम्-

शामिता-शमितेत्यादौ चिण्णमुलोरिति (७२३सू०) मितामुपधाया वा दीर्घः । चयन्तादिट् आभीयत्वेनासिद्धत्वेन अनिटीति (७६०सू०) निषेधाप्रवृत्तेर्णिलोपः । भू ता इति स्थिते परमपि वलादिलक्षणमिटं बाधित्वा चिण्वदिडेव भवति यतोऽयं नित्यः वलुनिमित्तस्तु इट् तत्र न प्रवर्त्तते सएव अविघाती णिचो लोपाहेतुरित्यर्थः ।

अभाविषातां । बुभूष्यते । बुभूषाञ्चक्रे । बुभूषिता । बुभूषिष्यते । बोभूय्यते । यङ्लुगन्तात्तु । बोभूयते । बोभुवाञ्चक्रे । बोभाविता बोभविता । अकृत्सार्व्वेति (७५।सू०) दीर्घः । स्तूयते विष्णुः । तुष्टुवे । स्ताविता-स्तोता । स्ताविष्यते-स्तोष्यते । अस्तावि । अस्ताविषातां-अस्तोषातां । गुणोऽर्त्तीति (७८६सू०) गुणः । अर्य्यते । स्मर्य्यते । सस्मरे । परत्वान्नित्यत्वाच्च गुणे रपरे कृतेऽजन्तत्वाभावेऽप्युपदेशग्रहणाच्चिण्वदिट् । आरिता-अर्त्ता । स्मारिता-स्मर्त्ता । गुणोऽर्त्तीत्यत्र नित्यग्रहणानुवृत्तेरुक्तत्वात्(७१६३सू०)नेह गुणः । संस्क्रियते । अनिदितामिति(१७७सू०)नलोपः । स्रस्यते । इदितस्तु वन्द्यते । सम्प्रसारणम् । इज्यते । अयङ्यि क्ङितीति(७२१०सू०) । शय्यते ।

## तनोतेर्य्यकि । ६ । ४ । ४४ ।

आकारोऽन्तादेशो वा स्यात् । तायते-तन्यते । ये विभाषा (७८१सू०) । जायते-जन्यते ।

## तपोऽनुतापे च । ३ । १ । ६५ ।

तपश्च्लेश्चिण् न स्यात्कर्मकर्त्तर्य्यनुतापे च । अन्वतप्त पापेन पापकृत्, तेनाभ्याहतमित्यर्थः । कर्मणि (८) लुङ् । यद्वा पापेन पुंसा कर्त्ता अशोचीत्यर्थः । घुमास्थेतीत्त्वम् (७११८६सू०) । दीयते । धीयते । आदेच(७८४सू०)इत्यत्राशितीति कर्मधारयादित्त्व ज्ञकशकारादौ निषेधः एषामादिशित्त्वाभावात्तस्मिन्नात्त्वम् । जग्ले

(८) कर्मवत् कर्मणेत्यनेन (७२७४सू०) कर्मकर्त्तुः कर्मवत्कार्य्यातिदेशात् कर्मणीति उक्तम् ।

आतो युक् चिण्कृतोः । ७ । ३ । ३३ ।

आदन्तानां युगागमः स्याच्चिणि, ञिति-णिति-कृति च । दायिता-दाता । दायिषीष्ट--दासीष्ट । अदायि । अदायिषाताम्--अदिषाताम् । अधायिषाताम्--अधिषाताम् । अग्लायिषाताम् अग्लासाताम् । हन्यते । अचिस्लोः (७ । ८६ पृ० सू०) इत्युक्तेर्हनस्तो न । होहन्तेरिति (१५८ पृ०) कुत्वम् । घानिता-हन्ता । घानिष्यते-हनिष्यते । आशीर्लिङि । बधादेशस्यापवादश्चिण्वद्भावः आर्द्धधातुके सीयुटीति विशेषविहितत्वात् । घानिषीष्ट । पक्षे । बधिषीष्ट । अघानि । अघानिषाताम्-अहसाताम् । पक्षे । बधादेशः । अबधि । अबधिषाताम् । अघानिष्यत--अहनिष्यत । नच स्यादिषु चिण्वदित्यतिदेशाद्बधादेशः स्यादिति वाच्यम् अङ्गस्येत्यधिकारादाङ्गस्यैवातिदेशात् । ग्लायते । चिण्वदिटो न दीर्घत्वम् प्रकृतस्य बलादिलक्षणस्यैवेटोग्रहोऽलिटीत्यनेन (७ । १५८ पृ०) दीर्घविधानात् । ग्राहिता-ग्रहीता । ग्राहिष्यते-ग्रहीष्यते । ग्राहिषीष्ट--ग्रहीषीष्ट । अग्राहि । अग्राहिषाताम्-अग्रहीषाताम् । दृश्यते । अदर्शि । अदर्शिषाताम् । सिचः कित्त्वादम् । अदृक्षाताम् । गिरतेर्लिङि ध्वमि चतुरधिकं शतम् । तथाहि । चिण्वदिटो दीर्घो नेत्युक्तम् । अगारिध्वम् द्वितीये लिटि वृतो वेति (७ । ०पृ०) वा दीर्घः । अगरीध्वम्-अगरिध्वम् । एषान्त्रयाणां लत्वपक्षेत्वं ढत्वत्रयञ्चेति पञ्च वैकल्पिकानि । इत्थं षण्णवतिः (१०) ।

(१०) अचि विभाषेति (७ । ५ पृ०) रेफस्य लत्वे उक्तरूपत्रयेण सह षट्,

लिङ्सिचोरिति(७१४६पृ०) विकल्पादिड्भावे उश्चेति (७८१पृ०) कित्त्वम् रपरत्वं हलि चेति(१५७पृ०) दीर्घः । इणः षीध्वमिति (७२६पृ०) नित्यमढत्वम् । अगीर्ढ्वम् । ढवमानां द्वित्वविकल्पे अष्टौ(११) उक्तपक्षवत्या सह सङ्कलने उक्ता संख्येति ।

"इड्दीर्घश्चिण्वदिड् लत्वं ढत्वं द्वित्वत्रिकन्तथा ।
इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम्" ॥

हेतुमण्यन्तात्कर्मणि लः यक् णिलोपः । शम्यते मोहो मुकुन्देन ।

## चिण्णमुलोर्दीर्घोऽन्यतरस्याम् । ६ । ४ । ९३ ।

चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात् । प्रकृतो(१२)मितां ह्रस्व एव(७१७४पृ०सू०)तु न विकल्पितः णयन्तासौ ह्रस्वविकल्पासिद्धेः । दीर्घविधौ हि णिचो लोपो न स्थानिवदिति दीर्घः (१३) सिद्ध्यति ह्रस्वविधौ तु स्थानिवत्त्वं दुर्वारम् । भाष्ये तु पूर्वत्रासिद्धे न (१४) स्थानिवदित्यव-

---

विभाषेट इत्यनेन(७६५पृ०)षसां ढत्वे द्वादश द्वादशानां मध्ये अनचि चेति (३२पृ०)षसां ढस्य षसां धस्य च द्वित्वे द्वित्वरहितैः सह चतुर्विंशतिः मय इति (३६पृ०) षष्ठीतिपक्षे वकारस्यापि द्वित्वं त्वष्टचत्वारिंशत् अनचि चेति (३२पृ०) मकारस्य द्वित्वे षण्णवतिरित्यर्थः ।

(११) अचोरहाभ्यामिति (३८पृ०) ढस्य द्वित्वे द्वयोरपि वस्य यणोमय (३६पृ०) इति द्वित्वे चत्वारि, चतुर्णामपि मस्य अनचि चेति (३२पृ०) द्वित्वे अष्टावित्यर्थः ।

(१२) जनीजॄषेत्यादिना (७८५पृ०)मित्संज्ञकानां यो ह्रस्वः प्रक्रान्त इत्यर्थः ।

(१३) णिलोपस्य स्थानिवत्त्वाभावे व्यवधानादिति भावः ।

(१४) न पदान्तेति (२५पृ०) सूत्रेण स्थानिवत्त्वनिषेधादित्यर्थः ।

ष्टस्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः (१५) प्रत्याख्याताः। णाविति जातिपरो निर्देशः। दीर्घग्रहणाच्चेदृन्माऽस्त्विति तदाशयः। शामिता--शमिता--शमयिता। शामिष्यते-शमिष्यते-शमयिष्यते। यङन्तात्सिच्। शंशम्यते। शंशामिता-शंशमिता-शंशमयिता। यङ्लुगन्तात्सिच्यप्येवम्। भाष्यमते तु। यङन्ताच्चिण्वदिटि दीर्घो नास्तीति विशेषः। ण्यन्तत्वाभावे। शम्यते मुनिना।

## नोदात्तोपदेशस्य मान्तस्यानाचमेः। ७। ३। ३४।

उपधाया वृद्धिर्न स्याच्चिणि, ञिति-णिति-कृति च। अशमि। अदमि। उदात्तोपदेशस्येति किम् अगामि। मान्तस्य किम् अवादि। अनाचमेः किम् अचामि। अनाचमिकमिवमीनामिति वक्तव्यम् *। चिणि आयादय इति(उ५७पृ०)णिङभावे। अकामि। णिङ्णिचोरप्येवम्। अवामि। वध हिंसायाम्। हलन्तः। अनिवध्योरिति (उ१२६पृ०) न वृद्धिः। अवधि। जागोऽविचिणल्ङित्स्वित्युक्तेः(उ१२४पृ०)न गुणः। अजागारि।

## भञ्जेश्च चिणि। ६। ४। ३३।

नलोपो वा स्यात्। अभाजि-अभञ्जि।

(१५) भाष्यमते तु त्रिपादीस्थे दीर्घे कर्त्तव्ये स्थानिवत्त्वं पूर्वत्रासिद्धत्वेन न प्रवर्त्तते इत्यवलम्ब्य न पदान्तेत्यादिसूत्रे (२५पृ०) द्विर्वचनादयः प्रत्याख्यातास्तदाह द्विर्वचनेत्यादि।

विभाषा चिण्णमुलोः। ७। १। ६९।

लभेर्नुमागमो वा स्यात्। अलम्भि-अलाभि। व्यवस्थितविकल्पत्वात्प्रादेर्नित्यं नुम्। प्रालम्भि। द्विकर्म्मकाणान्तु

"गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्।
बुद्धिभक्षार्थयोः शब्दकर्मणाञ्च निजेच्छया।
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः"।

गौर्दुह्यते पयः। अजा ग्राममनीयते-ह्रियते-कृष्यते-उह्यते। बोध्यते माणवकन्धर्मः, माणवको धर्ममिति वा। भोज्यते, माणवकमोदनः, माणवकश्चोदनं वा। देवदत्तो ग्रामङ्गम्यते: अकर्मकाणां कालादिकर्मकाणां कर्मणि भावे च लकार-इष्यते। मासो मासं वा आस्यते देवदत्तेन। णिजन्तात्तु प्रयोज्ये प्रत्ययः। मासमास्यते माणवकः।

इति भावकर्मतिङ्प्रक्रिया।

---

यदा सौकार्य्यातिशयं द्योतयितुं कर्त्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते स्वव्यापारे स्वतन्त्रत्वात् । तेन पूर्व्वं करणत्वादिसत्त्वेऽपि सम्प्रति कर्तृत्वात्कर्त्तरि लकारः । साध्वसिश्छिनत्ति । काष्ठानि पचन्ति । स्थाली पचति । कर्म्मणस्तु कर्त्तृत्वविवक्षायां प्राक् सकर्मका अपि प्रायेणाकर्मकास्तेभ्यो भावे कर्त्तरि च लकाराः । पच्यते ओदनेन । भिद्यते काष्ठेन । कर्त्तरि तु (१) ।

## कर्मवत्कर्मणा तुल्यक्रियः । ३ । १ । ८७ ।

कर्मस्थया (२) क्रियया तुल्यक्रियः कर्त्ता कर्मवत्स्यात् । कार्य्यातिदेशोऽयम् । तेन यगात्मनेपदचिण्चिण्वदिटः स्युः । कर्त्तुरभिहितत्वात्प्रथमा । पच्यते ओदनः । भिद्यते काष्ठम् । अपाचि । अभेदि । ननु भावे लकारे कर्त्तुर्द्वितीया स्यादस्मादतिदेशादिति चेन्न । लकारवाच्य एव कर्त्ता कर्मवत् ।

---

"प्रवृत्तिमात्रे कर्त्तृत्वं सर्व्वत्रैवास्ति कारके ।
व्यापारभेदापेक्षायां करणत्वादिसम्भव इति" ॥

(१) वाक्यमनुरुन्धानः कर्त्तृत्वकर्मत्वादिकं व्यवस्थाप्य कार्य्यविशेषाय कर्मकार्य्यातिदेशकसूत्रमवतारयति कर्त्तरि त्विति ।

(२) कर्मस्थया कर्ममात्रस्थया क्रियया फलेन "फलव्यापारयोर्धातु"रित्युक्तेः "धातोरर्थः क्रियोच्यते" इत्युक्तेश्चेत्यर्थः तुल्यक्रियः समानाधिकरणक्रिय इत्यर्थः । किञ्च कर्मस्थभावकएव कार्य्यातिदेशार्थं कर्मणेति पदं "कर्मस्थेऽपि च धात्वर्थे कर्मकर्त्ता च कर्मवत् । कर्त्तृस्थेऽपि च धात्वर्थे कर्मकर्त्ता च कर्त्तृवदि"त्युक्तेः "कर्मस्थः पचतेर्भावः कर्मस्थाश्च भिदादय" इत्युक्तेः कर्मस्था कर्ममात्रस्थाः । गमनादयस्तु कर्त्तृस्थाः "कर्त्तृस्थो बुध्यतेर्भावः कर्त्तृस्थाश्च गमादय"इत्युक्तेः ।

ल्लिङ्याशिष्यङिति (उ४९२पृ०)द्विलकारकारकाल्ल(३)इत्यनुवृत्तेः भावे प्रत्यये च कर्तुर्लकारेणानुपस्थितेः। अतएव कृत्यक्त-(४)-खलर्थाः कर्मकर्तरि न भवन्ति किन्तु भावे एव। भेत्तव्यं कुसूलेन। ननु पचिभिद्योः कर्मस्था क्रिया विक्लित्तिर्द्विधाभवनञ्च। सैवेदानीङ्कर्तृस्था न तु तत्तुल्या। सत्यम्। कर्मत्वकर्तृत्वावस्था(५)भेदोपाधिकन्तत्समानाधिकरणक्रियाया भेदमाश्रित्य व्यवहारः। कर्मणेति किम् करणाधिकरणाभ्यान्तुल्यक्रिये पूर्वोक्ते(उ२७४पृ०)साध्वसिरित्यादौ मा भूत्। गच्छति ग्रामः। आरोहति हस्ती। अधिगच्छति शास्त्रार्थः। स्मरति श्रद्दधाति वा। यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु, यथा वा छिन्नेषु काष्ठेषु, तत्र कर्मस्था क्रिया नेतरत्र(६)। नहि पक्वा-

(३) व्यत्ययोबहुलं(उ४९१पृ०)ल्लिङ्याशिष्यङिति सूत्रयोः सन्धिजातद्विलकारमध्ये एकलकारस्यानुवृत्तेरित्यर्थः।

(४) कृत्यक्तखलर्था इत्यत्र क्तग्रहणं प्रायिकं सिनोग्रासइत्यादौ कर्मकर्तरि क्तस्य दर्शनादिति बोध्यम्।

(५) वास्तविकभेदाभावेऽप्यौपाधिकभेदोऽस्तीत्याह कर्मत्वकर्तृत्वावस्थेति तथाचावस्थाभेदेन क्रियाभेदात् कर्तुः कर्मस्थक्रियया तुल्यक्रियत्वमिति भावः।

(६) नेतरत्रेति।

"निर्वर्त्त्ये च विकार्य्ये च कर्मवद्भाव इष्यते।
न तु प्राप्ये कर्मणीति सिद्धान्तोऽयं व्यवस्थितः" ॥

इतिहर्य्युक्तेः क्रियाकृतविशेषवतोरेव निर्वर्त्त्यविकार्य्ययोः कर्मवद्भावो न तु तद्रहिते प्राप्यइति हर्य्युक्तः सिद्धान्तो द्योत्यत इति भावः।

पक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलभ्यते। करोतिरुत्पादनार्थः उत्पत्तिश्च कर्मस्था तेन कारिष्यते घट इत्यादि। यत्नार्थत्वे तु नैतत्सिध्येत् ज्ञानेच्छादिवद्यत्नस्य कर्तृस्थत्वात्। एतेन "अनुव्यवस्यमानेऽर्थे" इति व्याख्यातम् कर्तृस्थत्वेन यगभावाच्छानि कृते ओलोपे च रूपसिद्धेः। ताच्छील्यादावयश्चानश्‌_नत्वात्मनेपदम्। सकर्मकाणां प्रतिषेधो वक्तव्यः *। अन्योऽन्यं स्पृशतः। अजा ग्रामन्नयति। दुहिपच्योर्बहुलम्(७) सकर्मकयोरिति वाच्यम्।

## न दुहस्नुनमां यक्चिणौ। ३। १। ८९।

एषाङ्कर्मकर्त्तरि यक्चिणौ नस्तः। दुहेरनेन यक एव निषेधः। चिण् तु विकल्पिष्यते। शप्लुक्। गौः पयो दुग्धे (८)।

## अचः कर्म्मकर्त्तरि। ३। १। ६२।

अजन्तात् च्लेश्चिण् वा स्यात् कर्मकर्त्तरि तशब्दे परे। अकारि—अकृत।

## दुहश्च (९)। ३। १। ६३।

(७) द्विकर्म्मकत्वादनयोरेकस्य कर्म्मणः कर्त्तृत्वविवक्षायामप्यन्यस्य कर्म्मणोविद्यमानतया सकर्म्मकत्वान्निषेधे प्राप्तेऽयमारम्भः।

(८) "गौणे कर्म्मणि दुह्यादे"रित्युक्तत्वाम् गौणकर्मण एव दुह्यादेः कर्त्तृत्वविवक्षा न्यादेस्तु मुख्यकर्मण एव तथात्वमिति द्योतयन्नुदाहरति गौः पयो दुग्धे इति न तु गां पयोदुग्धे इति अत्र यक्चिणोर्निषेधः आत्मनेपदं तु नित्यमेवेति बोध्यम्।

(९) कर्मकर्त्तर्य्येव दुहः च्लेश्चिण् वा स्यात् कर्मणि तु नित्यमेवेत्यर्थः।

अदोहि। पक्षे क्सः। लुग्वेति (७६२पृ०) पक्षे लुक्। अदुग्ध-अधुक्षत। उदुम्बरः (१०) फलम्पच्यते। सृजियुज्योः श्यंस्तु *। अनयोः सकर्मकयोः कर्त्ता बहुलङ्कर्मवत् यगपवादश्च (११) श्यन्वाच्य इत्यर्थः। सृजेः श्रद्धोपपन्ने कर्त्तर्य्येवेति वाच्यम् *। सृज्यते स्रजम्भक्तः श्रद्धया निष्पादयतीत्यर्थः। असर्ज्जि। युज्यते ब्रह्मचारी योगम्। भूषाकर्मकिरादिसनाञ्चान्यत्रात्मनेपदात् *। भूषावाचिनां किरादीनां सनन्तानाञ्च यक्चिणौ चिण्वदिट् च नेति वाच्यमित्यर्थः। अलङ्कुरुते कन्या। अलमकृत। अवकिरते हस्ती। अवाकीर्ष्ट। गिरते। अगीर्ष्ट। आद्रियते। आदृत। किरादिस्तुदाद्यन्तर्गणः (७५४पृ०)। चिकीर्षते कटः। अचिकीर्षिष्ट। इच्छायाः कर्त्तृस्थत्वेऽपि करोतिक्रियापेक्षमिह कर्मस्थक्रियात्वम् (१२)।

## न रुधः। ३। १। ६४।

अस्माच्च्लेश्चिण्। अवारुद्ध गौः। कर्म्मकर्त्तरीत्येव। अवारोधि गौर्गोपेन।

## तपस्तपःकर्म्मकस्यैव। ३। १। ८८।

(१०) कालउदुम्बरं फलं पचतीति स्थिते गौणकर्म्मणउदुम्बरस्य कर्तृत्वविवक्षायामिदमुदाहरणम्।

(११) यगपवादश्यन्विधानं स्वरार्थम् श्यनो नित्यमाद्युदात्तत्वात् यकस्तथात्वाभावादिति द्रष्टव्यम्।

(१२) पूर्ववत् सनद्त्यादिना (७२५५पृ०) सनः प्रकृतिभूतधातुसंबन्धिपदेन समं पदव्यवस्थावत् कर्त्तृस्थकर्मस्थव्यवस्थापि द्रष्टव्येत्याशयः।

कर्त्ता कर्मवत्स्यात्। विध्यर्थमिदम्। एवकारस्तु व्यर्थएवेति वृत्त्यनुसारिणः। तप्यते तपस्तापसः अर्ज्जयतीत्यर्थः। तपोऽनुतापे चेति (उ१६६पृ०) चिण्निषेधात्सिच्। अतप्त। तपःकर्मकस्येति किम् उत्तपति सुवर्णं सुवर्णकारः। न दुहस्नुनमां यक्चिणौ(उ२७६पृ०)। प्रस्नुते। प्रास्नाविष्ट–प्रास्नोष्ट। नमते दण्डः। अनंस्त। अन्तर्भावितण्यर्थोऽत्र नमिः। यक्चिणोः प्रतिषेधे हेतुमण्णिच्श्रिब्रूञामुपसंख्यानम् *। कारयते। अचीकरत। उच्छ्रयते दण्डः। उदशिश्रियत। चिण्वदिट् तु स्यादेव। कारिष्यते। उच्छ्रायिष्यते। ब्रूते कथा। अवोचत। भारद्वाजीयाः पठन्ति णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम् *। पुच्छमुदस्यति उत्पुच्छयते गौः। अन्तर्भावितण्यर्थतायाम् उत्पुच्छयते गाम्। पुनः कर्तृत्वविवक्षायाम्। उत्पुच्छयते गौः। उदपुपुच्छत। यक्चिणोः प्रतिषेधाच्छप्चङौ। श्रन्थिग्रन्थ्योराधृषीयत्वात् (उ१८०पृ०) णिजभावपक्षे ग्रहणम्। श्रन्थति मेखलां देवदत्तः। श्रन्थते। अश्रन्थिष्ट। ग्रन्थति ग्रन्थम्। ग्रन्थते ग्रन्थः। अग्रन्थिष्ट। क्र्यादिकयोस्तु(उ१६७पृ०)। श्रथ्नीते। ग्रथ्नीते। स्वयमेव विकुर्वते सैन्धवाः वल्गन्तीत्यर्थः। वेः शब्दकर्मणः, अकर्मकाच्चेति(उ२४६पृ०) तङ्। अन्तर्भावितण्यर्थस्य पुनः प्रेषणत्यागे। विकुर्वते सैन्धवाः। व्यकारिष्ट। व्यकारिषाताम्। व्यकारिषत। व्यकृत। व्यकृषाताम्। व्यकृषत।

कुषिरञ्जोः प्राचां श्यन् परस्मैपदञ्च।३।१।९०।

अनयोः कर्मकर्त्तरि न यक् किन्तु श्यन् परस्मैपदञ्च।

आत्मनेपदापवादः। कुष्यति-कुष्यते पादः। रज्यति-रज्यते वस्त्रम्। यगविषये तु नास्य प्रवृत्तिः। कोषिषीष्ट (१२)। रङ्क्षीष्ट।

इति कर्मकर्त्तृतिङ्प्रक्रिया।

---

(१२) श्यन्सन्नियोगशिष्टं परस्मैपदं श्यनभावे न प्रवर्त्तते इत्यात्मनेपदमेवोदाहरति कोषिषीष्टेति।

**अभिज्ञावचने लृट्। ३। २। ११२।**

स्मृतिबोधिन्युपपदे (१)भूतानद्यतने धातोर्लृट् स्यात्। लङो-ऽपवादः। स्मरसि कृष्ण! गोकुले वत्स्यामः (२)। एवं बुध्यसे चेतयसे इत्यादियोगेऽपि तेषामपि प्रकरणादिवशेन स्मृतौ वृत्तिसम्भवात्।

**न यदि। ३। २। ११३।**

यद्योगे उक्तन्न। अभिजानासि कृष्ण! यद्वने अभुञ्ज्महि(३)।

**विभाषा साकाङ्क्षे। ३। २। ११४।**

उक्तविषये लृड्वा स्यात्। लक्ष्यलक्षणभावेन साकाङ्क्षत्वे चार्थः। स्मरसि कृष्ण! वने वत्स्यामस्तत्र गाश्चारयिष्यामः। वासो (४) लक्षणञ्चारणं लक्ष्यम्। पक्षे लङ्। यच्छब्दयोगेऽपि "न यदीति" बाधित्वा परत्वाद्विकल्पः। परोक्षे लिट् (उ८४०)।

---

(१) भूतइत्यधिकारे अनद्यतने लङ्(उ१५पृ०) इत्यतोऽनद्यतन इत्यनुवर्त्तते। अभिज्ञा स्मृतिरुच्यतेऽनेनेति अभिज्ञावचनमिति विग्रहइत्याशयेन व्याचष्टे स्मृतिबोधिनीति।

(२) वत्स्याम इति अवसामेत्यर्थः पश्य मृगोधावतीत्यत्र वाक्यार्थकर्म्मकदर्शनमिव स्मरसीत्यत्र गोकुलाधिकरणकास्मत्कर्तृकभूतानद्यतनवासरूपवाक्यार्थएव कर्म्म कृष्णेति सम्बोधनं स्मरणक्रियायां विशेषणं तथाच पूर्व्वोक्तवाक्यार्थरूपनिवासकर्मकं कृष्णसम्बोध्यकं स्मरणमिति विशिष्टबोधः।

(३) न यदीत्यत्र लृटः प्रतिषेधे उत्सर्गेण लङित्युदाहरति अभुञ्ज्महीति।

(४) वासोलक्षणं प्रसिद्धत्वात् ज्ञापकमित्यर्थः चारणं लक्ष्यं सहसा बुद्ध्यनारोहात् साध्यमित्यर्थः।

चकार। उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम्। "सुप्तोऽहं किल विललाप"। "बहु जगद पुरस्तात्तस्य मत्ता किलाहम्"। अत्यन्तापह्नवे (५) लिड्वक्तव्यः ॰। कलिङ्गेष्ववात्सीः। नाहङ्कलिङ्गान् जगाम।

## हशश्वतोर्लङ् च। ३। २। ११६।

अनयोरुपपदयोर्लिड्विषये लङ् स्यात्। चाल्लिट्। इति ह अकरोच्चकार वा। शश्वदकरोच्चकार वा।

## प्रश्ने चासन्नकाले (६)। ३। २। ११७।

प्रष्टव्यः प्रश्नः। आसन्नकाले पृच्छ्यमानेऽर्थे लिड्विषये लङ्लिटौ स्तः। अगच्छत्किम्?। जगाम किम्?। अनासन्ने तु। कंसञ्जघान किम्?।

(५) अपह्नवोऽपलापस्तत्रात्यन्तिकत्वं तद्धेतोरपह्नये भवति। नाहं कलिङ्गमित्यादौ वासहेतोः कलिङ्गगमनस्यापह्नवादात्यन्तिकत्वं बोध्यम्। कलिङ्गो नाम देशो गन्तुं निषिद्धः

"अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च।

तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हतीति" स्मृतेः

तस्मिन् देशे त्वया गत्वा चिरं स्थितमिति केनचिदभियुक्तं स आह नाहमित्यादि। यदा तु कलिङ्गेषु अगाइत्युक्तः गमनमेवापलपति तदा नात्यन्तिकापह्नव इति तत्र लङेव न कलिङ्गेषु अगच्छमिति।

(६) प्रश्ने इति कर्म्मणि नङ्। भूतानद्यतने परोक्षे इत्यनुवर्त्तते तदाह लिड्विषये इति आसन्नकालश्च पञ्चवर्षाभ्यन्तरः तदतीतः कालः विप्रकृष्ट इति भेदः। तत्त्व०।

**लट् स्मे । ३ । २ । ११८ ।**

लिटोऽपवादः । यजति स्म युधिष्ठिरः ।

**अपरोक्षे च । ३ । २ । ११९ ।**

भूतानद्यतने लट् स्यात् स्मयोगे । एवं स्म पिता ब्रवीति ।

**ननौ पृष्टप्रतिवचने (७) । ३ । २ । १२० ।**

अनद्यतनपरोक्ष इति निवृत्तम् । भूते लट् स्यात् । अकार्षीः किम् ? ननु करोमि भोः ।

**नन्वोर्विभाषा (८) । ३ । २ । १२१ ।**

अकार्षीः किम् ? न करोमि नाकार्षम् । अहन्नु करोमि अहं न्वकार्षम् ।

**पुरि लुङ् चास्मे । ३ । २ । १२२ ।**

अनद्यतनग्रहणं मण्डूकप्लुत्याऽनुवर्त्तते । पुराशब्दयोगे भूतानद्यतने विभाषा लुङ् चाल्लट् न तु स्मयोगे पक्षे यथाप्राप्तम् (९) । वसन्तीह पुरा छात्राः अवात्सुः अवसन् ऊषुर्वा । अस्मे किम् यजति स्म पुरा । भविष्यतीत्यनुवर्त्तमाने (१०)

---

( ७ ) पृष्टस्य प्रतिवचनमिति विषयं द्योतयन्नुदाहरति अकार्षीः किमिति प्रश्ने, ननु करोमि भोरित्युत्तरम् ।

( ८ ) नन्वोरिति भूते इत्येव । पक्षे लुङ् ।

( ९ ) पक्षे यथाप्राप्तमिति लुङ्लटोरभावपक्षे लङ्, परोक्षे तु लिट् ।

(१०) भविष्यति गम्यादय (७४१२५७०) इत्यतो भविष्यतीत्यनुवर्त्तमाने इत्यर्थः ।

**यावत्पुरानिपातयोर्लट्। ३। ३। ४।**

यावद्भुङ्क्ते। पुरा भुङ्क्ते। निपातावेतौ निश्चयं द्योतयतः। निपातयोः किम्। यावद्दास्यते तावद्भोक्ष्यते। करणभूतया पुरा यास्यति।

**विभाषा कदाकर्ह्योः। ३। ३। ५।**

भविष्यति लट् वा स्यात्। कदा, कर्हि वा भुङ्क्ते भोक्ष्यते भोक्ता वा।

**किंवृत्ते (११) लिप्सायाम्। ३। ३। ६।**

भविष्यति लड् वा स्यात्। कङ्कतरङ्कतमं वा भोजयसि। भोजयिष्यसि भोजयितासि वा। लिप्सायाङ्किम्। कः पाट लिपुलङ्गमिष्यति।

**लिप्स्यमानसिद्धौ च। ३। ३। ७।**

लिप्स्यमानेनान्नादिना स्वर्गादेः सिद्धौ गम्यमानायाम्भविष्यति लड् वा स्यात्। योऽन्नं (१२) ददाति दास्यति दाता वा। स स्वर्गं याति यास्यति याता वा।

**लोडर्थलक्षणे च। ३। ३। ८।**

---

(११) किमा किंशब्देन वृत्तौ निष्पन्नः शब्दः कतरकतमादिस्तस्मिन्नुपपदे लिप्सायां गम्यमानायामित्यर्थः।

(१२) लिप्सायां पूर्व्वसूत्रेणैव सिद्धावकिंवृत्तार्थमिदमिति ध्वनयन्नुदाहरति योऽन्नमिति।

लोडर्थः (१३) प्रैषादिर्लक्ष्यते येन तस्मिन्नर्थे वर्त्तमानाद्धातोर्भविष्यति लङ् वा स्यात्। कृष्णश्चेद्भुङ्क्ते त्वङ्गाश्चारय। पक्षे (१४) लुट्लृटौ।

## लिङ् चोर्द्धमौहूर्त्तिके। ३। ३। ९।

ऊर्द्ध्वम्मुहूर्त्ताद्भवः ऊर्द्धमौहूर्त्तिकः निपातनात्समासः (१५) उत्तरपदवृद्धिश्च। ऊर्द्धमौहूर्त्तिके भविष्यति लोडर्थलक्षणे वर्त्तमानाद्धातोर्लिङ्लटौ वा स्तः। मुहूर्त्तादुपरि उपाध्यायश्चेदागच्छेत् आगच्छति आगमिष्यति आगन्ता वा। अथ लक्ष्छन्दोऽधीष्व।

## वर्त्तमानसामीप्ये वर्त्तमानवद्वा। ३। ३। १३१।

समीपमेव सामीप्यम् स्वार्थे ष्यञ् वर्त्तमाने लट् (३२५०) इत्यारभ्य उणादयो बहुलमिति(३४२१९०)यावत् येनोपाधिना (१६) प्रत्यया उक्तास्ते तथैव वर्त्तमानसमीपे भूते भविष्यति च वा स्युः।

---

(१३) लोडर्थस्य लक्षणमिति षष्ठीतत्पुरुषः लोडर्थः प्रैषादिस्तथाच कृष्णभोजनं प्रैष्यगोचारस्य लक्षणं कृष्णभोजनकाले त्वया गोचारणं कर्त्तव्यमित्यर्थः।

(१४) पक्षे इति कृष्णश्चेद्भोक्ता भोक्ष्यते वा त्वं गाश्चारयेति प्रयोगः।

(१५) तद्धितार्थोत्तरपदे(२५५१०) इत्यत्र दिक्संख्ये (२५५१०) इत्यनुवर्त्तनादिह समासो न स्यादित्याशङ्कायामाह निपातनादिति।

(१६) येनोपाधिना धातुविशेषोपाधिना ये प्रत्यया येभ्यो धातुभ्योविहितास्तेभ्यएव ते स्युरिति फलितोऽर्थः।

कदा आगतोऽसि ? (१७)अयमागच्छामि अयमागमम्। कदा गमिष्यसि ? एष (१८) गच्छामि गमिष्यामि वा।

## आशंसायां भूतवच्च।३।३।१३२।

वर्त्तमानसामीप्य इति नानुवर्तते। भविष्यति काले भूतवद्वर्त्तमानवच्च प्रत्यया वा स्युराशंसायाम् (१९)। देवश्चेदवर्षीत् वर्षति वर्षिष्यति वा धान्यमवापुस्म वपामः वप्स्यामो वा। समान्यातिदेशे विशेषानतिदेशस्तेन लङ्लिटौ न।

## क्षिप्रवचने लृट्।३।३।१३३।

क्षिप्रपर्य्याये उपपदे पूर्व्वविषये लृट् स्यात्। वृष्टिश्चेत् क्षिप्रमाशु त्वरितं वा यास्यति शीघ्रं वप्स्यामः। नेति वक्तव्ये लृङ्ग्रहणं लुटोऽपि विषये यथा स्यात्। श्वः शीघ्रं वप्स्यामः।

## आशंसावचने लिङ्।३।३।१३४।

आशंसावाचिन्युपपदे भविष्यति लिङ् स्यान्नतु भूतवत्(२०)। गुरुश्चेदुपेयादाशंसेऽधीयीय। आशंसे क्षिप्रमधीयीय।

(१७) आगतोऽसीति भूतकाले प्रश्ने आगच्छामीत्युत्तरवाक्ये भूतकालाभिव्यक्तयेऽयमिति प्रयोगस्त्वधुनैवागत इति भूतकालस्य वर्त्तमानसामीप्यद्योतनाय। तेनागमनाविनाभूतं श्रमस्वेदादिकमुपदिश्यते एवं भविष्यत्यपि बोध्यम्।

(१८) एष इति गमनोद्योगद्योतनाय, परिकरबन्धादिकद्योतनेन भविष्यतो वर्त्तमानसामीप्यं प्रतीयते।

(१९) आशंसनमाशंसा अप्राप्तस्य प्राप्तुमिच्छा तस्यावर्त्तमानत्वेऽपि तद्विषयस्य भविष्यत्त्वाद्भविष्यतीत्युक्तम्।

(२०) न भूतवदिति न वर्त्तमानवदित्यपि बोध्यम्।

नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः। ३। ३। १३५।

क्रियायाः सातत्ये सामीप्ये च लङ्लुटौ (२१) न। यावज्जीवमन्नमदाद्दास्यति वा। सामीप्यन्तुल्यजातीयेनाव्यवधानम्। येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनाधित (२२)। सोमेनायष्ट। येयं अमावस्यागामिनी तस्यामग्नीनाधास्यते सोमेन यक्ष्यते।

भविष्यति मर्य्यादावचनेऽवरस्मिन्। ३। ३। १३६।

भविष्यति काले मर्य्यादोक्ताववरस्मिन् प्रविभागेऽनद्यतनवन्न (२३)। योऽयमध्वा गन्तव्य आ पाटलिपुत्रात्तस्य (२४) यदवरं कौशाम्ब्यास्तत्र सक्तून् पास्यामः।

कालविभागे चानहोरात्राणाम्। ३। ३। १३७।

पूर्वसूत्रं सर्व्वमनुवर्त्तते (२५)। अहोरात्रसम्बन्धिनि विभागे

(२१) भूतानद्यतने लङ्(३।५ पृ० सू०) भविष्यत्यनद्यतने लुट्(३।२ पृ० सू०) एतौ यौ विहितौ तौ नेत्यर्थः।

(२२) लङ्लुटोर्निषेधेऽपि भूते लुङ् भविष्यति च लृट् भवत्येवेति द्योतयन्नुदाहरति आधितेति।

(२३) अक्रियासातत्यार्थमसामीप्यार्थञ्चायमारम्भः। अनद्यतनवन्नेति लुङ्न नेत्यर्थः। इह देशकृता मर्य्यादा उत्तरसूत्रे कालकृतेति भेदः।

(२४) तस्य पाटलिपुत्रावधिकमार्गस्य यदवरं कौशाम्ब्याः सकाशादित्यर्थः।

(२५) मर्य्यादोक्तौ कालविशेषे कालभेदाद्यदवरं तस्मिन् विभागे भविष्यति अनद्यतनवन्न, स चेत् कालविशेषोऽहोरात्रसम्बन्धी नेत्यर्थः।

प्रतिषेधार्थमिदम्। योगविभाग उत्तरार्थः। योऽयं वत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे। ऽनहोरात्राणामित्किम् योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रः तत्राध्येतास्महे।

परस्मिन्विभाषा। ३। ३। १३८।

अवरस्मिन्वर्जम्पूर्व्वसूत्रद्वयमनुवर्तते। अप्राप्तविभाषेयम्। योऽयं संवत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्राध्येष्यामहे-अध्येतास्महे। लिङ्निमित्ते(२६) लृङ् क्रियातिपत्तौ(उ०पृ०) भविष्यतीत्येव। सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्।

भूते च (२७)। ३। ३। १४०।

पूर्व्वसूत्रं सम्पूर्णमनुवर्त्तते।

वोताप्योः। ३। ३। १४१।

वा आ उताप्योः उताप्योरित्यतः प्राग्भूते लिङ्निमित्ते (२८) लृङ् चेत्यधिक्रियते। पूर्व्वसूत्रन्तु उताप्योरित्यादौ प्रवर्त्तत इति विवेकः।

गर्हायां लडपिजात्वोः। ३। ३। १४२।

---

(२६) भ्वादौ भूधातुप्रकरणे (उ०पृ०) व्याख्यातम्।

(२७) लिङ्निमित्ते लृङ् स्यात् भूते भविष्यति च क्रियाऽनिष्पत्तावित्यर्थः।

(२८) लिङ्निमित्ते भूते एवायं विकल्पो भविष्यति तु नित्यमिति। तत्त्व०

आभ्यां योगे लट् स्यात् कालत्रये (२९) गर्हायाम्। लृङा-दीन् (३०) परत्वादयम्बाधते। अपि जायान्त्यजसि जातु गणिकामाधत्से गर्हितमेतत्।

## विभाषा कथमि लिङ् च।३।३।१४३।

गर्हायामित्येव कालत्रये लिङ्। चाल्लट्। कथन्धर्म्मन्त्यजेस्त्य-जसि वा। पक्षे कालत्रयलकाराः। अत्र भविष्यति नित्यं लृङ्, भूते वा। कथन्नाम तत्रभवान् धर्म्ममत्यक्ष्यत्।

## किंवृत्ते लिङ्लृटौ।३।३।१४४।

गर्हायामित्येव विभाषा तु नानुवर्त्तते (३१)। कः कतरः कतमो वा हरिं निन्देत् निन्दिष्यति वा। लृङ् प्राग्वत् (३२)

## अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि।३।३।१४५।

गर्हायामिति निवृत्तम् (३३)। अनवक्लृप्तिरसम्भावना। अम-र्षोऽक्षमा। न सम्भावयामि, न मर्षये वा भवान् हरिं निन्देत् निन्दिष्यति वा। कः, कतरः, कतमो वा हरिं निन्देत् निन्दिष्यति वा। लृङ् प्राग्वत्।

(२९) कालविशेषानुपादानादित्यर्थः।

(३०) लृङ्लुङ्भ्यां चत्वाचोरित्यादिविषयेऽपि लडेव प्रयुज्यते इति भावः।

(३१) लिङ्लृटौ कालत्रये स्त इत्यर्थः। नानुवर्त्ततेइति तेनास्मिन् वि-षये पक्षे लकारान्तरं न भवतीत्यर्थः।

(३२) क्रियातिपत्तौ भविष्यति नित्यं लृङ्, भूते वेत्यर्थः।

(३३) लिङ्लटावनुवर्त्तेते तौ च कालत्रयेऽपि स्तस्तौ तु सर्व्वलकारापवादौ।

## किङ्किलास्त्यर्थेषु लृट्। ३। ३। १४६।

अनवक्लृप्त्यमर्षयोरित्येतत् गर्हायाञ्चेति यावदनुवर्त्तते। किङ्किलेतिसमुदायः क्रोधद्योतकउपपदम्। अस्त्यर्थाः अस्ति-भवतिविद्यतयः। लिङोऽपवादः (३४)। न श्रद्दधे, न मर्षये वा किंकिल त्वं शूद्रान्नम्भोक्ष्यसे। अस्ति भवति विद्यते वा शूद्रीङ्गमिष्यसि। अत्र लृङ् न।

## जातुयदोर्लिङ्। ३। ३। १४७।

यदायद्योरुपसंख्यानम् *। लृटो (३५) ऽपवादः। जातु यत् यदा यदि वा त्वादृशो हरिं निन्देन्नावकल्पयामि, न मर्षयामि वा। लृङ् प्राग्वत्।

## यच्चयत्रयोः (३६)। ३। ३। १४८।

यच्च यत्र वा त्वमेवं कुर्य्याः न श्रद्दधे, न मर्षयामि।

## गर्हायाञ्च (३७)। ३। ३। १४९।

अनवक्लृप्त्यमर्षयोरिति निवृत्तम्। यच्चयत्रयोर्य्योगे गर्हायां लिङेव स्यात्। यच्च यत्र वा त्वं शूद्रं याजयेः अन्याय्यन्तत्।

## चित्रीकरणे च। ३। ३। १५०।

---

(३४) प्राप्तयोर्लिङ्लृटोर्लिङ्ग्रहणात् लिङ् निवर्त्ततइत्याशयेनाह लिङो-ऽपवाद इति।

(३५) लिङ्लृटोः प्राप्तयोर्व्वचनमिदं लृटोबाधनार्थमित्याह लृटइति।

(३६) योगविभाग उत्तरसूत्रद्वये यच्चयत्रशब्दयोरेवानुवृत्त्यर्थः।

(३७) कालत्रयेऽयं विधिर्भवति सर्व्वलकारापवादः।

यच्च यत्र वा त्वं शूद्रं याजयेः आश्चर्य्यमेतत्।

**शेषे लृडयदौ। ३। ३। १५१।**

यच्चयत्राभ्यामन्यस्मिन्नुपपदे चित्रीकरणे गम्ये धातोर्लृट् स्यात्। आश्चर्य्यमन्धो नाम कृष्णं द्रक्ष्यति। अयदौ किम् आश्चर्य्यं यदि सोऽधीयीत।

**उताप्योः समर्थयोर्लिङ् (३८)। ३। ३। १५२।**

वाढमित्यर्थेऽनयोस्तुल्यार्थता। उत, अपि वा हन्यादघं हरिः। समर्थयोः किम्। उत दण्डः पतिष्यति। अपि-धास्यति द्वारम्। प्रश्नः प्रच्छादनञ्च गम्यते। इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो लिङ्।

**कामप्रवेदनेऽकच्चिति। ३। ३। १५३।**

स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यान्नतु कच्चिति। कामो मे भुञ्जीत भवान्। अकच्चितीति किम् कच्चिज्जीवति।

**सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे। ३। ३। १५४।**

अलमर्थोऽत्र प्रौढिः। सम्भावनमित्यलमिति च प्रथमया सप्तम्या विपरिणाम्यते। सम्भावनेऽर्थे लिङ् स्यात्तच्चेत्सम्भा-

(३८) धातोर्लिङ् स्यात् कालत्रयेऽपि शापहरणस्य निवृत्तत्वाद्भविष्यतीव भूतेऽपि नित्य इत्यर्थः।

ष्टनमलमिति, अलमिति सिद्धाप्रयोगे सति। अपि(३९)गिरिं शिरसा भिन्द्यात्। सिद्धाप्रयोगे किम् अलं कृष्णो हस्तिनं हनिष्यति।

## विभाषा धातौ सम्भावनवचनेऽयदि। ३। ३। १५५।

पूर्व्वसूत्रमनुवर्त्तते। सम्भावनार्थे धातावुपपदे उक्तेऽर्थे लिङ् वा स्यात् नतु यच्छब्दे। पूर्व्वेण नित्ये प्राप्ते वचनम्। सम्भावयामि भुञ्जीत, भोक्ष्यते वा भवान्। अयदि किम् सम्भावयामि यद्भुञ्जीथास्त्वम्।

## हेतुहेतुमतोर्लिङ्। ३। ३। १५६।

वा स्यात्। कृष्णं नमेच्चेत्सुखं (४०) यायात् कृष्णन्नंस्यति चेत्सुखं यास्यति। भविष्यत्येवेष्यते। नेह। हन्तीति पलायते।

## इच्छार्थेषु लिङ्लोटौ (४१)। ३। ३। १५७।

इच्छामि भुञ्जीत, भुङ्क्तां वा भवान्। एवङ्कामये प्रार्थयेइत्यादियोगे बोध्यम्। कामप्रवेदन इति वक्तव्यम् *। नेह। इच्छन् करोति।

(३९) सम्भावनाद्योतकोऽपिशब्दः गिरिभेदनं पर्य्याप्तमिति सम्भावनादिति कालसामान्ये लिङ् सम्भावनञ्च क्रियासु योग्यतेति बोध्यम्।

(४०) कृष्णनमनं सुखप्राप्तौ हेतुरिति क्रिययोः कार्य्यकारणभावोऽत्र लिङा द्योत्यते।

(४१) इच्छार्थेषूपपदेषु धातोर्लिङ्लोटौ स्तः लिङ् चेत्यत्र(उ२९२ पृ०)समानकर्त्तृकेष्वित्यनुवृत्त्य लिङ् विधानादिह असमानकर्त्तृकेष्विति बोध्यम्।

### लिङ् च। ३। ३। १५९।

समानकर्त्तृकेषु इच्छार्थेषूपपदेषु लिङ् स्यात्। भुञ्जीयेतीच्छति।

### इच्छार्थेभ्यो विभाषा वर्त्तमाने। ३। ३। १६०।

लिङ् स्यात्पक्षे लट्। इच्छेत् इच्छति। कामयेत कामयते। विधिनिमन्त्रणेति (७।६५०) लिङ्। विधौ। यजेत। निमन्त्रणे। इह भुञ्जीत भवान्। आमन्त्रणे। इहासीत। अधीष्टे। पुत्रमध्यापयेद्भवान्। सम्प्रश्ने। किम्भो वेदमधीयीय, उत तर्कम्?। प्रार्थने। भो भोजनं लभेय। एवं लोट्।

### प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च। ३। ३। १६३।

प्रैषो विधिः। अतिसर्गः कामचारानुज्ञा। भवता यष्टव्यम्। भवान् यजताम्। चकारेण (४२) लोटोऽनुकर्षणं प्राप्तकालार्थम् (४३)।

### लिङ् चोर्ध्वमौहूर्त्तिके (४४)। ३। ३। १६४।

प्रैषादयोऽनुवर्त्तन्ते। मुहूर्त्तादूर्ध्वं यजेत यजताम् यष्टव्यम्।

(४२) चकारेणेति लोट् चेति(७।३७०) पृथक्सूत्रकरणस्येदमेव प्रयोजनमेकसूत्रत्वे द्वयोरप्यनुकर्षणं स्यादिति भावः।

(४३) प्राप्तकालार्थमिति प्रैषातिसर्गयोः पूर्व्वेणैव सिद्धत्वादिति भावः

(४४) प्राप्तकालविशेषेऽप्राप्तस्य लिङोविधानार्थमिदं सूत्रं प्रैषातिसर्गयोस्तु पूर्व्वेण प्राप्ते एव लिङ्लोट्कृत्यानां कालविशेषे लिङा बाधा मा भूदिति चकार इति बोध्यम्।

### स्मे लोट्। ३। ३। १६५।

पूर्वसूत्रस्य विषये लिङ्: कृत्यानाञ्चापवादः। ऊर्द्ध्वं मुहूर्त्तात् यजतां स्म।

### अधीष्टे च। ३। ३। १६६।

स्मे उपपदेऽधीष्टे लोट् स्यात्। त्वं स्म अध्यापय।

### लिङ् यदि। ३। ३। १६८।

यच्छब्दे उपपदे कालसमयवेलासु (४५) च लिङ् स्यात्। कालः समयो वेला वा यद्भुञ्जीत भवान्।

### अर्हे (४६) कृत्यतृचश्च। ३। ३। १६९।

चाल्लिङ्। त्वं कन्यां वहेः।

### शकि लिङ् च। ३। ३। १७२।

शक्तौ लिङ् स्यात्। चात्कृत्याः। भारं त्वं वहेः। माङि लुङ् (७१८पृ०) मा कार्षीः। कथं मा भवतु मा भविष्यतीति नायं माङ् किन्तु माशब्दः।

### धातुसम्बन्धे प्रत्ययाः। ३। ४। १।

(४५) कालसमयवेलासु तुमन् (७४३२पृ०) इत्यतोनुवृत्तं कालेत्यादिष्विति उपपदेष्विति वचनविपरिणामः। अयं तुमुनोऽपवादः।

(४६) अर्हे योग्ये कर्त्तरि गम्यमाने कृत्यतृचो भवन्तीत्यर्थः। त्वया कन्या वोढव्या वहनीया त्वं कन्या वोढा त्वं कन्यां वहेरित्यादौ कन्योद्वहनं तव योग्यमित्यर्थः सर्व्वत्र।

धात्वर्थानां (४७ सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः। तिङन्तवाच्यक्रियायाः (४८) प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः (४९)। "वसन् ददर्श" भूते लट्। अतीतवासकर्तृकर्तृकन्दर्शनमर्थः। सोमयाजी अस्य पुत्रो भविता सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकम्भवनम्।

## क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः।३।४।३।

पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात्तस्य च हिस्वौ स्तः। तिङामपवादः। तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्तस्तिङ्संज्ञौ च तध्वमोर्विषये तु हिस्वौ वा स्तः। पुरुषैकवचनसंज्ञे तु नानयोरतिदिश्येते हिस्वविधानसामर्थ्यात् तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्त्तरि, (५०) आत्मनेपदिभ्यः स्वो भावकर्म्मकर्तृषु।

## समुच्चयेऽन्यतरस्याम्।३।४।३।

(४७) धातुपदं धात्वर्थपरं धात्वर्थयोः परस्परसम्बन्धे प्रधानकालानुसारेणान्येऽपि प्रत्यया भवन्तीत्यर्थः। तथाहि वसन् ददर्शेत्यादौ वासदर्शनयोःपरस्परसम्बन्धेन बोधनात् ददर्शेति मुख्यक्रियापेक्ष एव वसन्निति वर्त्तमानार्थकशतृप्रत्ययो भूतकालबोधकएवेति बोध्यम्।

(४८) तिङन्तवाच्येति प्रधानानुरोधेन गुणस्य नयनमुचितं न तु विपरीतमिति भावः।

(४९) प्रत्यया इति कालान्तरबोधका अपि भवन्तीति शेषः।

(५०) कर्त्तरि हिरिति हिशब्दस्य कर्त्ता वाच्यः, स्वशब्दस्य भावकर्म्मकर्त्तेति कैयटोक्तेरिति भावः।

अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं (५१) वा स्यात्।

**यथाविध्यनुप्रयोगः पूर्व्वस्मिन् (५२)। ३।४।४।**

आद्ये लोड्विधाने लोट्प्रकृतिभूतएव धातुरनुप्रयोज्यः।

**समुच्चये सामान्यवचनस्य। ३।४।५।**

समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः स्यात्। अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च। ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः। क्रियासमभिहारे द्वे वाच्ये *। याहि याहीति याति। पुनःपुनरतिशयेन वा यानं ह्यन्तस्यार्थः एककर्त्तृकं वर्त्तमानं यानम् यातीत्यस्य इति शब्दस्त्वभेदान्वये तात्पर्य्यं ग्राहयति। एवं यातः। यान्ति। यासि। याथः। याथ। यात यातेति यूयं याथ। याहि याहीत्ययासीत् यास्यति वा। अधीष्वाधीष्वेत्यधीते। ध्वंविषये पक्षेऽधीध्वमधीध्वमिति यूयमधीध्वे। समुच्चये तु सक्तून् पिब धानाः खादेत्यभ्यवहरति। अन्नं भुङ्क्ष्व दाधिकमास्वादयस्वेत्यभ्यवहरते। तध्वमोस्तु पिबत खादतेत्यभ्यवहरथ। भुङ्गध्वम् आस्वादयध्वमित्यभ्यवहरध्वे। पक्षे हिस्वौ। अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वयः पक्षे सक्तून् पिबति धानाः खादति अन्नम्भुङ्क्ते दाधिकमास्वादते। एतेन "पुरीमवस्कन्द लुनीहि

(५१) प्रागुक्तं धातोर्लोट् लोटो हिस्वावित्यादि कार्य्यमित्यर्थः।

(५२) पूर्व्वस्मिन्नित्यस्य क्रियासमभिहारे इत्यर्थः।

नन्दनं मुषाण रत्नानि हरामराङ्गनाः। विग्रह्य चक्रे-नमुचिद्विषा बली यइत्यमस्वास्थ्यमहर्दिवं दिव” इति व्याख्यातम् अवस्कन्दनलवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात्। इह पुनः पुनस्त्वस्कन्देत्यादिरर्थ इति व्याख्यानं भ्रममूलकमेव द्वितीयसूत्रे क्रियासमहारइत्यास्यानत्तुवृत्तेः लोडन्तस्य द्वित्वापत्तेश्च। पुरीमवस्कन्देत्यादिमध्यमपुरुषैकवचनमित्यपि केषाञ्चिद्भ्रम एव पुरुषवचनसंज्ञे इह नेत्युक्तत्वात्।

इति लकारार्थप्रक्रिया।

इति भट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्द्धे

तिङन्तं समाप्तम्।

इति श्रीतारानाथ तर्कवाचस्पतिभट्टाचार्य्यविरचितायां सरलाख्यायाम्
सिद्धान्तकौमुदीव्याख्यायां तिङन्तप्रकरणव्याख्यानम्
सम्पूर्णम्।

# सिद्धान्तकौमुदी

## कृत्यप्रक्रिया।

**धातोः। ३। १। ९१।**

आ तृतीयसमाप्तेरधिकारोऽयम्। तत्रोपपदं सप्तमीस्थम् (२७७पृ०)।

**कृदतिङ्। ३। १। ९३।**

**वाऽसरूपोऽस्त्रियाम्। ३। १। ९४।**

परिभाषेयम् (१)। अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्ययः उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना।

**कृत्याः। ३। १। ९५।**

(१) परिभाषेयमिति अधिकारसूत्रत्वे स्त्र्यधिकारपर्यन्तस्य विभाषया बाध्यबाधकताङ्गीकारापत्त्या तदूर्ध्वं विहितयोः क्त्वातुमुनोर्नित्यं बाध्यबाधकतापत्तिस्तथाच गत्वा भुज्यते इति गन्तुं भुज्यते इत्युभयोरपि भावार्थकतया नित्यं बाध्यबाधकतापत्तिरिति भावः। अत्र असरूप इत्युक्तेः सरूपस्तु नित्यं बाध्यते एव तेन एरजिति(उ४४२पृ०) ऋदोरप् (उ४४२पृ०) इत्यादयो घञादिबाधकाः। अस्त्रियामित्युक्तेः स्त्र्यधिकारेऽसरूपो नित्यं बाध्यते एव तेन स्त्रियां क्तिन्नित्यस्य(उ४४८पृ०) अः प्रत्ययादिति (उ४५१पृ०) बाधकमिति बोध्यम्।

अधिकारोऽयम् ण्वुलः (२) प्राक्

**कर्त्तरि कृत्। ३। ४। ६७।**

कृत्प्रत्ययः कर्त्तरि स्यादिति प्राप्ते

**तयोरेव कृत्यक्तखलर्थाः। ३। ४। ७०।**

एते भावकर्मणोरेव स्युः।

**तव्यत्तव्यानीयरः। ३। १। ९६।**

धातोरेते प्रत्ययाः स्युः। तकाररेफौ स्वरार्थौ। एधितव्यम् एधनीयन्त्वया। भावे औत्सर्गिकमेकवचनं क्लीवत्वञ्च। चेतव्यश्चयनीयो वा धर्म्मस्त्वया। वसेस्तव्यत्कर्त्तरि णिच्च *। वसतीति वास्तव्यः। केलिमर उपसंख्यानम् *। पचेलिमा माषाः पक्तव्याः। भिदेलिमाः सरला भेत्तव्याः। कर्मणि प्रत्ययः। वृत्तिकारस्तु कर्मकर्त्तरि चायमिष्यत इत्याह तद्भाष्यविरुद्धम्।

**कृत्यचः। ८। ४। २९।**

उपसर्गस्थान्निमित्तात्परस्याच उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यात्। प्रयाणीयम्। अचः किम्प्रमग्नः। निर्विण्णस्योपसंख्यानम् *। अचः परत्वाभावान्नकारेण व्यवधानाच्चाप्राप्ते वचनम्। परस्य णत्वम् पूर्व्वस्य ष्टुत्वम्। निर्विण्णः।

(२) प्रागिति ण्वुलृचावित्यस्मात् (उ३।१।१३३) प्रागेव कृत्या इत्यधिक्रियन्ते इत्यर्थः।

णेर्विभाषा। ८।४।३०।

उपसर्गस्थान्निमित्तात्परस्य ण्यन्ताद्विहितो यः कृत्तत्स्थस्य नस्य णो वा स्यात्। प्रयापणीयम्-प्रयापनीयम्। विहितविशेषणं किम्। यका(३)व्यवधाने यथा स्यात् प्रयाप्यमाणम्पश्य। णत्वे दुरुपसर्गत्वन्नेत्युक्तम् (७२ पृ०) दुर्यानम्। दुर्यापनम्।

हलश्चेजुपधात्। ८।४।३१।

हलादे(४)रिजुपधात्कृन्नस्याचः परस्य णो वा स्यात्। प्रकोपणीयं-प्रकोपनीयम्। हलः किम् प्रोहणीयम्। इजुपधात्किम् प्रवपणीयम्।

इजादेः सनुमः। ८।४।३०।

सनुमश्चेज्वति इजादेर्हलन्ताद् (५) विहितो (६) यः कृत्तत्स्थस्यैव। प्रेङ्खणीयम्। इजादेः किम् मगि समर्पणे प्रम-

(३) ण्यन्तात् विहितइत्यनुक्तौ यका व्यवधानेन ण्यन्तपरत्वाभावात् णत्वं न स्यात् णेर्विभाषेत्यत्र ण्यन्तकृतोरव्यवधानापेक्षा अड्व्यवायेऽपीत्यनेन(९१पृ०सू०)न निवर्त्तनीयेति भावः। अत्र यकेत्युपलक्षणम् आने मुगिति (७२६५पृ०) मुका व्यवधानेऽपि णत्वं बोध्यम्।

(४) इजुपधस्य हलन्तत्वाव्यभिचारात् हलइत्यस्य वैयर्थ्यभिया तदादिपरत्वमित्याह हलादेरिति।

(५) हलइत्यनुवृत्तं तदन्तपरमिजादेर्हलादित्वासम्भवादित्याशयेनाह हलन्तादिति।

(६) विहित इति व्याख्यानाभावे ण्यन्तात् विहितस्यापि णिलोपे सति हलन्तपरत्वात् णेर्विभाषेति सूत्रप्रवृत्तिरिति द्रष्टव्यम्।

कृनीयम्। नुम्ग्रहणमनुस्वारोपलक्षणम् (७)। अट्कुप्वा-
ङिति (६१९०) सूत्रेऽप्येवम्। तेन नेह। प्रेन्वनम्। इह तु
स्यादेव। प्रोम्भणम्।

वा निंसनिक्षनिन्दाम्। ८। ४। ३३।

एषां नस्य णो वा स्यात् कृति परे। प्रणिंसितव्यम् प्रनिंसि-
तव्यम्।

न भाभूपूकमिगमिप्यायीवेपाम्। ८। ४। ३४।

एभ्यः कृन्नस्य णो न। प्रभानीयम्। प्रभवनीयम्। पूञएवेह
ग्रहणमिष्यते। पूङ्स्तु प्रपवणीयः सोमः। ण्यन्तभादीना-
मुपसंख्यानम् *। प्रभापनीयम्। कृशाञ्जः शस्य यो वेत्युक्तं
(७११२९०)णत्वप्रकरणोपरि तद्बोध्यम् यत्वस्यासिद्धत्वेन शकारव्य
वधानान्न णत्वम्। प्रख्यानीयम्।

कृत्यल्युटो बहुलम् (८)। ३। ३। ११३।

स्नात्यनेन स्नानीयं चूर्णम्। दीयतेऽस्मै दानीयो विप्रः।

अचो यत्। ३। १। ९७।

अजन्ताद्धातोर्यत्स्यात्। चेयम्। जेयम्। अज्ग्रहणं शक्य
मकर्त्तुम्। योगविभागोऽप्येवम्। तव्यदादिष्वेव यतोऽपि
सुपठत्वात्।

(७) अट्कुप्वाङिति (६१९०) सूत्रेऽत्रापि नुमानुस्वारो लक्ष्यतद्वत्या-
ख्यानुस्वारेति।

(८) कृत्यसंज्ञकाःप्रत्यया ल्युट् च यत्रार्थे उक्तास्ततोऽन्यत्रापि स्युरित्यर्थः।

### ईद्यति ।६।४।६५।

यति परे आत ईत्स्यात् । गुणः । देयम् । ग्लेयम् । तकिशसिचतियतिजनिभ्यो यद्वाच्यः * । तक्यम् । शस्यम् । चत्यम् । यत्यम् । जन्यम् । जनेर्यद्विधिः स्वरार्थः ण्यतापि रूपसिद्धेः । न च वृद्धिप्रसङ्गः जनिवध्योश्चेति(उ२६४०)निषेधात् । हनो वा यद्वधश्च वक्तव्यः * (९) । वध्यः । पक्षे वक्ष्यमाणो (उ२०९४ सू) ण्यत् । घात्यः ।

### पोरदुपधात् ।३।१।९८।

पवर्गान्ताददुपधाद्यत्स्यात् । ण्यतोऽपवादः । शप्यम् । लभ्यम् । नानुबन्धकृत(१०)मसारूप्यमतो न ण्यत् । तव्यदादयस्तु स्युरेव ।

### आङो यि ।७।१।६५।

आङः परस्य लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते (११) । नुमि कृतेऽदुपधत्वाभावाण्ण्यदेव आलम्भ्यो गौः ।

### उपात्प्रशंसायाम् ।७।१।६६।

उपलम्भ्यः साधुः । स्तुतौ किम् उपलब्धुं शक्य उपलभ्यः ।

(९) हन्तेर्यत् स्यात् यत्सन्नियोगशिष्टतया वधादेशो नित्य एव ।

(१०) अनुबन्धानां प्रत्ययस्वरूपत्वाभावात् तत्कृतमसारूप्यं नाश्रीयतेऽतो यता ण्यद्बाध्यते इति भावः ।

(११) प्रत्ययोत्पत्तेः प्रागेव नुमि कृते तु अदुपधत्वाभावान्न यदित्यतो विवक्षिते इत्युक्तम् ।

शकिसहोश्च। ३। १। ९९।

शक्यम्। सह्यम्।

गदमदचरयमश्चानुपसर्गे। ३। १। १००।

गद्यम्। मद्यम्। चर्य्यम्। चरेराङि चागुरौ॰। आचर्य्यो देशः गन्तव्य इत्यर्थः। अगुरौ किम् आचार्य्यो गुरुः। यमेर्न्नियमार्थम्(१२) सोपसर्गान्मा भूदिति। प्रयाम्यम्। निपूर्व्वात्स्यादेव "तेन तत्र भवेद्विनियम्यमिति" वार्त्तिकप्रयोगात्। एतेना"ऽनियम्यस्य नायुक्तिः" "त्वया नियम्या ननु दिव्यचक्षुषेत्यादि" व्याख्यातम्। नियमे साधुरिति वा।

अवद्यपण्यवर्य्या गर्ह्यपणितव्यानिरोधेषु। ३। १। १०१।

वदेर्न्नञि उपपदे वदः सुपीति(उ२०४पृ०)यत्क्यपोः प्राप्तयोर्य्यदेव सोऽपि गर्हायामेवेत्युभयार्थं निपातनम्। अवद्यम्पापम्। गर्ह्ये किम् अनुद्यं गुरुनाम। तद्धि न गर्ह्यं वचनानर्हञ्च।

"आत्मनाम गुरोर्न्नाम नामातिकृपणस्य च।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोरिति" स्मृतेः॥

पण्या गौः व्यवहर्त्तव्ये (१३) त्यर्थः। पाण्यमन्यत् स्तुत्यर्ह

(१२) पोरदुपधादित्यनेनैव (उ २०१पृ०) सिद्धे नियमार्थं यमोग्रहणमित्यर्थः।

(१३) पणितव्यशब्दस्य स्तुत्यव्यवहार्य्योभयार्थत्वेऽपि प्रकृते व्यवहर्त्तव्यएव निपातनमिति द्योतयन् विवृणोति व्यवहर्त्तव्येति।

मित्यर्थः। अनिरोधोऽप्रतिबन्धस्तस्मिन्विषये वृङो यत्। शतेन वर्य्या (१४) कन्या। वृत्या (१५) अन्या।

वह्यं करणम्। ३। १। १०२।

वहन्त्यनेनेति वह्यं शकटम्। करणाङ्किम्। वाह्यम् वोढव्यम्।

अर्य्यः स्वामिवैश्ययोः। ३। १। १०३।

ऋ गतौ अस्माद्यत्। ण्यतोऽपवादः। अर्य्यः स्वामी वैश्यो वा। अनयोः किम् आर्य्यो ब्राह्मणः प्राप्तव्य इत्यर्थः।

उपसर्य्या काल्या प्रजने। ३। १। १०४।

गर्भग्रहणे प्राप्तकाला (१६) चेदित्यर्थः। उपसर्य्या गौः गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः। प्रजने काल्येति किम् उपसार्य्या काशी प्राप्तव्येत्यर्थः।

अजर्य्यं सङ्गतम्। ३। १। १०५।

नञ्पूर्व्वाज्जीर्य्यतेः कर्त्तरि यत् सङ्गतञ्चेद्विशेष्यम्। न जीर्य्य-

(१४) शतशब्दोऽनियतपरः कन्याया वरणे वरयितॄणां नियमो नास्तीत्यप्रतिबन्ध इत्यर्थः। इह वृञ् संभक्तावित्यस्यैव ग्रहणं तत्रैवानिरोधरूपार्थस्य सम्भवात्। तत्त्व०।

(१५) अनिरोधे इत्यनुक्तौ वृञो वरणे इत्यस्यापि स्यादित्याशयेनाह वृत्येति।

(१६) कालःप्राप्तोऽस्या इति काल्या समयस्तदस्य प्राप्तमिति (६४८पृ०) इत्यधिकारे कालाद्यदिति (७६४८पृ०) यता सिद्धमित्याशयेन काल्यापदं व्याचष्टे प्राप्तकालेति।

तीत्यजर्य्यम् (१७)। "तेन सङ्गतमार्य्येण रामाजर्य्यं कुरु द्रुतमिति" भट्टिः। "मृगैरजर्य्यं जरसोपदिष्टमदेहबन्धाय पुनर्ब्बबन्ध"। इत्यत्र तु सङ्गतमिति विशेष्यमध्याहार्य्यम्। सङ्गतङ्किम्,। अजरिता कम्बलः। भावे तु सङ्गतकर्त्तृकेऽपि ण्यदेव। अजार्य्यं सङ्गतेन

## वदः सुपि क्यप् च। ३।१।१०६।

उत्तरसूत्रादिह भावइत्याकृष्यते। वदेर्भावे क्यप्स्यात्चाद्यत् अनुपसर्ग्गे (१८) सुप्युपपदे। ब्रह्मोद्यम् ब्रह्मवद्यम्। ब्रह्म-वेदः तस्य वदनमित्यर्थः। कर्म्मणि प्रत्ययावित्येके। उपसर्ग्गे तु ण्यदेव। अनुवाद्यम्। अपवाद्यम्।

## भुवो भावे। ३।१।१०७।

क्यप्स्यात्। ब्रह्मणो भावो (१९) ब्रह्मभूयम्। सुपीत्येव। भव्यम्। अनुपसर्ग्गइत्येव। प्रभव्यम्।

## हनस्त च। ३।१।१०८।

(१७) अजर्य्यपदस्य न सङ्गतार्थता किन्तु सङ्गतविशेषणत्वे एव प्रत्ययस्तेन भट्टिप्रयोगे अजर्य्यं सङ्गतमित्युभयोपादानं सङ्गच्छते पर्य्यायत्वे एकस्य वैयर्थ्यापत्तिरिति बोध्यम्।

(१८) गदमदचरयमश्चानुपसर्गे (३।१।१००) इत्यतोऽनुपसर्गे इत्यनुवृत्तं सुपो-विशेषणम्।

(१९) भावश्चेह न धात्वर्थः किन्तु त्वतलादिवाच्यः जात्याद्यपरपर्य्यायोऽट-साधारणधर्म्म इत्याशयेनाह ब्रह्मणो भाव इति।

अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप्तकारश्चान्तादेशः। ब्रह्मणो हननम् (२०) ब्रह्महत्या। स्त्रीत्वं लोकात्।

## एतिस्तुशास्वृदृजुषः क्यप्। ३।१।१०९।

एभ्यः क्यप् स्यात्।

## ह्रस्वस्य पिति कृति तुक्। ६।१।७१।

इत्यः। स्तुत्यः। शास इदङ्हलोः (७१२६पृ०)। शिष्यः। इङिति इञो ग्रहणं न इङः। इत्यः। इङस्तु वार्यो ऋत्विजः। आदृत्यः। जुष्यः। पुनः क्यबुक्तिः परस्यापि ण्यतो (२१) बाधनार्था। अवश्यस्तुत्यः। शंसिदुहिगुहिभ्यो वेति काशिका। शस्यम्-शंस्यम्। दुह्यम्-दोह्यम्। गुह्यम्-गोह्यम्। प्रशस्यस्य श्रः (७०२पृ०) ईडवन्दवृशंसुदुहां ण्यत इति (७५५०पृ०) सूत्रद्वयबलाच्छंसेः सिद्धम्। इतरयोस्तु मूलं मृग्यम्। आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम् *। अञ्जू व्यक्तिम्रक्षणादिषु बाहुलकात्करणे क्यप्। अनिदितामिति (१७८पृ०) नलोपः। आज्यम्।

## ऋदुपधाच्चाक्लृपिचृतेः। ३।१।११०।

वृत-वृत्यम्। वृध-वृध्यम्। क्लृपिचृत्योस्तु कल्प्यम् चर्त्यम्।

(२०) भुवोभावे (७३०४पृ०) इततोनुवृत्तं भावपदं धात्वर्थपरमित्याशयेनाह ब्रह्मणो हननमिति।

(२१) उभयप्राप्तौ प्रतिषेधे परमिति परत्वात् ण्यदेव स्यात्तन्मा भूदिति क्यबुक्तिरिति भावः।

तपकरणाङ्किम् कृत-कीर्त्यम्। अनित्यण्यन्ताश्चुरादय इति णिजभावे ण्यत्। णिजन्तात्तु यदेव।

**ई च खनः। ३। १। १११।**

चात् क्यप्। आद्गुणः (४२७०)। खेयम्। इ चेति ह्रस्वः सुपठः।

**भृञोऽसंज्ञायाम्। ३। १। ११२।**

भृत्याः कर्म्मकराः भर्त्तव्या इत्यर्थः। क्रियाशब्दोऽयम्न तु संज्ञा। समश्च बहुलम् *। संभृत्याः-संभार्य्याः। असंज्ञायामेव विकल्पार्थमिदं वार्त्तिकम्। असंज्ञायां किम्। भार्य्या नाम क्षत्रियाः। अथ कथं "भार्य्या वधूरिति" इह हि संज्ञायां समजेति (७४५०४०) क्यपा भाव्यम् संज्ञापर्य्युदासस्तु पुंसि चरितार्थः (२२) सत्यम् बिभर्त्तेः भृ इति दीर्घान्तात् क्याद्व्वा ण्यत् क्यप्तु भरतेरेव तदनुबन्धग्रहणे (२३) इति परिभाषया।

**मृजेर्व्विभाषा (२४)। ३। १। ११३।**

मृजेः क्यब्वा स्यात्। पक्षे ण्यत्। मृज्यः।

**चजोः कु घिण्ण्यतोः। ७। ३। ५२।**

(२२) असंज्ञायामित्यसंज्ञाग्रहणसामर्थ्यात् भार्य्येत्यत्र सूत्रान्तरेणापि न क्यबित्याशङ्क्याह पुंसीति भार्य्या नाम क्षत्रिया इत्यर्थः।

(२३) टुभृञ इत्यनेकानुबन्धत्वात् विभर्त्तेः क्यपोऽप्रसङ्ग इति भावः।

(२४) ऋदुपधत्वात् नित्ये प्राप्ते विभाषेयम्।

चस्य जस्य च (२५) कुत्वं स्यात् घिति ण्यति च परे। निष्ठायामनिट इति वक्तव्यम् *। तेनेह न। गर्ज्जम्। मृजेर्वृद्धिः। मार्ग्यः।

## न्यङ्क्वादीनाञ्च (७६)। ७। ३। ५३।

कुत्वं स्यात्। न्यङ्कुः। नावञ्चेः (७१८२पृ०) इत्युप्रत्ययः।

## राजसूयसूर्य्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्या। ३। १। ११४।

एते सप्त क्यबन्ता निपात्यन्ते। राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः। यद्वा लतात्मकः सोमो राजा (२७) स सूयते कण्ड्यतेऽत्रेति अधिकरणे क्यप् निपातनाद्दीर्घः राजसूयम्। अर्द्धर्चादिः (१६८२पृ०)। सरत्याकाशे सूर्य्यः। कर्त्तरि क्यब्निपातनादुत्त्वम्। यद्वा षू प्रेरणे तुदादिः सुवति कर्म्मणि लोकं प्रेरयति क्यपो रुट्। मृषोपपदाद्वदेः कर्म्मणि नित्यं क्यप् (२८)। मृषोद्यम्। विशेष्यनिघ्नोऽयम्। "उक्त्वाय

(२५) चजोः घिण्ण्यतोर्न यथासंख्यमपदृष्टं तेन रक्तं रागादिति (५२४पृ०) निर्देशादित्याशयेन व्याचष्टे चस्य जस्य चेति।

(२६) न्यङ्कु मद्गु भृगु दूरेपाक फलेपाक क्षणेपाक दूरेपाका फलेपाका दूरेपाकु फलेपाकु तक्र वक्र व्यतिषङ्ग अनुषङ्ग अवसर्ग उपसर्ग श्वपाक मांसपाक मूलपाक कपोतपाक उलूकपाक (संज्ञायां) मेघनिदाघावदाघार्घाः न्यग्रोध (वीरुत्) न्यङ्क्वादिः।

(२७) राजानं क्रीणन्तीत्यादौ राजशब्दस्य सोमार्थत्वदर्शनादित्यर्थः।

(२८) वदः सुपि क्यप् चेति (७१०४पृ०)पाक्षिको यत्प्रत्ययो नेति बोध्यम्।

सौन्दर्य्यगुणा म्रषोद्याः"। रोचते रुच्यः। गुपेरादेः कुत्वञ्च संज्ञायाम्। सुवर्णरजतभिन्नन्धनं कुप्यम्। गोप्यमन्यत्। कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः। कर्म्मकर्त्तरि। शुद्धे तु कर्म्मणि कृष्टपाक्याः। न व्यथतेऽव्यथ्यः।

**भिद्योद्ध्यौ नदे। ३। १। ११५।**

भिदेरुज्झेश्च क्यप्। उज्झेर्द्धत्वञ्च। भिनत्ति कूलम्भिद्यः। उज्झत्युदकमुद्ध्यः। नदे किम् भेत्ता। उज्झिता।

**पुष्यसिध्यौ नक्षत्रे। ३। १। ११६।**

अधिकरणे क्यप् निपात्यते। पुष्यन्त्यस्मिन्नर्थाः पुष्यः। सिध्यन्त्यस्मिन् सिध्यः।

**विपूयविनीयजित्या मुञ्जकल्कहलिषु। ३। १। ११७।**

पूङ्नीजिभ्यः क्यप्। विपूयो मुञ्जः रज्ज्वादिकरणाय शोधयितव्य इत्यर्थः। विनीयः कल्कः पिष्टऔषधविशेष इत्यर्थः। पापमिति वा। जित्यो हलिः बलेन क्रष्टव्य इत्यर्थः। कृष्टसमीकरणार्थं स्थूलकाष्ठम्। अन्यत्तु विपव्यम्। विनेयम्। जेयम्।

**प्रत्यपिभ्यां ग्रहेः। ३। १। ११८।**

छन्दसीति वक्तव्यम् *। प्रतिगृह्यम्। अपिगृह्यम्। लोके तु प्रतिग्राह्यम्। अपिग्राह्यम्।

## पदास्वैरिबाह्यापक्ष्येषु च । ३ । १ । ११९ ।

अवगृह्यम् (२९)। प्रगृह्यम्पदम् (३०) अस्वैरी परतन्त्रः । गृह्यकाः शुकाः (३१) पञ्जरादिबन्धनेन परतन्त्रीकृता इत्यर्थः । बाह्यायां ग्रामगृह्या सेना ग्रामबहिर्भूतेत्यर्थः । स्त्रीलिङ्गनिर्द्देशात्पुन्नपुंसकयोर्न्न । पक्षे भवः पक्ष्यः दिगादित्वाद्यत् (५।१९१०)। आर्य्यैर्गृह्यते आर्य्यगृह्यः तत्पक्षाश्रित इत्यर्थः ।

## विभाषा कृवृषोः । ३।१।१२० ।

क्यबन्यतरस्याम्, क्यप्स्यात् । कृत्यम् । वृष्यम् । पक्षे

## ऋहलोर्ण्यत् । ३ । १ । १२४ ।

ऋवर्णान्ता(३२)द्धलन्ताच्च धातोर्ण्यत्स्यात् । कार्य्यम् । वर्ष्यम् ।

## युग्यञ्च पत्रे । ३ । १ । १२१ ।

पत्रं वाहनम् । युग्यो गौः । अत्र क्यप् कुत्वञ्च निपात्यते ।

---

(२९) अवगृह्यमिति अवग्रहोविच्छेदः अवान्तरसत्तां सूचयितुं पदपाठकाले किञ्चिदवसानमित्यर्थः ।

(३०) प्रगृह्यमिति प्रकृतिभावाद्युक्ताद्यभावाय परसन्निकर्षाभावः प्रग्रहः यस्य पदस्य सा संज्ञा विहिता तत्प्रगृह्यम् द्विवचनस्य पदावयवत्वेन तस्यैव प्रगृह्यसंज्ञावत्त्वौचित्येऽपि अवयवधर्म्मस्य समुदाये आरोपात् प्रगृह्यत्वमिति बोध्यम् ।

(३१) "गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते" इत्यमरोक्तेः पक्षिमृगयोरेव निपातनम् ।

(३२) ऋहलोरिति पञ्चम्यर्थे षष्ठी हल्साहचर्य्यात् ऋधातोर्न ग्रहणमपि तु ऋवर्णान्तस्येत्याशयेनाह ऋवर्णान्तादिति ।

अमावस्यदन्यतरस्याम्। ३। १। १२२।

अमोपपदाद्वसेरधिकरणे ण्यत्। वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते। अमा सह वसतोऽस्याञ्चन्द्रार्कौ अमावास्या अमावस्या। ऋहलोर्ण्यत्(७२०८पृ०)। चजोरिति(७२०६पृ०) कुत्वम्। पाक्यम्। पाणौ सृजेर्ण्यद्वाच्यः *। ऋदुपधलक्षणस्य क्यपोऽपवादः। पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः। समवपूर्व्वाच्च *। समवसर्ग्या।

न क्वादेः। ७। ३। ५९।

क्वादेर्धातोः चजोः कुत्वन्न। गर्ज्यम्। वार्त्तिककारस्तु चजोरिति सूत्रे निष्ठायामनिट इति (७२०७पृ०) पूरयित्वा न क्वादेरित्यादि प्रत्याचख्यौ तेन अजितर्ज्जिप्रभृतीनान्न कुत्वन्निष्ठायां सेट्त्वात्। ग्रुचुग्लुचुप्रभृतीनान्तु क्वादित्वेऽपि कुत्वं स्यादेव (२३)। सूत्रमते तु यद्यपि विपरीतम्प्राप्तं तथापि यथोत्तरं मुनीनाम्प्रामाण्यम् (२४)।

अजिव्रज्योश्च। ७। ३। ६०।

न कुत्वम्। समाजः। परिव्राजः।

भुजन्युब्जौ(२५) पाण्युपतापयोः। ७। ३। ६१।

(२३) कुत्वं स्यादेवेति उदितोवेति (७४६३पृ०) क्त्वायामिड्विकल्पेन यस्य विभाषेति (७२४८पृ०) निष्ठायामनिट्कत्वादिति भावः।

(२४) तथाच वार्त्तिकानुरोधेनानिट्कत्वात् कुत्वं प्रयोक्तव्यमिति भावः।

(२५) भुजेर्घञि कुत्वगुणयोरभावएवं निपात्यते उब्ज आर्जवे इत्यस्मात् घञि कुत्वाभावः दकारस्य बकारादेशश्च निपात्यते।

एतयोरेतौ निपात्यौ। भुज्यतेऽनेनेति भुजः पाणिः। हल-श्चेति (३४५६ पृ०) घञ्। न्युब्जन्त्यस्मिन्निति न्युब्जः। उपतापो रोगः। पाण्युपतापयोः किम् भोगः समुद्गः।

प्रयाजानुयाजौ यज्ञाङ्गे। ७। ३। ६२।

एतौ निपात्यौ यज्ञाङ्गे। पञ्च प्रयाजाः। त्रयोऽनुयाजाः। यज्ञाङ्गे किम्-प्रयागः। अनुयागः।

वञ्चेर्गतौ। ७। ३। ६३।

कुत्वन्न। वञ्च्यम्। गतौ किम् वङ्क्यं काष्ठम् कुटिली-कार्य्यमित्यर्थः।

ओक उचः के। ७। ३। ६४।

उचेर्गुणकुत्वे निपात्येते के परे। ओकः शकुन्तवृषलौ। इगुपधलक्षणः(३११८ पृ०)कः। घञा सिद्धे अन्तोदात्तार्थमिदम्।

ण्य आवश्यके (३६)। ७। ३। ६५।

कुत्वन्न। अवश्यपाच्यम्।

यजयाचरुचप्रवचर्चश्च। ७। ३। ६६।

ण्ये कुत्वन्न। याज्यम्। याच्यम्। रोच्यम्। प्रवाच्यम्। ग्रन्थविशेषः। ऋच-अर्च्यम्। ऋदुपधत्वेऽपि अतएव

(३६) आवश्यकार्थेऽवश्यशब्दवाचित्वे एव ण्यदिति ज्ञापितं तदर्थे गम्ये तु ओरावश्यके इति (३१२ पृ०) ण्यदिति बोध्यम्।

ज्ञापका (३७) स्यात्। त्यजेश्च। त्याज्यम्। त्यजिपूज्योश्चेति काशिका। तत्र पूजेर्ग्रहणं चिन्त्यम्भाष्यानुक्तत्वात्। ण्यत्प्रकरणे त्यजेरुपसंख्यानमिति हि भाष्यम्।

## वचोऽशब्दसंज्ञायाम्। ७। ३। ६७।

वाच्यम्। शब्दाख्यायान्तु वाक्यम्।

## प्रयोज्यनियोज्यौ शक्यार्थे। ७। ३। ६८।

प्रयोक्तुं शक्यः प्रयोज्यः नियोक्तुं शक्यो नियोज्यो भृत्यः।

## भोज्यं भक्ष्ये (३८)। ७। ३। ६९।

भोग्यमन्यत्। ण्यत्प्रकरणे लपिदभिभ्याञ्चेति (३९) वक्तव्यम्*। लाप्यम्। दभिधातुष्वपठितोऽपि वार्त्तिकबलात् स्वीकार्य्यः। दाभ्यः।

## ओरावश्यके। ३। २। १२५।

उवर्णान्ताद्धातोर्ण्यत्स्यादवश्यम्भावे द्योत्ये। लाव्यम्। पाव्यम्।

## आसुयुवपिरपिलपित्रपिचमश्च। ३। १। १२६।

(३७) ज्ञापकादिति सद्रूपत्वात् वासरूपविधिना यदेव भवतीति नाशङ्कनीयमिति भावः।

(३८) भक्ष्यमिहाभ्यवहार्य्यमात्रं विवक्षितं न तु खरविशदमभ्यवहार्य्यं तेन भोज्या यवागूरित्यपि स्यात्।

(३९) पोरदुपधादिति (७३०१९०) प्राप्तस्य यतोऽपवादः।

घुञ्-आसाव्यम्। यु मिश्रणे याव्यम्। वाप्यम्। राप्यम्। लाप्यम्। ताप्यम्। चाप्यम्।

## आनाय्योऽनित्ये। ३। १। १२७।

आङ्पूर्व्वान्नयतेर्ण्यदायादेशश्च निपात्यते। दक्षिणाग्निविशेषएवेदम् स हि गार्हपत्यादानीयतेऽनित्यश्च सततमप्रज्वलनात्। आनेयोऽन्यः घटादिः वैश्यकुलादे (४०) रानीतो दक्षिणाग्निश्च।

## प्रणाय्योऽसम्मतौ। ३। १। १२८।

सम्मतिः प्रीतिविषयीभवनं कर्म्मव्यापारः (४१)। तथा भोगेष्वादरोऽपि सम्मतिः। प्रणाय्यश्चौरः प्रीत्यनर्ह इत्यर्थः। प्रणाय्योऽन्तेवासी विरक्त इत्यर्थः। प्रणेयोऽन्यः।

## पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्न्निवाससामिधेनीषु। ३। १। १२९।

मीयतेऽनेन पाय्यम्मानम्। ण्यत् धात्वादेः पत्वञ्च। आतो युगिति युक्(७२७०७०)सम्यङ्नीयते होमार्थमग्निम्प्रतीति सान्नाय्यं हविर्व्विशेषः (४२)। ण्यदायादेशः समो दीर्घश्च निपात्यते।

---

(४०) दक्षिणाग्नेर्योनिर्विकल्प्यते वैश्यकुलात्, वित्ततो, भ्राष्ट्राद्, गार्हपत्याद्वेत्यादिपदग्राह्यम्।

(४१) कर्म्मव्यापार इति लोकानां प्रीतिविषयीभवनरूपस्य कर्मणोव्यापारस्य चौरादावसत्त्वादसम्मतिः। तन्त्रेणार्थद्वयमित्याह तथेति।

(४२) हविर्व्विशेषइति "ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामिति" विहितदधिपयोविशेषरूपः।

निषीयतेऽस्मिन्धान्यादिकं निकाय्यो निवासः । अधिकरणे ण्यत् आयो धात्वादेः कुत्वञ्च निपात्यते । धीयतेऽनया समिदिति धाय्या ऋक् ।

## क्रतौ कुण्डपाय्यसञ्चाय्यौ । ३ । १ । १३० ।

कुण्डेन पीयतेऽस्मिन् सोमः कुण्डपाय्यः क्रतुः । सञ्चीयतेऽसौ सञ्चाय्यः ।

## अग्नौ परिचाय्योपचाय्यसमूह्याः । ३ । १ । १३१ ।

अग्निधारणार्थे स्थलविशेषे (४३) एते साधवः । अन्यत्र तु परिचेयम् । उपचेयम् । संवाह्यम् ।

## चित्याग्निचित्ये च । ३ । १ । १३२ ।

चीयतेऽसौ चित्योग्निः । अग्नेश्चयनमग्निचित्या । प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च (उ२८२५०) । त्वया गन्तव्यम् । गमनीयम् । गम्यम् । इह लोटा बाधा मा भूदिति पुनः कृत्यविधिः । स्त्र्यधिकारादूर्द्ध्वं(४४)वासरूपविधिः क्वचिन्नेति ज्ञापयति तेन (४५) क्तल्युट्तुमुन्खलर्थेषु नेति सिद्धम् । अर्हे

(४३) अग्नाविति न ज्वलनपरं किन्तु अग्निधारणार्थमिष्टकाविनिर्म्मितं स्थलमेवात्राग्निशब्दलक्ष्यमित्याह स्थलेति ।

(४४) वासरूपविधिना कृत्या अपि भविष्यन्तीत्यतआह स्त्र्यधिकारादिति ।

(४५) तेनेति हसितं हसनमित्युभयत्रापि न घञिति बोध्यम् ।

कृत्यल्टचश्च (७२८३ पृ०)। स्तोतुमर्हः स्तुत्यः स्तुतिकर्म्म। स्तोता स्तुतिकर्त्ता। लिङा बाधा मा भूदिति कृत्यल्टचोर्विधिः।

**भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा। ३। ४। ६८।**

एते कृत्यप्रत्ययान्ताः कर्त्तरि वा निपात्यन्ते। पक्षे तयोरेवेति (७२९८ पृ०) सकर्म्मकात्कर्म्मणि, अकर्म्मकात्तु भावे ज्ञेयाः। भवतीति भव्यः। भव्यमनेन वा। गायतीति गेयः साम्नामयम्। गेयं सामानेन वा इत्यादि। शकि लिङ् च (७२९२ पृ०)। चात्कृत्याः। वोढुं शक्यो वोढव्यः। वहनीयो वाह्यः। लिङा बाधा मा भूदिति कृत्योक्तिः। लाघवादनेनैव ज्ञापनसंभवे प्रैषादिसूत्रे (७२९२ पृ०) कृत्याश्चेति सुत्यजम् अर्हे (७२९२ पृ०) कृत्यल्टचोर्ग्रहणञ्च।

इति कृत्य कृत्यप्रक्रिया।

ण्वुल्तृचौ। ३। १। १३३।

धातोरेतौ स्तः। कर्त्तरि कृदिति (७२६८पृ०) कर्त्त्रर्थे। युवो-रनाकौ (५३४पृ०)। कारकः कर्त्ता। वोढुमर्हो वोढा। कारिका कर्त्री। गाङ्कुटेति (७११६पृ०) ङित्त्वम्। कुटिता। अञ्णिदित्युक्तेर्न ङित्त्वम्। कोटकः। विजइट् (७१५०पृ०)। विजिता। हनस्तोऽचिण्णलोः (७१८६पृ०)। घातकः। आतो-युक् (७२७०पृ०)। दायकः। नोदात्तोपदेशस्येति (७२७२पृ०) न वृद्धिः। शमकः। दमकः। अनिटस्तु। नियामकः। जनि-वध्योश्च(७१२६पृ०)। जनकः। वध हिंसायाम्। वधकः। रधि-जभोरचि (७५७पृ०)। रन्धकः। जम्भकः। नेट्यलिटि रधेः (७१४०पृ०)। रधिता-रद्धा। मस्जिनशोरिति (७१४०पृ०) नुम्। मङ्क्ता। नंष्टा-नशिता। रभेरशब्लिटोः (७१८१पृ०)। रम्भकः। रब्धा। लभेश्च (७१८२पृ०)। लम्भकः। लब्धा। तीषसह (७७४पृ०)। एषिता-एष्टा। सहिता-सोढा। दरिद्रातेरालोपः (७१२५पृ०वा०)। दरिद्रिता। ण्वुलि न। दरिद्रायकः। कृत्यल्युट बहुलम् (७३००पृ०) सूत्रमस्तु यत्र विहितास्ततोऽन्यत्रापि स्युरि-त्यर्थात् एवञ्च बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभि-चारार्थम्। पादाभ्यां ह्रियते। पादहारकः। कर्मणि ण्वुल्। क्रमेः कर्त्तर्यात्मनेपदविषयात् कृतइण्निषेधो वाच्यः*। प्रक्रन्ता। कर्त्तरीति किम् प्रक्रमितव्यम्। आत्मनेपदेति किम् संक्रमिता। अनन्यभावो (१) विषयशब्दः। तेनानुपसर्गा-

(१) तदन्याविषयत्वे सति तद्विषयत्वमनन्यभावस्तथा च विकल्पार्हस्य क्रमेः परस्मैपदात्मनेपदोभयप्राप्तिविषयत्वान्न निषेध इति भावः।

द्वेति (७२५१ सू०) विकल्पार्हस्य न निषेधः । क्रमिता । तदर्हत्वमेव तद्विषयत्वम् तेन क्रान्त्वेत्यपीति केचित् । गमेरिडित्यत्र (७१०३ सू०) परस्मैपदग्रहणात्तङानयोरभावं लक्षयति । सञ्जिगमिषिता । एवं न वृद्भ्यश्चतुर्भ्यः (७७८ सू०) । विवृत्सिता । यङन्तात् ण्वुल् अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । पापचकः । यङ्लुगन्तात्तु । पापाचकः ।

## नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । ३ । १ । १३४ ।

नन्द्यादे (२) र्ल्युर्ग्रह्यादे-(३)-र्णिनिः पचादे-(४)-रच् स्यात् । नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । मधुसूदनः । विशेषेण भीषयतइति विभीषणः । लवणः । नन्द्यादिगणे निपातनाण्णत्वम् । ग्राही । स्थायी । मन्त्री । विशयी ।

---

(२) नन्दनः वाशनः मदनः दूषणः साधनः वर्द्धनः शोभनः रोचनः (सहितपिदमः संज्ञायाम् ग०) । सहनः तपनः दमनः । जल्पनः रमणः दर्पणः संक्रन्दनः संकर्षणः संहर्षणः जनार्दनः यवनः मधुसूदनः विभीषणः लवणः चित्तविनाशनः कुलदमनः शत्रुदमनः इति नन्द्यादिः ।

(३) ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्द्दी (रक्षश्रुवपशां नौ ग० ) निरक्षी निश्रावी निवापी निशायी ) याचृव्याहृव्रजवदवसां प्रतिषिद्धानाम् ग०) अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी ( अचामचित्तकर्त्तृकाणाम् ग०) अकारी अहारी अविनायी । विशायी विषायी (विशयी विषयी देशे ग०) (अभिभावी भूते ग०) अपराधी उपरोधी परिभवी परिभावी इति ग्रहादिः ।

(४) पच वच वप वद चल पत नदट् भषट् प्लवट् चरट् गरट् तरट् चोरट् गाहट् सूरट् देवट् दोषट् रज मद क्षप सेव मेष कोष मेध नर्त्त व्रण दर्श सर्प दम्भ दर्प जारभरा श्वपच । पचादिराकृतिगणः

वृद्ध्यभावो निपातनात्। विषयी। इह षत्वमपि(५)। परिभावी। परिभवी। पाक्षिको वृद्ध्यभावो निपात्यते। पचादिराकृतिगणः शिवशमरिष्टस्य करे(७५०सू०) कर्म्मणि घटोऽठच्(६६६सू०)इति सूत्रयोः करोतेर्घटश्च अच्प्रयोगात् अच् प्रत्यये परे(७२११सू०)यङोलुग्विधानाच्च। केषाञ्चित्पाठस्त्वनुबन्धासञ्जनार्थः केषाञ्चित्प्रपञ्चार्थः केषाञ्चिद्बाधकबाधनार्थः। पचतीति पचः। नदट् चोरट् देवट् इत्यादयष्टितः। नदी। चोरी। देवी। दीव्यतेरिगुपधेति(७२१९सू०)कः प्राप्तः। जारभरा। श्वपचा। अनयोः कर्म्मण्यण्(७२२३सू०)प्राप्तः। न्यङ्क्वादिषु(७३०७सू०) पाठात् श्वपाको (६) ऽपि। यङोऽचि चेति (७२११सू०) लुक्। न धातुलोप इति(७२१८सू०) गुणवृद्धिनिषेधः। चेक्रियः। नेन्यः। लोलुवः। पोपुवः। मरीमृजः। चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यम् *। आगमस्य दीर्घत्वसामर्थ्यादभ्यासह्रस्वो हलादिशेषश्च न (७)। चराचरः। चलाचलः। पतापतः। वदावदः। हन्तेर्घत्वञ्च *। घत्वमभ्यासस्य उत्तरस्य त्वभ्यासाच्चेति (७११०सू०) कुत्वम्। घनाघनः। पाटेर्णिलुक् (८) चोक् च दीर्घश्चाभ्यासस्य *। पाटूपटः।

(५) निपातनादित्यनुषज्यते। परिनिविभ्य इति (७३८सू०) सितसयेति ण्यन्तसिनोतेर्ग्रहणात् ण्यन्तसिनोतेर्निपातनं विना षत्वं न भवतीत्याशयेन निपातन दित्युक्तम्।

(६) पक्षे कर्म्मण्यणि न्यङ्क्वादित्वात् (७३०७सू०) चोः कुत्वे सिद्धम्।

(७) सति तु हलादिशेषे आगमस्यादेशस्य वा विशेषो नास्तीति आ चाभ्यासस्येत्येव ब्रूयादिति भावः।

(८) णेरनिटीति(७६सू०)णिलोपे तु प्रत्ययलक्षणप्रवृत्त्या उपधावृद्धिप्रसङ्गादाह णिलुगिति इहापि पूर्ववत् ह्रस्वहलादिशेषयोरभाव इति बोध्यम्।

पक्षे। चरः। चलः। पतः। वदः। हनः। पाटः। रात्रेः कृतीति (४७१पृ०) वा मुम्। रात्रिञ्चरो रात्रिचरः।

## इगुपधज्ञाप्रीकिरः कः। ३। १। १३५।

एभ्यः कः स्यात्। क्षिपः। लिखः। बुधः। कृशः। ज्ञः। प्रीणातीति प्रियः। किरतीति किरः। वासरूपविधिना ण्वुल्तृचावपि। क्षेपकः। क्षेप्ता।

## आतश्चोपसर्गे। ३। १। १३६।

कः स्यात्। श्याद्व्यधेति (७२२०पृ०) णस्यापवादः। सुग्लः। प्रज्ञः।

## पाघ्राध्माधेट्दृशः शः। ३। १। १३७।

पिबतीति पिबः। जिघ्रः। धमः। धयः। धया कन्या। धेटष्टित्त्वात् स्तनन्धयीति वच्छीव ङीप् प्राप्तः खशोऽन्यत्र नेष्यत इति हरदत्तः। पश्यतीति पश्यः। घ्रः संज्ञायाम्, व्याघ्रादिभिरिति † निर्देशात्।

## अनुपसर्गाल्लिम्पविन्द(६)धारिपारिवेद्युदेजि-चेतिसातिसाहिभ्यश्च। ३। १। १३८।

शः स्यात्। लिम्पः। विन्दः। धारयः। पारयः। वेदयः।

† उपमितं व्याघ्रादिभिः सामान्याप्रयोगेइति(२५६पृ०)सूत्रे इति शेषः।

(६) लिम्पविन्देति तुदाद्यन्तर्गणमुचादित्वात् शे परे भाविना नुमा सनुमकौ निर्दिष्टौ तेन सत्ताद्यर्थकानां नेति बोध्यम्।

उद्देजयः। चेतयः। साति: सुखार्थ: सौत्रो हेतुमण्ण्यन्तः। सातयः। वासरूपन्यायेन क्विपि सात् परमात्मा। सात्वन्तो भक्ताः। षह मर्षणे चुरादिः। हेतुमण्ण्यन्तो वा। साहयः। अनुपसर्गात्किम् प्रलिपः। नौ लिम्पेर्वाच्यः *। निलिम्पा देवाः। गवादिषु विन्देः संज्ञायाम् *। गोविन्दः। अरविन्दः (१०)।

## ददातिदधात्योर्विभाषा। ३। १। १३९।

शः स्यात्। ददः। दधः। पक्षे वक्ष्यमाणो (११) णः। अनुपसर्गादित्येव। प्रदः। प्रधः।

## ज्वलितिकसन्तेभ्यो णः। ३। १। १४०।

इतिशब्द आद्यर्थः। ज्वलादिभ्यः कसन्तेभ्यो (१२) णः स्याद्वा। पक्षेऽच्। ज्वालः-ज्वलः। चालः-चलः। अनुपसर्गादित्येव। उज्ज्वलः। तनोतेरुपसंख्यानम् *। इहानुपसर्गादिति विभाषेति च न सम्बध्यते। अवतनोतीत्यवतानः।

## श्याद्व्यधास्रुसंस्रुतीणवसावहृलिहश्लिषश्वसश्च। ३। १। १४१।

श्यैङ्प्रभृतिभ्यो नित्यं णः स्यात्। श्यैङोऽवस्यतेश्चादन्तत्वात्

(१०) चक्रस्य नाभिनेम्योरन्तरालस्थकाष्ठानि अरास्तत्वादश्यात् दलान्यपि अराइत्युच्यन्ते तानि विन्दति इति कर्मण्यणो बाधनायेदम्।

(११) श्याद्व्यधेति सूत्रे विधास्यमान इत्यर्थः।

(१२) ज्वल दीप्तावित्यादयः कस गतावित्यन्ता भ्वादौ पठिताः एतत्पुस्तके ८८ ८९ ९० पृष्ठेषु द्रष्टव्याः।

षिद्धे पृथग्ग्रहणमुपसर्गे कं बाधितुम् (१३)। अवश्यायः। प्रतिश्यायः। आत्—दायः। धायः। व्याधः। स्रु गतौ आङ्पूर्व्वः सम्पूर्व्वश्च आस्रावः। संस्रावः। अत्यायः। अवसायः। अवहारः। लेहः। श्लेषः। श्वासः।

दुन्योरनुपसर्गे।३।१।१४२।

णः स्यात्। दुनोतीति दावः। नीसाहचर्य्यात्षानुबन्धकात् दुनोतेरेव णः। द्रवतेस्तु पचाद्यच् (७११७पृ०)। द्रवः। नयतीति नायः। उपसर्गे तु। प्रद्रवः। प्रणयः।

विभाषा ग्रहः।३।१।१४३।

णो वा। पक्षेऽच्। व्यवस्थितविभाषेयम् तेन जलचरे ग्राहः। ज्योतिषि ग्रहः। भवतेश्चेति काशिका। भवो देवः संसारश्च। भावाः पदार्थाः। भाष्यमते तु प्राप्तग्रथीश्वरादिण्यन्तादच्। भावः।

गेहे कः।३।१।१४४।

गेहे कर्त्तरि (१४) ग्रहेः कः स्यात्। गृह्णाति धान्यादिकमिति गृहम् तात्स्थ्याद्गृहाः (१५) दाराः।

(१३) अन्यथा आतश्चोपसर्गे इति (७३१६पृ०) विशेषविहितः कः सामान्यविहितस्य णस्य बाधकः स्यादिति भावः।

(१४) गेहे इति प्रत्ययार्थस्य कर्त्तुर्विशेषणं नोपपदं गृहपतिना संयुक्ते ञ्य (६२१पृ०) इति निर्द्देशादित्याशयेनाह गेहे कर्त्तरीति।

(१५) मञ्चाः क्रोशन्तीत्यादौ मञ्चस्थपुरुष इव गृहस्थदारेषु गृहशब्द औपचारिक इत्यर्थः।

### शिल्पिनि ष्वुन्। ३। १। १४५।

क्रियाकौशलं शिल्पन्तद्वत्कर्त्तरि (१६) ष्वुन् स्यात्। नृतिखनिरञ्जिभ्यएव *। नर्त्तकः नर्त्तकी। खनकः खनकी। असयकेऽने च रञ्जेर्नलोपो वाच्यः *। रजकः रजकी। भाष्यमते तु नृतिखनिभ्यामेव ष्वुन्। रञ्जेस्तु शिल्पिसंज्ञयो रिति(७२८७४०)क्वुन्। टाप्। रजिका। पुंयोगे तु। रजकी।

### गस्थकन्। ३। १। १४६।

गायते (१७) स्थकन् स्यात् शिल्पिनि कर्त्तरि। गाथकाः।

### ण्युट् च। ३। १। १४७।

गायनः। टित्त्वाद्गायनी।

### हश्च व्रीहिकालयोः। ३। १। १४८।

हाको हाङश्च ण्युट् स्यात् व्रीहौ काले च कर्त्तरि। जहात्युदकमिति (१८) हायनो व्रीहिः। जहाति भावानिति हायनो वर्षम्। जिहीते प्राप्नोतीति वा।

### प्रुसृल्वः (१९) समभिहारे वुन्। ३। १। १४९।

(१६) अत्रापि शिल्पिनीति प्रत्ययार्थस्य कर्त्तुर्विशेषणं न तूपपदमित्याशयेनाह तद्वत्कर्त्तरीति।

(१७) थकन्प्रत्ययो हि गायत्यर्थविषयमेव शिल्पिनं बोधयितुं समर्थ इत्याशयेनाह गायतेरिति।

(१८) उदकादधिकवर्द्धनादुदकं जहाति परित्यज्य वर्द्धते इत्यर्थः।

(१९) प्रुसृल्व इति पञ्चमीस्थाने व्यत्ययेन जस्।

समभिहारग्रहणेन साधुकारित्वं लभ्यते (२०)। प्रवकः। सरकः। लवकः।

## आशिषि च। ३। १। १५०।

आशीर्विषयार्थवृत्तेर्धातोर्वुन् स्यात् कर्त्तरि (२१)। जीवतात् जीवकः। नन्दतात् नन्दकः। आशीः प्रयोक्तृधर्म्मः आशासितुः पित्रादेरियमुक्तिः।

## कर्म्मण्यण्। ३। २। १।

कर्म्मण्युपपदे धातोरण् प्रत्ययः स्यात्। उपपदसमासः (२२)। कुम्भङ्करोतीति कुम्भकारः। आदित्यं पश्यतीत्यादावनभिधानान्न। शीलिकामिभच्याचरिभ्यो णः *। अणोऽपवादार्थं वार्त्तिकम्। मांसशीला। मांसकामा। मांसभक्षा। कल्याणाचारा। ईक्षिक्षमिभ्याञ्च *। सुखप्रतीक्षा। बहुक्षमा। कथं तर्हि गङ्गाधरभूधरादयः, कर्म्मणः शेषत्वविवक्षायाम्भविष्यन्ति।

## ग्लावामश्च। ३। २। २।

(२०) लभ्यतइति भूयः सहचरादिति शेषः यो हि भूयो यां क्रियां करोति स तत्र कौशलं लभते इति तस्य साधुकारित्वं गम्यते इत्यर्थः। साधुकारित्वोक्त्या बहुशो दुष्टकरणे न वुनिति बोध्यम्।

(२१) अप्राप्तप्रार्थनमाशीः सा च प्रयोक्तृधर्म्मो न प्रत्ययार्थः कर्त्तरि कृदिति (३२९८पृ॰) कर्त्रर्थाभिधानादित्याशयेनाह आशीर्विषयार्थेत्यादि।

(२२) उपपदमतिङिति (३७८पृ॰) सूत्रेणेति शेषः। तत्र गतिकारकोपपदानां कृद्भिःसमासवचनं प्राक् सुबुत्पत्तेरित्युक्तरीत्यैव समासइति बोध्यम्।

अण् स्यात्। कापवादः (२३)। स्वर्गह्वायः। तन्तुवायः। धान्यमायः।

**आतोऽनुपसर्गे कः। ३। २। ३।**

आदन्ताद्धातोरनुपसर्गात्कर्म्मण्युपपदे कः स्यात्। नाण्। आतो लोपः। गोदः। पार्ष्णित्रम्। अनुपसर्गे किम् गोसन्द्रायः। कविधौ सर्व्वत्र प्रसारणिभ्यो(२४)डः। ब्रह्म जिनाति ब्रह्मज्यः। सर्व्वत्रग्रहणात् आतश्चोपसर्गे(२५)। आह्वः। प्रह्वः।

**सुपि स्थः। ३। २। ४।**

सुपीति योगो विभज्यते। सुपि उपपदे आदन्तात् कः स्यात्। द्वाभ्यां पिबतीति द्विपः। समस्थः। विषमस्थः। ततः स्थः। सुपि तिष्ठतेः कः स्यादारम्भसामर्थ्याद्भावे। आखूनामुत्थानमाखूत्थः।

**प्रष्ठोऽग्रगामिनि *। ८। ३। ९२।**

प्र-तिष्ठतइति प्रष्ठो गौः अग्रतो गच्छतीत्यर्थः अग्रेति किम् प्रस्थः।

**अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेवर्हिर्दिव्यग्निभ्यः स्थः। ८। ३। ९७।**

---

(२३) आतोऽनुपसर्गे क इति विहितस्य कस्यापवाद इत्यर्थः।

(२४) प्रसारणशब्दः संप्रसारणपर्य्यायः। जिनातीति ज्या वयोहानावित्यस्य यहिज्येति (उ१०६पृ०) संप्रसारणात् सिद्धम्।

(२५) कप्रत्यये तु वचिस्वपीति (उ१०५पृ०) संप्रसारणे आह्वइत्यादि स्यादिति बोध्यम्।

* युवादित्वात् सुभ्रादित्वात् स्थलेऽपात्वनिर्द्देशाद्वा कुमति चेति (४८१पृ०) न णत्वम्।

स्थ इति कप्रत्ययान्तस्यानुकरणं षष्ठ्यर्थे प्रथमा एभ्यः स्थस्य सस्य षः स्यात्। द्विष्ठः। त्रिष्ठः। इत ऊर्ध्वं कर्म्मणि सुपीति द्वयमप्यनुवर्त्तते। तत्राकर्म्मकेषु सुपीत्यस्य सम्बन्धः।

## तुन्दशोकयोः परिमृजापनुदोः। ३। २। ५।

तुन्दशोकयोः कर्म्मणोरुपपदयोराभ्यां कः स्यात्। आलस्य-सुखाहरणयोरिति वक्तव्यम्*। तुन्दम्परिमार्ष्टीति तुन्द-परिमृजोऽलसः। शोकापनुदः सुखस्याहर्त्ता। अलसादन्यत्र तुन्दपरिमार्ज्ज एव। यश्च संसारासारत्वोपदेशेन शोकम-पनुदति स शोकापनोदः। कप्रकरणे मूलविभुजादिभ्य (२६) उपसंख्यानम्।* मूलानि विभुजति मूलविभुजो रथः। आकृतिगणोऽयम्। महीध्रः। कुध्रः। गिलतीति गिलः।

## प्रे दाज्ञः। ३। २। ६।

दारूपाज्जानातेश्च* प्रोपसृष्टात्कर्म्मण्युपपदे कः स्यात्। अणोऽपवादः। सर्वप्रदः। पथिप्रज्ञः। अनुपसर्ग ‡ इत्युक्तेः प्रादन्यस्मिन् सुपि न कः। गोसम्प्रदायः।

## समि ख्यः। ३। २। ७।

गोसंख्यः।

## गापोष्टक्। ३। २। ८।

(२६) मूलविभुज नखमुच काकगुह कुमुद महीध्र कुध्र गिल आकृतिगणोयम्।

‡ आतोऽनुपसर्गे इति (७२२४पृ०)। सूत्रे इति शेषः।

अनुपसृष्टाभ्यामाभ्यां टक् स्यात् कर्म्मण्युपपदे। सामगः सामगी। उपसर्गे तु सामसङ्गायः। पिबतेः सुराशीध्वोरिति वाच्यम्। * सुरापी। शीधुपी। अन्यत्र चीरपा ब्राह्मणी सुराम्पाति रच्चतीति सुरापा।

हरतेरनुद्यमनेऽच्। ३। २। ९।

अंशहरः। अनुद्यमने किम् भारहारः। शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुःषु ग्रहेरुपसंख्यानम् *। शक्तिग्रहः। लाङ्गलग्रहः। सूत्रे च धार्य्यर्थे *। सूत्रग्रहः। यस्तु सूत्रम् केवलमुपादत्ते न तु धारयति तत्राणेव। सूत्रग्राहः।

वयसि च। ३। २। १०।

उद्यमनार्थम् सूत्रम्। कवचहरः कुमारः।

आङि ताच्छील्ये। ३। २। ११।

पुष्पाण्याहरति तच्छीलः पुष्पाहरः। ताच्छील्ये किम् भाराहारः।

अर्हः। ३। २। १२।

अर्हतेरच् स्यात् कर्म्मण्युपपदे। अणोऽपवादः। पूजार्हा ब्राह्मणी।

स्तम्बकर्णयो रमिजपोः। ३। २। १३।

हस्तिसूचकयोरिति वक्तव्यम् *। स्तम्बे रमते स्तम्बेरमो

हस्ती। तस्य कृषे कृतीति(४६०पृ०)हलदन्तादिति(४५८पृ०) वा ङेरलुक्। कर्णेजपः सूचकः

## शमि धातोः संज्ञायाम्। ३। २। १४।

शम्भवः। शंवदः। पुनर्धातुग्रहणम्बाधकविषयेऽपि प्रवृत्त्यर्थम्। कृञो हेतुत्वादिषु टो मा भूत्। शङ्करा नाम परिव्राजिका तच्छीला।

## अधिकरणे शेतेः। ३। २। १५।

खे शेते खशयः। पार्श्वादि (२७) षूपसंख्यानम्"। पार्श्वाभ्यां शेते पार्श्वशयः। पृष्ठशयः। उदरेण शेते उदरशयः। उत्तानादिषु कर्त्तृषु *। उत्तानः शेते उत्तानशयः। अवमूर्द्धशयः अवनतो मूर्द्धा यस्य सः अवमूर्द्धा अधोमुखः शेत इत्यर्थः। गिरौ डश्छन्दसि"। गिरौ शेते गिरिशः। कथन्तर्हि "गिरिशमुपचचार प्रत्यहम् सा सुकेशीति" गिरिरस्यास्ति इति विग्रहे (३८१पृ०) लोमादित्वाच्छः।

## चरेष्टः। ३। २। १६।

अधिकरणे उपपदे। कुरुचरः कुरुचरी।

## भिक्षासेनादायेषु च। ३। २। १७।

भिक्षाश्चरतीति भिक्षाचरः। सेनाचरः। आदायेति ल्यबन्तम्

(२७) पार्श्व उदर पृष्ठ उत्तान अवमूर्द्ध पार्श्वादिः।

आढ्यायचरः । कथम् "प्रेक्ष्य स्थितां सहचरीमिति" पचादिषु चरडिति पाठात् ।

पुरोऽग्रतोऽग्रेषु सर्त्तेः । ३ । २ । १८ ।

पुरस्सरः । अग्रतस्सरः । अग्रमग्रेणाग्रे वा सरतीत्यग्रेसरः । सूत्रेऽग्रइत्येदन्तत्वमपि निपात्यते । कथन्तर्हि "यूथन्तदग्रसरगर्व्वितकृष्णसारमिति" बाहुलकादिति हरदत्तः ।

पूर्व्वे कर्त्तरि । ३ । २ । १९ ।

कर्त्तृवाचिनि पूर्व्वशब्दे उपपदे सर्त्तेष्टः स्यात् । पूर्वः सरतीति पूर्वसरः । कर्त्तरि किम् पूर्व्वं देशं सरतीति पूर्व्वसरः ।

कृञो हेतुताच्छील्यानुलोम्येषु । ३ । २ । २० ।

एषु द्योत्येषु करोतेष्टः स्यात् । अतः कृकमीति(७६८०) सः । यशस्करी विद्या । श्राद्धकरः । वचनकरः (२८) ।

दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिम्लिपिलिबिबलिभक्तिकर्त्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्य्यत्तद्धनुररुष्षु । ३ । २ । २१ ।

एषु कृञष्टः स्यात् । अहेत्वादावपि । दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्सः(६८८०) । भास्करः । बहुकरः ।

---

(२८) विद्या यशोहेतुः । श्राद्धमेवास्य शीलं सततं तदनुशीलनात् । आनुलोम्यमनुकूलता वशंवदतेत्यर्थः ।

बहुशब्दस्य वैपुल्यार्थे संख्यापेक्षया पृथग्ग्रहणम्। लिपिलिबिशब्दौ पर्य्यायौ। संख्या-एककरः। द्विकरः। कस्कादित्वात् (६६१०)। अहस्करः। नित्यम् समासेऽनुत्तरपदस्थस्येति (७५१०) षत्वम्। धनुष्करः। अरुष्करः। किंयत्तद्बहुषु कृञोऽज्विधानमिति * वार्त्तिकम्। किङ्करा। यत्करा। तत्करा। हेत्वादौ टश्बाधित्वा परत्वादच्। पुंयोगे ङीप् किङ्करी

## कर्म्मणि भृतौ। ३।२।२२।

कर्म्मशब्दे उपपदे करोतेष्टः स्यात् भृतौ। कर्म्मकरोभृतकः। कर्म्मकारोऽन्यः।

## न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु।३।२।२३।

एषु कृञष्टो न। हेत्वादिषु प्राप्तः प्रतिषिध्यते। शब्दकारइत्यादि।

## स्तम्बशकृतोरिन्।३।२।२४।

व्रीहिवत्सयोरिति वक्तव्यम् *। स्तम्बकरिर्व्रीहिः शकृत्करिर्वत्सः। व्रीहिवत्सयोः किम् स्तम्बकारः। शकृत्कारः।

## हरतेर्दृतिनाथयोः पशौ।३।२।२५।

दृतिनाथयोरुपपदयोर्हृञ इन् स्यात् पशौ कर्त्तरि। दृतिम् हरतीति दृतिहरिः। नाथन्नासारज्जुम् हरतीति नाथहरिः। पशौ किम् दृतिहारः। नाथहारः।

## फलेग्रहिरात्मम्भरिश्च। ३।२।२६।

फलानि गृह्णाति फलेग्रहिः। उपपदस्य एदन्तत्वं ग्रहेरिन्-प्रत्ययश्च निपात्यते। आत्मानम्बिभर्त्तीति आत्मम्भरिः। आत्मनो मुमागमः भञ्च इन्। चात् कुक्षिम्भरिः। चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः। "ज्योत्स्नाकरम्भमुदरम्भरय श्चकोरा इति" मुरारिः।

## एजेः खश्। ३।२।२८।

ण्यन्तादेजेः खश् स्यात्।

## अरुर्द्विषदजन्तस्य मुम्। ६।३।६७।

अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात् खिदन्ते उत्तरपदे न त्वव्ययस्य। शित्त्वाच्छबादिः। जनम् एजयतीति जनमेजयः। वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातिभ्यः खश उपसंख्यानम्। वातमजाः मृगाः।

## खित्यनव्ययस्य। ६।३।६६।

खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात्। ततो मुम्। शुनिन्धयः। तिलन्तुदः। शर्द्धञ्जहा माषाः शर्द्धोऽपानशब्दः तञ्जहति इति विग्रहः। जहातिरन्तर्भावितण्यर्थः।

## नासिकास्तनयोर्ध्माधेटोः।३।२।२९।

अत्र वार्त्तिकम् (२९)। स्तने धेटो नासिकायां ध्मश्चेति

(२९) नासिकास्तनयोरुभयधातूपपदत्वशङ्कानिरासार्थं यथासंख्यनिरासार्थञ्च वार्त्तिकं तत्र ध्मश्चेति चकारेण धेटो ग्रहणम्।

वाच्यम् *। स्तनन्धयतीति स्तनन्धयः। घेटष्टित्त्वात् स्तनन्धयी (३०)। नासिकन्धमः। नासिकन्धयः।

## नाडीमुष्ट्योश्च। ३। २। ३०।

एतयोरुपपदयोः कर्म्मणोर्ध्माधेटोः खश् स्यात्। यथासंख्यन्नेष्यते। नाडिन्धमः नाडिन्धयः। मुष्टिन्धमः मुष्टिन्धयः। घटीखारीखरीषूपसंख्यानम् *। घटिन्धमः। घटिन्धयः। इत्यादि। खारी परिमाणविशेषः। खरी गर्द्दभी।

## उदि कूले रुजिवहोः। ३। २। ३१।

उत्पूर्व्वाभ्याम् (३१) रुजिवहिभ्याम् कूले कर्म्मण्युपपदे खश् स्यात्। कूलमुद्रुजतीति कूलमुद्रुजः। कूलमुद्वहः।

## वहाभ्रे लिहः। ३। २। ३२।

वहः स्कन्धस्तं लेढीति वहंलिहो गौः। अदादित्वाच्छपो लुक्। खशो ङित्वान्न गुणः। अभ्रंलिहो वायुः।

## परिमाणे पचः। ३। २। ३३।

प्रस्थम्पचा स्थाली। खारिम्पचः कटाहः।

(३०) टित्त्वस्यावयवेऽचरितार्थत्वात् प्रत्ययान्तएवावकाश इति भावः। तथापि खश्प्रत्ययान्तादेव घेटो ङीप् नान्यस्येति हरदत्तादयः। मनो०।

(३१) उदीत्यस्य सप्तम्यन्तत्वे कूलशब्दस्यैवोपपदत्वं स्यात् ततश्च नाडीमुष्ट्योरिवायथासंख्यग्रहणापत्तिरित्यत उदीत्यत्र सप्तमीं पञ्चमीपरतया व्याचष्टे उत्पूर्व्वाभ्यामिति रुजिवहोरित्यत्र षष्ठी पञ्चम्यर्थे।

मितनखे च। ३। २। ३४।

मितम्पचा ब्राह्मणी। नखम्पचा यवागूः। पचिरत्र तापवाची

विध्वरुषोस्तुदः। ३। २। ३५।

विधुन्तुदः। मुमि कृते संयोगान्तस्य(२६४० सू०)लोपः। अरुन्तुदः

असूर्य्यललाटयोर्दृशितपोः। ३। २। ३६।

असूर्य्यमित्यसमर्थसमासः दृशिना नञः सम्बन्धात्। सूर्य्यन्न पश्यन्तीत्यसूर्य्यपश्या राजदाराः (२२)। ललाटन्तपः सूर्य्यः।

उग्रम्पश्येरम्मदपाणिन्धमाश्च। ३। २। ३७।

एते निपात्यन्ते। उग्रमिति क्रियाविशेषणान्तस्मिन्नुपपदे दृशेः खश्। उग्रम्पश्यतीत्युग्रम्पश्यः। इरा उदकन्तेन माद्यति दीप्यतेऽबिन्धनत्वादिति इरम्मदो मेघज्योतिः। इह निपातनात् श्यन्। पाणयो ध्मायन्तेऽस्मिन्निति पाणिन्धमोऽध्वा अन्धकारादाहतइत्यर्थः तत्र हि सर्पाद्यपनोदनाय पाणयः शब्द्यन्ते।

प्रियवशे वदः खच्। ३। २। ३८।

प्रियंवदः। वशंवदः। गमेः (२३) सुपि वाच्यः। असंज्ञा-

---

(२२) गुप्तिपरञ्चेदं यदपरिहार्य्यदर्शनं सूर्य्यमपि न पश्यन्ति। तेनात् सूर्य्यदर्शनेऽपि प्रयोगो भवत्येव यदा तु सूर्य्यदर्शनाभावमात्रं सूर्य्येतरचन्द्रादेर्वा दर्शनं विवक्षितं तदा न खश् भवति अनभिधानात्। मनो०

(२३) खश्विति प्रकृते खचकरणमुत्तरार्थं तेन द्विषन्तपइत्यत्र ह्रस्वणिलोपौ स्यातां तत्रैव खचमनुक्तोह मध्ये खशन्त अन्यत्रापि क्वचित् खचो ज्ञापनार्थं तदेव वार्त्तिककृतोक्तं गमेरिति।

र्थमिदम् (३४)। मितङ्गमो हस्ती। विहायसो विह इति वाच्यम्। खच्च डिद्वा वाच्यः। विहङ्गमः विहङ्गः। भुजङ्गमः भुजङ्गः।

## द्विषत्परयोस्तापेः। ३। २। ३९।

खच् स्यात्।

## खचि ह्रस्वः। ६। ४। ९४।

खच्परे णौ उपधाया ह्रस्वः स्यात्। द्विषन्तम्परं वा तापयतीति द्विषन्तपः। परन्तपः। घटीग्रहणात् (७२२१सू०वा०) लिङ्गविशिष्टपरिभाषा अनित्या। तेनेह न द्विषतीन्तापयतीति द्विषतीतापः।

## वाचि यमो व्रते। ३। २। ४०।

वाक्शब्दे उपपदे यमेः खच् स्याद्व्रते गम्ये।

## वाचंयमपुरन्दरौ च। ६। ३। ६९।

वाक्पुरोरमन्तत्वन्निपात्यते। वाचंयमो मौनव्रती। व्रते किम् अशक्त्यादिना वाचं यच्छतीति वाग्यामः।

## पूःसर्व्वयोर्दारिसहोः। ३। २। ४१।

पुरन्दारयतीति पुरन्दरः। सर्व्वंसहः। सहिग्रहणमसंज्ञार्थम्। भगे च दारेरिति काशिका। वाङ्कलकेन लब्धमिदमित्याकुः। भगन्दारयतीति भगन्दरः।

(३४) संज्ञायान्तु गमश्चेति (७२२५सू०) सूत्रेण सिद्धमिति भावः।

सर्व्वकूलाभ्रकरीषेषु कषः । ३ । २ । ४२ ।

सर्व्वङ्कषः खलः । कूलङ्कषा नदी । अभ्रङ्कषो वायुः । करीषङ्कषा वात्या ।

मेघर्त्तिभयेषु कृञः । ३ । २ । ४३ ।

मेघङ्करः । ऋतिङ्करः । भयङ्करः । भयशब्देन तदन्तविधिः । अभयङ्करः ।

क्षेमप्रियमद्रेऽण् च । ३ । २ । ४४ ।

एषु कृञोऽण् स्यात् । चात् खच् । क्षेमङ्करः क्षेमकारः । प्रियङ्करः प्रियकारः । मद्रङ्करः मद्रकारः । वेति वाच्येऽण्ग्रहणं हेत्वादिषु टो मा भूदिति । कथन्तर्हि "अल्पारम्भाः क्षेमकराः" इति कर्म्मणः शेषत्वविवक्षायां पचाद्यच् ।

आशिते भुवः करणभावयोः । ३ । २ । ४५ ।

आशितशब्दे उपपदे भवतेः खच् । आशितो (२५) भवत्यनेनाशितम्भवः ओदनः । आशितस्य भवनम् आशितम्भवः ।

संज्ञायाम्भृतॄवृजिधारिसहितपिदमः । ३ । २ । ४६ ।

विश्वम् बिभर्त्तीति विश्वम्भरः । विश्वम्भरा । रथन्तरम् साम । इह रथेन तरतीति व्युत्पत्तिमात्रम् न त्ववयवार्थो-

(२५) सम्यक् अशित आशितोऽतिथ्यादिपर्य्यन्तपर्य्याप्तभोजनइत्यर्थः ।

तुगमः। पतिंवरा कन्या। शत्रुञ्जयो हस्ती। युगन्धरः पर्व्वतः। शत्रुंसहः। शत्रुन्तपः। अरिन्दमः। दमिः शमनायान्तेन सकर्म्मकः(उ१४१९०) इत्युक्तम्। मतान्तरे तु अन्तर्भावितण्यर्थोऽत्र दमिः।

गमश्च।३।२।४७।

सुतङ्गमः :

अन्तात्यन्ताध्वदूरपारसर्व्वानन्तेषु डः।३।२।४८।

संज्ञायामिति निवृत्तम्। एषु गमेर्डः स्यात्। डित्त्वसामर्थ्यादभस्यापि टेर्ल्लोपः। अन्ते गच्छतीत्यन्तग इत्यादि। सर्व्वत्रपन्नयोरुपसंख्यानम् *। सर्व्वत्रगः। पन्नम्पतितङ्गच्छतीति पन्नगः! पन्नमिति पद्यतेः क्तान्तम् क्रियाविशेषणम्। उरसो लोपश्च। *। उरसा गच्छतीत्युरगः। सुदुरोरधिकरणे *। सुखेन गच्छत्यत्र सुगः। दुर्गः। अन्यत्रापि दृश्यते इति वक्तव्यम् *। ग्रामगः। डे च विहायसोविहादेशो वक्तव्यः। *। विहगः।

आशिषि हनः।३।२।४९।

शत्रुम्बध्याच्छत्रुहः। आशिषि किम् शत्रुघातकः। दारावाहनोऽणन्तस्य च टः संज्ञायाम् *। दारुशब्दे उपपदे आङ्पूर्व्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः। दार्व्वा

घाटः। चारौ वा ०। चार्वाघाटः चार्व्वाघातः। कर्मणि समि च °। कर्मण्युपपदे सम्पूर्व्वाद्धन्तेरक्तम् वेत्यर्थः। वर्णान् संहन्तीति वर्णसङ्घाटः वर्णसङ्घातः। पदसङ्घाटः पदसङ्घातः।

## अपे क्लेशतमसोः।३।२।५०।

अपपूर्व्वाद्धन्तेर्डः स्यात्। अनाशीरर्थमिदम्। क्लेशापहः पुत्रः। तमोऽपहः सूर्यः।

## कुमारशीर्षयोर्णिनिः।३।२।५१।

कुमारघाती। शिरसः शीर्षभावो निपात्यते। शीर्षघाती।

## लक्षणे जायापत्योष्टक्।३।२।५२।

हन्तेष्टक् स्याल्लक्षणवति (३६) कर्त्तरि। जायाघ्नो (३७) ना। पतिघ्नी स्त्री।

## अमनुष्यकर्त्तृके च।३।२।।५३।

जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। पित्तघ्नं घृतम्। अमनुष्येति किम् आखुघातः शूद्रः। अथ कथम् "बलभद्रः प्रलम्बघ्नः" शत्रुघ्नःकृतघ्न इत्यादि मूलविभुजादित्वात् (७१२५पृ०) सिद्धम्। चोरघातो नगरघातो हस्तीति तु बाहुलकादणि।

## शक्तौ हस्तिकवाटयोः।३।२।५४।

---

३६) सूत्रे लक्षणशब्दोऽर्शआद्यजन्त इत्याशयेनाह लक्षणवतीति।

(३७) जायामरणसूचकंपाणिरेखादिकं यस्यास्ति स तां हन्तीत्युपचारात् पतिघ्नीत्यपि द्रष्टव्यम्।

हन्तेः टक् स्यात् शक्तौ द्योत्यायाम्। मनुष्यकर्तृकार्थमिदम्। हस्तिघ्नो ना। कवाटघ्नश्चोरः। कपाटेति(३८)पाठान्तरम्।

## पाणिघताडघौ शिल्पिनि। ३। २। ५५।

हन्तेष्टक् टिलोपो घत्वञ्च निपात्यते पाणिताडयोरुपपदयोः। पाणिघः। ताडघः। शिल्पिनि किम् पाणिघातः। ताडघातः। राजघ उपसंख्यानम् *। राजानं हन्ति राजघः।

## आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्। ३। २। ५६।

एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन् स्यात्। अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यङ्करणम्। अच्वौ किम् आढ्यीकुर्वन्त्यनेन इह प्रतिषेधसामर्थ्यात् (३९) ल्युडपि नेति काशिका। भाष्यमते तु ल्युट् स्यादेव। अच्वावित्युत्तरार्थम्।

## कर्त्तरि(४०)भुवः खिष्णुच्खुकञौ। ३। २। ५७।

आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः। अनाढ्य आढ्यो भवतीति आढ्यम्भविष्णुः। आढ्यम्भावुकः। स्पृशोऽनुदके

---

(३८) कं शिरः पाटयति प्रविशतीति कपाटं, कुत्सितमटतीति कवाटं कवञ्चोष्णेऽत्यत्र (४७६ पृ०) योगविभागात् कवादेश इति। मनो०

(३९) आढ्यीकरणमिति ल्युट्ख्युनोस्तुल्यं रूपं न च ख्युनि मुम्ह्रस्वौ च्विप्रत्ययस्याव्ययत्वेन च्व्यन्तस्याव्ययतया अनव्ययस्येति (७३२०पृ०सू०) पर्युदासात्।

(४०) कर्त्तरि कृदिति (७२६८पृ०)स्थिते पुनः कर्त्तरीतिग्रहणं करणनिवृत्त्यर्थम् खिष्णादिकारकरणं व्यर्थमेव रूपसिद्धेः। मनो०

क्विन्(४१) । घृतस्पृक् । कर्म्मणीति निवृत्तम् । मन्त्रेण स्पृशतीति मन्त्रस्पृक् । ऋत्विग्दधृक् (४२) । व्याख्यातम् । त्यदादिषु दृशोऽनालोचने कञ्च (४३)(१८४पृ०) । समानान्ययोश्चेति वाच्यम् * । सदृक् । अन्यादृक् । अन्यादृशः । कसोऽपि वाच्यः * । तादृक्षः । सदृक्षः । अन्यादृक्षः ।

**सत्सूद्विषद्रुहदुहयुजविदभिदछिदजिनीराजामुपसर्गेऽपि क्विप् । ३ । २ । ६१ ।**

एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे । द्युसत् । उपनिषत् । अण्डसूः । प्रसूः । मित्रद्विट् । प्रद्विट् । मित्रध्रुक् । प्रध्रुक् । गोधुक् । प्रधुक् । अश्वयुक् । प्रयुक् । वेदवित् । निविदित्यादि अग्रग्रामाभ्यान्नयतेर्णो वाच्यः(४४)। अग्रणीः । ग्रामणीः ।

**भजो ण्विः । ३ । २ । ६२ ।**

सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात् । अंशभाक् । प्रभाक् ।

**अदोऽनन्ने । ३ । २ । ६८ ।**

(४१) सुबन्ते व्याख्यातम् । पूर्व्वार्द्धे १८५पृष्ठे द्रष्टव्यम् ।

(४२) ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चामिति सूत्रं(१६४पृ०)व्याख्यातम् ।

(४३) कर्म्मकर्त्तरि कञादिप्रत्ययो रूढार्थानुगुणत्वात् । मनो०

(४४) स एषां ग्रामणीरिति (६७५पृ०) सूत्रे णत्वनिर्देशादिति भावः । नयतेरित्युक्तेः कर्म्मण्यणादौ ग्रामणाय इत्यादौ णत्वमिति बोध्यम् ।

विट् (४५) स्यात्। आममत्ति आमात्। शस्यात्। अनन्नं किम् अन्नादः।

**क्रव्ये च। ३। २। ६९।**

अदेर्विट् पूर्व्वेण सिद्धे वचनमण्बाधनार्थम्। क्रव्यात् आममांसभक्षकः। कथन्तर्हि "क्रव्यादोऽस्रप आशर" इति पक्वमांसशब्द उपपदेऽण् उपपदस्य क्रव्यादेशः पृषोदरादित्वात्।

**दुहः अप् घश्च। ३। २। ७०।**

कामदुघा।

**अन्येभ्योऽपि दृश्यन्ते। ३। २। ७५।**

छन्दसीति निवृत्तं मनिन् क्वनिप् वनिप् विच् एते प्रत्ययाः धातोः स्युः।

**नेड् वशि कृति। ७। २। ८।**

वशादेः कृत इण् न स्यात्। शॄ–सुशर्मा। प्रातरित्वा।

**विड्वनोरनुनासिकस्यात्। ६। ४। ४१।**

अनुनासिकस्य आत् स्यात्। विजायत इति विजावा। ओणृ–अवावा। विच्। रोट्। लेट्। सुगण्।

**क्विप् च। ३। २। ७६।**

(४५) जनसनखनक्रमगमो विडित्यतो (३।२।६७।६७) विडित्यनुवर्त्तते

अयमपि दृश्यते। सत्सूद्विषेति (उ३२८पृ०) त्वस्यैव प्रपञ्चः। उखास्रत्। पर्णध्वत्। वाहभ्रट्।

**अन्तः। ८। ।४२०।**

पदान्तस्यानितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात्परश्चेत्। हे प्राण्। शास इदिङ्हलोरित्वम्(उ१२६पृ०)। मित्राणि शास्ति मित्रशीः। आशासः क्वौ उपधाया इत्त्वं वाच्यम् *(४६)। आशीः इत्वोत्त्वे। गीः। पूः।

**इस्मन्त्रन्क्विषु च। ६। ४। ९७।**

एषु छादेर्ह्रस्वः स्यात्। तनुच्छत्। अनुनासिकस्य क्विझलोरिति (उ२५पृ०)दीर्घः मो नो धातोः(१५पृ०)। प्रतान्। प्रशान्। च्छ्वोरिति (उ१६९पृ०)ऊठ्। अक्षधूः। ज्वरत्वरेत्यूठ्(उ२१८पृ०)। जूः जुरौ। जुरः। तूः। स्रूः। ऊः। वृद्धिः ‡। जनानवतीति जनौः। जनावौ। जनावः। मूः। मुवौ। मुवः। सुमूः। सुम्वौ। सुम्वः। राल्लोपः(उ२१८पृ०)। मुर्छा मूः। मुरौ। मुरः। धुर्वी धूः।

**गमः क्वौ। ६। ४। ४०।**

अनुनासिकलोपः स्यात्। अङ्गगत्। गमादीनामिति वक्तव्यम् *। परीतत्। संयत्। सुनत्। ऊङ् च गमादीनामिति वक्तव्यम् *। लोपश्च *। अग्रेगूः। भ्रम-अग्रेभ्रूः।

**स्थः क च। ३। २। ७७।**

---

(४६) लिङाशिषीति (उ१८पृ०) निर्देशादिदं सिद्धमिति बोध्यम्।

‡ एत्येधत्यूठ्स्विति (४३पृ०) सूत्रेणेति शेषः।

चात् क्विप्। संस्थः। संस्थाः। शमि धातोः (७२२७९) इत्य-
स्वाधितुं सूत्रम्।

## सुप्यजातौ णिनिस्ताच्छील्ये। ३। २। ७८।

अजात्यर्थे सुपि धातोर्णिनिः स्यात्ताच्छील्ये द्योत्ये। उष्ण-
भोजी शीतभोजी। अजातौ किम् ब्राह्मणानामन्त्रयिता।
ताच्छील्ये किम् उष्णम्भुङ्क्ते कदाचित्। इह वृत्तिकारेणोप-
सर्गभिन्न एव सुपि णिनिरिति व्याख्याय उत्प्रतिभ्या-
माङि सर्त्तेरुपसंख्यानमिति पठितम् हरदत्तमाधवादिभिश्च
तदेवानुसृतम् एतच्च भाष्यविरोधादुपेक्ष्यम् प्रसिद्धश्चोप-
सर्गेऽपि णिनिः "स बभूवोपजीविनाम्" "अनुयायिवर्गः"
"पतत्यधो धाम विसारि" "न वञ्चनीया प्रभवोऽनुजीविभिरि"
त्यादौ। साधुकारिण्युपसंख्यानम्॰। ब्रह्मणि वदः॰।
अताच्छील्यार्थं वार्त्तिकद्वयम्। साधुदायी। ब्रह्मवादी।

## कर्त्तर्य्युपमाने। ३। २। ७९।

णिनिः स्यात्। उपपदार्थः कर्त्ता प्रत्ययार्थस्य कर्त्तुरुपमा-
नम्। उष्ट्र इव क्रोशति उष्ट्रक्रोशी। ध्वाङ्क्षरावी। अता-
च्छील्यार्थं जात्यर्थं च सूत्रम्। कर्त्तरि किम् अपूपानिव
भक्षयति माषान्। उपमाने किम् उष्ट्रः क्रोशति।

## व्रते। ३। २। ८०।

णिनिः स्यात्। स्थण्डिलशायी।

**बहुलमाभीक्ष्ण्ये। ३। २। ८१।**

पौनःपुन्ये द्योत्ये सुप्युपपदे णिनिः। क्षीरपायिण उशीनराः।

**मनः। ३। २। ८२।**

सुपि मन्यतेर्णिनिः स्यात्। दर्शनीयमानी।

**आत्ममाने खश्च। ३। २। ८३।**

स्वकर्म्मके (४७) मनने वर्त्तमानान्मन्यतेः सुपि खश् स्यात्। चाण्णिनिः (४८)। पण्डितमात्मानं मन्यते पण्डितम्मन्यः (४९) पण्डितमानी। खित्यनव्ययस्य (७३२०४०)। कालिम्मन्या (५०) अनव्ययस्य किम् दिवामन्या (५१)।

**इच एकाचोऽम्प्रत्ययवच्च। ६। ३। ६८।**

इजन्तादेकाचोऽम् स्यात्स च स्वाद्यम्वत् (५२) खिदन्ते परे। औतोऽम्शसोः(१२५७०)। गाम्मन्यः। वाम्शसोः(१२२९०)। स्त्रियम्मन्यः स्त्रीम्मन्यः। नृ। नरम्मन्यः। भुवम्मन्यः। श्रियमा-

(४७) प्रत्ययार्थस्य कर्त्तुरेव सन्निहितत्वात् स्वशब्देन ग्रहणम्।

(४८) चाण्णिनिरिति वासरूपविधिनैव णिनिलाभेऽपि चकारेणाविच्छेदाय स सम्बध्यते तेन करणे यजः (७३४३७०)इत्यादौ णिनिरेवानुवर्त्तते न खश् सति तु विच्छेदे णिनेरनुवर्त्तनासम्भवात्।

(४९) एकस्यापि पण्डितस्य स्वरूपेण कर्त्तृत्वं पाण्डित्यविशिष्टतया कर्म्मत्वम्

(५०) स्त्रियाः पुंवदिति (४०१७०) प्राप्तं पुंवद्भावं बाधित्वा ह्रस्वः।

(५१) अधिकरणशक्तिप्रधानस्यापि दिवाशब्दस्य स्वभावात्कर्म्मत्वम्।

(५२) अम्पदमिहावर्त्तते तत्रैकेनाम् विधीयतेऽपरेण प्रत्ययो विशेष्यते तदाह स्वाद्यम्वदिति।

त्मानम्मन्यते श्रिमन्यं कुलम्। भाष्यकारवचनात्(५३)श्रीशब्दस्य ह्रस्वः मुममोरभावश्च।

### भूते। ३। २। ८४।

अधिकारोऽयम्। वर्त्तमाने लडिति (उ२सू०) यावत्।

### करणे यजः। ३। २। ८५।

करणे उपपदे भूतार्थाद्यजेर्णिनिः स्यात्कर्त्तरि। सोमेनेष्टवान् (५४) सोमयाजी। अग्निष्टोमयाजी (५५)।

### कर्म्मणि हनः। ३। २। ८६।

पितृव्यघाती। कर्म्मणीत्येतत्सहे चेति(उ२४५सू०)यावत् अधिक्रियते

### ब्रह्मभ्रूणवृत्रेषु क्विप्। ३। २। ८७।

एषु कर्म्मसूपपदेषु हन्तेर्भूते क्विप्स्यात्। ब्रह्महा। भ्रूणहा। वृत्रहा। क्विप् चेत्येव(उ३२६सू०)सिद्धे नियमार्थमिदम्। ब्रह्मादिष्वेव हन्तेरेव भूते एव क्विबेवेति चतुर्व्विधोऽत्र नियम इति काशिका। ब्रह्मादिष्वेव क्विबेवेति द्विविधो नियम इति भाष्यम् (५६)।

---

(५३) यथा प्रष्ठादयः शब्दा पुंयोगात् स्त्रियां वर्त्तन्ते प्रष्ठी गणकीति तथेह श्रीशब्दः परित्यक्तस्वलिङ्गः क्लीवः सन् कुले वर्त्तत इति भाष्यम्।

(५४) सोमेन लताविशेषात्मकद्रव्येण यागं कृतवानित्यर्थः।

(५५) अग्निष्टोमाख्येन यागेनापूर्व्वं भावितवानिति बोधभेदः।

(५६) धातुकालौ हि नेह सूत्रे श्रुतौ किन्तु प्रकरणाल्लब्धौ तयोरुपरोधो न न्याय्यः उपपदप्रत्यययोस्तु श्रुतत्वादुपरोधोन्याय्यएव। एवं भाष्ये न्यायोपदष्टमाहवृत्तिमन्य उपेक्ष्य इति कयटः। मनो०

सुकर्म्मपापमन्त्रपुण्येषु कृञः । ३ । २ । ८९ ।

सौ कर्म्मादिषु च कृञः क्विप्स्यात् । त्रिविधोऽत्र नियम इति काशिका । सुकृत् । कर्म्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् । क्विपेवेति नियमात्कर्म्म कृतवानित्यत्राऽण् न । कृञ एवेति नियमान्मन्त्रमधीतवान्मन्त्राध्यायः । अत न क्विप् । भूत एवेति नियमात् मन्त्रङ्करोति करिष्यति वेति विवक्षायान्न क्विप् । स्वादिष्वेवेति नियमाभावादन्यस्मिन्नप्युपपदे क्विप् । शास्त्रकृत् । भाष्यकृत् ।

सोमे सुञः । ३ । २ । ९० ।

सोमसुत् । चतुर्व्विधोऽत्र नियम इति काशिका । एवमुत्तरसूत्रेऽपि ।

अग्नौ चेः । ३ । २ । ९१ ।

अग्निचित् ।

कर्म्मण्यग्न्याख्यायाम् । ३ । २ । ९२ ।

कर्म्मण्युपपदे कर्म्मण्येव कारके चिनोतेः क्विप्स्यात् अग्न्याधारस्थलविशेषस्याख्यायाम् । श्येन इव चितः श्येनचित् ।

कर्म्मणीनिविक्रियः । ३ । २ । ९३ ।

कर्म्मण्युपपदे विपूर्वात् क्रीणातेरिनिः स्यात् । कुत्सितग्रहणं कर्त्तव्यम् ॥ । सोमविक्रयी । घृतविक्रयी ।

दृशेः क्वनिप्। ३। २। ९४।

कर्म्मणि भूतइत्येव। पारं दृष्टवान् पारदृश्वा।

राजनि युधिकृञः। ३। २। ९५।

क्वनिप्स्यात्। युधिरन्तर्भावितण्यर्थः। राजानं योधितवान् राजयुध्वा। राजकृत्वा।

सहे च। ३। २। ९६।

कर्म्मणीति निवृत्तम्। सहयुध्वा। सहकृत्वा।

सप्तम्यां जनेर्डः। ३। २। ९७।

सरसिजम्। मन्दुरायाञ्जातो मन्दुरजः। ङ्यापोरिति(४६८सू०) ह्रस्वः।

पञ्चम्यामजातौ। ३। २। ९८।

जातिशब्दवर्जिते पञ्चम्यन्तउपपदे जनेर्डः स्यात्। संस्कारजः। अदृष्टजः

उपसर्गे च संज्ञायाम्। ३। २। ९९।

"प्रजा स्यात् सन्ततौ जने"।

अनौ कर्मणि। ३। २। १००।

अनुपूर्व्वाज्जनेः कर्म्मण्युपपदे डः स्यात्। पुमांसमनुरुध्य-जाता पुमनुजा (५७)।

---

(५७) इह जनिः सकर्म्मकः अनुरोधविशिष्टजननवृत्तित्वात्।

**अन्येष्वपि दृश्यत।३।२।१०१।**

अन्येष्वप्युपपदेषु जनेर्डः स्यात्। अजः। द्विजः। ब्राह्मणजः। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित्। परितः खाता परिखा।

**क्तक्तवतू निष्ठा।१।१।२६।**

एतौ निष्ठासंज्ञौ स्तः।

**निष्ठा।३।२।१०२।**

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्। तत्र तयोरेवेति (७२६८पृ०)भावकर्म्मणोः क्तः। कर्त्तरि कृदिति (७२६८पृ०) कर्त्तरि क्तवतुः। उकावितौ। स्नातम्मया। स्तुतस्त्वया विष्णुः। विष्णुर्विश्वं कृतवान्।

**निष्ठायामण्यदर्थे।६।४।६०।**

ण्यदर्थो भावकर्म्म ततोऽन्यत्र निष्ठायां क्षियो दीर्घः स्यात्।

**क्षियो दीर्घात्।८।२।४६।**

दीर्घात् क्षियो निष्ठातस्य नः स्यात्। क्षीणवान्। भावकर्म्मणोस्तु क्षितः कामो मया। श्र्युकः क्किति (७६७पृ)। श्रितः। श्रितवान्। भूतः। भूतवान्। च्युतः। ऊर्णोतेर्णुवद्भावो वाच्यः *। तेन एकाच्त्वान्नेट्। ऊर्णुतः। नुतः। दृतः।

**रदाभ्यान्निष्ठातो नः पूर्व्वस्य च दः।८।२।४२।**

रेफदकाराभ्यां परस्य निष्ठातस्य नः स्यात्। निष्ठापेक्षया

पूर्व्वस्य धातोरीकारस्य च। धॄ चूर्तदूत् (भ्वा०पृ०)। रपरः। णत्वम्। शीर्णः। वहिरङ्गत्वेन इङ्गेरसिद्धत्वान्नेट्। कृत-स्यापत्यं कार्त्तिः। भिन्नः। छिन्नः।

## संयोगादेरातो धातोर्य्यण्वतः। ८। २। ४३।

निष्ठातस्य नः स्यात्। द्राणः। स्त्यानः। म्लानः।

## ल्वादिभ्यः। ८। २। ४४।

एकविंशतेर्ल्वादिभ्यः(५८) प्राग्वत्। लूनः। ज्या-ग्रहिज्या (भ्वा०६पृ०)। जीनः। दुग्वोर्दीर्घश्च *। दु गतौ-दूनः। टुदु उपताप इत्ययन्तु न गृह्यते सानुबन्धत्वात्। "मृदुतया दुत-येति" माघः। गूनः। पूञो विनाशे *। पूना यवाः विनष्टा इत्यर्थः। पूतमन्यत्। सिनोतेर्ग्रासकर्म्मकर्त्तृकस्य *। सिनो-ग्रासः (५६)। ग्रासेति किम् सिता पाशेन सूकरी। कर्म्मक-र्त्तृकस्येति किम् सितो ग्रासो देवदत्तेन।

## ओदितश्च। ८। २। ४५।

भुजो-भुग्नः। टु ओ श्वि--उच्छूनः। ओ हाक--प्रहीणः। स्वादय ओदित इत्युक्तम्(भ्वा१२५पृ०)। सूनः। सूनवान्। दूनः। दूनवान्। ओदित्मध्ये डीङः पाठसामर्थ्यान्नेट्। उड्डीनः।

(५८) प्वादयो द्वाविंशतिः क्र्यादौ पठितास्तन्मध्ये पूञं विहाय ल्वादयो ज्ञेयाः। एतत्पुस्तके १६५ १६६ १६७ पृष्ठेषु द्रष्टव्याः।

(५६) पिण्डीक्रियमाणोग्रासो दध्यादिव्यञ्जनादिना यदा बन्धनेऽनुकूल-स्तदा कर्म्मण एव कर्त्तृत्वं तत्रैवेदं प्रवर्त्तते इति बोध्यम्।

द्रवमूर्त्तिस्पर्शयोः श्यः । ६ । १ । २४ ।

द्रवस्य मूर्त्तौ काठिन्ये स्पर्शे चार्थे श्यैङः सम्प्रसारणं स्यान्निष्ठायाम् ।

श्योऽस्पर्शे (६०) । ८ । २ । ४७ ।

श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे । हलइति दीर्घः । शीनं घृतम् । अस्पर्शे किं शीतञ्जलम् । द्रवमूर्त्ति स्पर्शयोः किम् संश्यानो वृश्चिकः शीतात् संकुचित इत्यर्थः ।

प्रतेश्च । ६ । १ । २५ ।

प्रतिपूर्वस्य श्यः सम्प्रसारणं स्यान्निष्ठायाम् । प्रतिशीनः ।

विभाषाऽभ्यवपूर्वस्य । ६ । १ । २६ ।

श्यः सम्प्रसारणं वा स्यात् । अभिश्यानं अभिशीनम् घृतम् अवश्यानोऽवशीनो वृश्चिकः । व्यवस्थितविभाषेयम् । तेनेह न समवश्यातः ।

अञ्चोऽनपादाने । ८ । २ । ४८ ।

अञ्चो निष्ठातस्य नः स्यान्न त्वपादाने ।

यस्य (६१) विभाषा । ७ । २ । १५ ।

यस्य क्वचिद्विभाषयेड्विहितस्ततो निष्ठायाइण् न स्यात् ।

(६०) सिद्धत्वादादौ संप्रसारणे संयोगादेरात(उ२४७५०)इत्यस्याप्राप्तौ सूत्रम्
(६१) यस्येत्यार्द्धधातुकापेक्षा षष्ठी यदीयस्यार्द्धधातुकस्येत्यर्थः ।

उदितो वेति (७४६२सू०) क्वायां वेट्त्वादिह नेट्। समक्तः। अनपादाने किम् उदक्तं (६२) मुदकं कूपात्। नत्वस्यासिद्धत्वात् व्रश्चेति (१२०सू०) षत्वे प्राप्ते। निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः *। वृक्णः। वृक्णवान्।

## परिस्कन्दः प्राच्यभरतेषु। ८। ३। ७५।

पूर्वेण मूर्द्धन्ये प्राप्ते तदभावो निपात्यते। परिस्कन्नः। प्राच्येति किम् परिष्कन्नः-परिस्कन्नः। परेश्चेति (७१०२सू०) विकल्पः। स्तन्भेरिति (७२७सू०) षत्वे प्राप्ते प्रतिस्तब्धनिस्तब्धौ च *। अत्र षत्वन्न स्यात्।

## दिवोऽविजिगीषायाम्। ८। २। ४९।

दिवो निष्ठातस्य नः स्यादविजिगीषायाम्। द्यूनः। विजिगीषायान्तु द्यूतम् (६३)।

## निर्व्वाणोऽवाते। ८। २। ५०।

अवाते इति छेदः। निपूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत् कर्त्ता न। निर्वाणोऽग्निर्मुनिर्वा। वाते तु निर्वातो वातः।

## शुषः कः। ८। २। ५१।

निष्ठात इत्येव। शुष्कः।

## पचो वः। ८। २। ५२।

पक्वः।

---

(६२) उदक्तमुत्थितमित्यर्थः धातूनामनेकार्थत्वात्।

(६३) द्यूतमिति विजिगीषया हि तत्राक्षाः पात्यन्त इति गम्यते विजिगीषा।

क्षायो मः। ८। २। ५३।

क्षामः।

स्त्यः प्रपूर्व्वस्य। ६। १। २३।

प्रात् स्त्यः सम्प्रसारणं स्यान्निष्ठायाम्।

प्रस्त्योऽन्यतरस्याम्। ८। २। ५४।

निष्ठातस्य मो वा स्यात्। प्रस्तीतः-प्रस्तीमः। प्रात्किम् स्त्यानः।

अनुपसर्गात् फुल्लक्षीवकृशोल्लाघाः। ८। २। ५५।

ञिफला-फुल्लः। निष्ठातस्य लत्वं निपात्यते क्तवत्वेकदेशस्यापीदन्निपातनमिष्यते। फुल्लवान्। क्षीबादिषु तु क्तप्रत्ययस्यैव तलोपः तस्यासिद्धत्वात् प्राप्तस्येटोऽभावश्च निपात्यते। क्षीवो मत्तः। कृशस्तनुः। उल्लाघो नीरोगः। अनुपसर्गात् किम्।

आदितश्च। ७। २। १६।

आकारेतो निष्ठायामिण् न स्यात्।

ति च। ७। ४। ८९।

चरफलोरुत् स्यात्तादौ किति। प्रफुल्तः। प्रक्षीवितः। प्रकृशितः। प्रोल्लाघितः। कथन्तर्हि "लोध्रद्रुमं सानुमतः

प्रफुल्लमिति"। फुल्ल विकसने पचाद्यच्। सूत्रं तु(६४)फुल्तादि निवृत्त्यर्थम्। उत्फुल्लसफुल्लयोरुपसंख्यानम् *।

## नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्। ८। २। ५६।

एभ्यो निष्ठातस्य नो वा। नुन्नः-नुत्तः। विद विचारणे रौधादिक एव गृह्यते उन्दिना परेण साहचर्य्यात्। विन्नः-वित्तः। वेत्तेस्तु विदितः(६५)। विद्यतेर्विन्नः। उन्त्री।

## श्वीदितो निष्ठायाम्। ७। २। १४।

श्वयतेरीदितश्च निष्ठाया इण् न। उन्नः-उत्तः। त्राणः-त्रातः। घ्राणः-घ्रातः। ह्रीणः-ह्रीतः।

## न ध्याख्यापॄमूर्च्छिमदाम्। ८। २। ५७।

एभ्यो निष्ठातस्य नत्वन्न। ध्यातः। ख्यातः। पूर्त्तः! राल्लोपः (७२१८५०)। मूर्त्तः। मत्तः।

## वित्तो भोगप्रत्यययोः। ८। २। ५८।

विन्दतेर्निष्ठान्तस्य निपातोऽयम्भोग्ये प्रतीते(६६)चार्थे। वित्तं

---

(६४) अनुपसर्गात् फुल्लेत्यादि सूत्रं फल्ल विकसनइत्यस्मात् पचाद्यचा सिद्धावपि निष्ठायां फुल्तरूपनिवृत्त्यर्थमित्यर्थः।

(६५) वेत्तेस्त्विति तथा च भाष्यम्।

वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्नइष्यते।
वित्तेर्विन्नश्च वित्तश्च भोगे वित्तश्च विद्यतेरिति॥

(६६) भोगप्रत्ययशब्दौ कर्म्मसाधनावित्याशयेन व्याचष्टे भोग्ये प्रतीते चेति।

धनम्। वित्तः पुरुषः। अनयोः किम् विन्नः। विभाषा गम-हनेति (७२६५सू०) क्वसौ वेट्त्वादिह नेट्।

**भित्तं शकलम्। ८। २। ५९।**

भिन्नमन्यत्।

**ऋणमाधमर्ण्ये। ८। २। ६०।**

ऋधातोः क्तकारस्य नत्वं निपात्यते आधमर्ण्य(६७)व्यव-हारे। ऋतमन्यत्।

**स्फायः स्फी निष्ठायाम्। ६। १। २२।**

स्फीतः।

**दूशान्निष्ठायाम्। ७। २। ४७।**

निरः कुषो निष्ठाया इट् स्यात्। यस्य विभाषेति (७२४८सू०) निषेधे प्राप्ते पुनर्विधिः। निष्कुषितः।

**वसतिक्षुधोरिट्। ७। २। ५२।**

आभ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात्। उषितः। क्षुधितः।

**अञ्चेः पूजायाम्। ७। २। ५३।**

(६७) अधमं दुःखप्रदमृणं यस्य सोऽधमर्णस्तस्य भाव आधमर्ण्यं तेन च ऋणादानरूपो व्यवहारो लक्ष्यते ततश्चोत्तमर्णोऽपि सिध्यति धारे रुत्तमर्ण इति (२७७सू०) निर्देशात्। मनो०

पूजार्थादञ्चेः क्त्वानिष्ठयोरिट् स्यात् (६८)। अञ्चितः। गतौ तु अक्तः।

## लुभो विमोहने। ७। २। ५४।

लुभः क्त्वानिष्ठयोरिट् स्यान्न तु गार्ध्ये। लुभितः। गार्ध्ये तु लुब्धः।

## क्लिशः क्त्वानिष्ठयोः। ७। २। ५०।

इड्वा स्यात्। क्लिश उपतापे नित्यमप्राप्ते क्लिशू विबाधने अस्य क्त्वायां विकल्पे सिद्धेऽपि निष्ठायां निषेधे प्राप्ते विकल्पः। क्लिशितः-क्लिष्टः।

## पूङश्च। ७। २। ५१।

पूङः (६९) क्त्वानिष्ठयोरिड्वा स्यात्।

## पूङः क्त्वा च। १। २। २२।

पूङः क्त्वा निष्ठा च सेट् किन्न स्यात्। पवितः-पूतः। क्त्वाग्रहणमुत्तरार्थम् (७०)। नोपधादित्यत्र(७४६सू०)हि क्त्वैव(७१)सम्बध्यते।

## निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः। १। २। १९।

---

(६८) उदित्त्वात् क्त्वायां विकल्पे निष्ठायां यस्येति (७३४८सू०) निषेधे प्राप्ते सूत्रम्।

(६९) श्र्युकः कितीति (७३९७सू०) निषेधे प्राप्ते वचनम्।

(७०) पूङः क्त्वा चेति सूत्रे क्त्वाग्रहणं व्यर्थं क्त्वा सेट् (७४६२सू०) इत्यनेनैव कित्त्वनिषेधे सिद्धेरत आह उत्तरार्थमिति।

(७१) क्त्वैवेति न तु निष्ठा चकारानुकृष्टत्वादिति भावः। मनो०

एभ्यः सेण्निष्ठा किन्न स्यात्। ग्रथितः। ग्रथितवान्। अनुबन्धनिर्द्देशो यङ्लुङ्निवृत्त्यर्थः। ग्रंन्थितः ग्रन्थितवान्। आदिकर्म्मणि निष्ठा वक्तव्या *।

आदिकर्मणि क्तः कर्त्तरि च।३।४।७१।

आदिकर्म्मणि यः क्तः स कर्त्तरि स्यात्। चाद्भावकर्म्मणोः।

विभाषा भावादिकर्मणोः।७।२।१७।

भावे आदिकर्म्मणि चादितो निष्ठायामिड्वा स्यात्। प्रस्वेदित चैत्रः। प्रस्वेदितन्तेन। ञिष्विदेति भ्वादिरत्र गृह्यते ञीद्भिः साहचर्य्यात्। स्विद्यतेस्तु स्विदित इत्येव। ञिमिदा ञिक्ष्विदा दिवादी भ्वादी च। प्रमेदितः। प्रमेदितवान्। प्रक्ष्वेदितः प्रक्ष्वेदितवान् (७२)। प्रधर्षितः प्रधर्षितवान्। धर्षितन्तेन। सेट् किम् प्रस्विन्नः। प्रस्विन्नन्तेनेत्यादि।

मृषस्तितिक्षायाम्।१।२।२०।

सेण्निष्ठा किन्न स्यात्। मर्षितः। मर्षितवान्। क्षमायां किम् अपमृषितं वाक्यम् अविस्पष्टमित्यर्थः।

उदुपधाद्भावादिकर्मणोरन्यतरस्याम्।१।२।२१।

(७२) स्विदादीनामादित (७३५०पृ०) इतोऽतो निषेधात् सेट् निष्ठा दुर्लभेत्यत आदिकर्म्मणि निष्ठोदाहृता।

द्युतितम्-द्योतितम्। मुदितम्-मोदितं साधुना। प्रद्युतितः-प्रद्योतितः। प्रमुदितः-प्रमोदितः साधुः। उदुपधात् किम् विदितम्। भावेत्यादि किम् रुचितं कार्षापणम्। सेट् किम् कुष्टम्। शब्विकरणेभ्य एवेष्यते। नेह। गुध्यतेर्गुधितम्।

## निष्ठायां सेटि। ६। ४। ५२।

णेर्लोपः स्यात्। भावितः। भावितवान्। श्वीदित इति (उ२५।पृ०) नेट्। सम्प्रसारणम्। शूनः। दीप्तः। गुहू-गूढः। वनु-वतः। तनु-ततः। पतेः सनि वेट्कत्वादिडभावे प्राप्ते द्वितीयाश्रितेति (२२६पृ०) सूत्रे निपातनादिट्। पतितः। सेऽसिचीति (उ१२२पृ०)वेट्कत्वात् सिद्धे कृत्त्यादीनामीदित्त्वेनानित्यत्वज्ञापनाद्वा तेन ‡ "धावितमिभराजधिये" त्यादि। यस्य विभाषे (उ२४८पृ०) त्यत्रैकाच इत्येव। दरिद्रितः।

## क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु। ७। २। १८।

क्षुब्धादीन्यष्टावनिट्कानि निपात्यन्ते समुदायेन मन्थादिषु वाच्येषु। द्रवद्रव्यसंसक्ताः सक्तवो मन्थो मन्थनदण्डश्च। क्षुब्धो मन्थनश्चेत्। स्वान्तम्मनः। ध्वान्तन्तमः। लग्नं सक्तम् निष्ठानत्वमपि निपातनात्। म्लिष्टमविस्पष्टम्। विरिब्धः स्वरः। म्लेच्छ रेभ अनयोरुपधायादूत्त्वमपि निपात्यते।

‡ धावुगतिशुद्ध्योरित्युदित्त्वात् क्त्वायां वेट्कत्वेन यस्य विभाषेति (उ२४८पृ०) अनिट्कत्वमाशङ्क्याह तेन धावितमिति।

फाण्टमनायाससाध्यः कषायविशेषः (७३)। माधवस्तु नव-नीतभावात् प्रागवस्थापन्नं द्रव्यम्फाण्टमिति वेदभाष्ये (७४) आह। वाढं भृशम्। अन्यत्र तु वाहितम्। क्षुब्धो राजेति त्वागमशास्त्रस्यानित्यत्वात्। स्वनितम्। ध्वनितम्। लगितम्। म्लेच्छितम्। विरेभितम्। फाणितम्। वाहितम्।

**धृषिशसी वैयात्ये। ७। २। १९।**

एतौ निष्ठायामविनय (७५) एवानिटौ स्तः। धृष्टः। विशस्तः। अन्यत्र। धर्षितः। विशसितः। भावादिकर्म्मणोस्तु वैयात्ये धृषिर्नास्ति (७६)। अतएव नियमार्थमिदं सूत्रमिति वृत्तिः। धृषेरादित्त्वं फलश्चिन्त्यमिति हरदत्तः। माधवस्तु भावादि-कर्म्मणोरवैयात्ये विकल्पमाह। धृष्टम्-धर्षितम्। प्रधृष्टः प्रधर्षितः।

**दृढः स्थूलबलयोः। ७। २। २०।**

स्थूले बलवति च निपात्यते। दृह दृहि वृद्धौ। तस्येडभावः।

(७३) यथौषधजातमुष्णोदके प्रक्षिप्य सद्योऽभिषुत्य यत्पीयते तत्फाण्टम्।

(७४) "तद्वै नवनीतं भवति घृतं देवानां फाण्टं मनुष्याणामिति" शतपथ-श्रुतिव्याख्यायामिति शेषः।

(७५) ञिधृषा प्रागल्भ्ये शसु हिंसायामनयोरादितश्च (३२५०पृ०) यस्य विभाषेति(३२४८पृ०)च सूत्राभ्यामिड्निषेधे सिद्धेऽपि वैयात्यएवानिट्-त्वनियमः। विरुद्धं यातो वियातोऽविनीतस्तस्य भावो वैयात्यमित्यर्थः।

(७६) विभाषा भावादिकर्म्मणोरिति (३२५४पृ०) विकल्पे प्राप्ते सूत्रस्य नित्यार्थतामाशङ्क्याह नास्तीति।

तस्य ढत्वम्। हस्य लोपः। इदितो नलोपश्च। दृहितः। दृंहितोऽन्यः।

**प्रभौ परिवृढः। ७। २। २१।**

दृह दृहि वृद्धौ निपातनम्प्राग्वत्। परिदृहितः। परिदृंहितोऽन्यः।

**कृच्छ्रगहनयोः कषः। ७। २। २२।**

कषो निष्ठायामिण् न स्यादेतयोरर्थयोः। कष्टं दुःखं तत्कारणञ्च। "स्यात् कष्टं कृच्छ्रमाभीलम्"। कष्टो मोहः(७७)। कष्टं शास्त्रम् दुरवगाहमित्यर्थः। कषितमन्यत्।

**घुषिरविशब्दने। ७। २। २३।**

घुषिर्निष्ठायामनिट् स्यात्। घुष्टा रज्जुः। अविशब्दने किम् घुषितम् वाक्यम् शब्देन प्रकटीकृताभिप्रायमित्यर्थः।

**अर्द्देः सन्निविभ्यः। ७। २। २४।**

एतत्पूर्व्वादर्द्देर्न्निष्ठाया इण् न स्यात्। समर्णः। न्यर्णः। व्यर्णः। अर्द्दितोऽन्यः।

**अभेश्चाविदूर्य्ये। ७। २। २५।**

अभ्यर्णम् नातिदूरम् आसन्नम् वा। अभ्यर्द्दितमन्यत्।

**णेरध्ययने वृत्तम्। ७। २। २६।**

(७७) कष्टो मोहो दुःखहेतुरित्यर्थः।

ण्यन्तादृते: क्तस्येडभावो णिलुक् चाधीयमानेऽर्थे। वृत्तश्छन्दश्छात्त्रेण सम्पादितम् अधीतमिति यावत्। अन्यत्र तु वर्त्तिता रज्जुः।

**शृतम्पाके। ६। १। २७।**

श्रातिश्रपयत्योः क्ते शृभावो निपात्यते चीरहविषोः पाके (७८)। शृतम् चीरम् स्वयमेव विक्लिन्नं पक्वं वेत्यर्थः। चीरहविर्भ्यामन्यत्तु। श्राणम्। श्रपितम् वा।

**वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः। ७। २। २७।**

एते णिचि निष्ठान्ता वा निपात्यन्ते। पक्षे। दमितः। शमितः। पूरितः। दासितः। स्पाशितः। छादितः। ज्ञापितः।

**रुष्यमत्वरसंघुषास्वनाम्। ७ २। २८।**

एभ्यो निष्ठाया इड्वा। रुषितः--रुष्टः। आन्तः-अमितः। तूर्णः- त्वरितः। आदितश्चेति फलमान्द्यम् (७६)। संघुष्टः संघुषितः। आस्वान्तः आस्वनितः।

**हृषेर्लोमसु। ७। २। २९।**

हृषेर्निष्ठाया इड्वा स्यात् लोमसु विषये। हृष्टं हृषितं लोम।

---

(७८) विभाषाभ्यवपूर्व्वस्य(३३४८पृ०)इत्यतो विभाषेत्यनुवर्त्तते सा च व्यवस्थिता तेन चीरहविषोरेव शृभावो नित्यश्चान्यत्र नैव भवतीत्याह चीरेति।

(७६) आदितश्चेति (३३५०पृ०) निषेधे प्राप्ते विकल्पः एवञ्चाकारेत्त्वकरणं व्यर्थमित्याह मन्दमिति

विस्मितप्रतिघातयोश्च । हृष्टो-हृषितो मैत्रः विस्मितः प्रतिहतो वेत्यर्थः। अन्यत्र तु हृषु अलीके उदित्त्वान्निष्ठायां नेट्। हृष तुष्टौ इट्।

## अपचितश्च। ७। २। ३०।

चायतेर्न्निपातोऽयं वा। अपचितः-अपचायितः।

## प्यायः पी। ७। १। २८।

पी वा स्यान्निष्ठायाम्। व्यवस्थितविभाषेयम्। तेन स्वाङ्गे नित्यम्। पीनं मुखम्। अन्यत्र। प्यानः-पीनः स्वेदः। सोपसर्गस्य न। प्रप्यानः। आङ्पूर्व्वस्यान्धूधसोः स्यादेव। आपीनोऽन्धुः। आपीनमूधः।

## ह्लादो निष्ठायाम्। ६। ४। ९५।

ह्रस्वः स्यात्। प्रह्लन्नः।

## द्यतिस्यतिमास्थामित्ति। ७। ४। ४०।

एषामिकारोऽन्तादेशः स्यात्तादौ किति। ईत्त्वदत्त्वयोरपवादः। दितः। सितः। मा-माङ्-मेङ्-मितः। स्थितः।

## शाच्छोरन्यतरस्याम्। ७। ४। ४१।

शितः-शातः। छितः-छातः। व्यवस्थितविभाषात्वाद्व्रतविषये श्यतेर्न्नित्यम् संशितं व्रतम् सम्यक् संपादितमित्यर्थः। संशितो ब्राह्मणः व्रतविषयकयत्नवानित्यर्थः।

## दधातेर्हिः । ७ । ४ । ४२ ।

तादौ किति । अभिहितम् । निहितम् ।

## दोदद्घोः । ७ । ४ । ४६ ।

घुसंज्ञकस्य दाइत्यस्य दथ् (८०) स्यात्तादौ किति । चर्त्वम् । दत्तः । घोः किम् दातः । तान्तो वायमादेशः । नचैवं विदत्तमित्यादावुपसर्गस्य दस्तीति दीर्घापत्तिः तकारादौ तद्विधानात् । दान्तो वा धान्तो वा । नच दान्तत्वे निष्ठानत्वम् धान्तत्वे झषस्तथोरिति (७४०पृ०) धत्वं शङ्क्यं सन्निपातपरिभाषाविरोधात् ।

## अच उपसर्गात्तः । ७ । ४ । ४७ ।

अजन्तादुपसर्गात् परस्य दाइत्यस्य घोरचस्तः स्यात्तादौ किति । चर्त्वम् । प्रत्तः । अवत्तः ।

"अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्म्मणि ।
सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यते" ।

चशब्दाद्यथाप्राप्तम् ।

## दस्ति । ६ । ३ । १२४ ।

इगन्तोपसर्गस्य दीर्घः स्याद्दादेशो यस्तकारस्तदादावुत्तरपदे । खरि चेति (६२पृ०) चर्त्वमाश्रयात् (८१) सिद्धम् । नीत्तम् । सूत्तम् ।

---

(८०) तान्ते दोषो दीर्घत्वं स्याद्दान्ते दोषो निष्ठानत्वम् । धान्ते दोषो धत्वप्राप्तिस्तान्तोऽदोषस्तस्मात् थान्त इत्यनुसृत्याह दथ् इति ।

(८१) चर्त्वस्यासिद्धत्वात् दादेशतकारोनास्तीत्यतआह आश्रयादिति अतोदोः (७७पृ०) इत्युक्तं प्रति कर्त्तव्यदित्यर्थः ।

घुमास्थेतीत्त्वम् (उ१९८पृ०)। धेट्-धीतम् (८२)। गीतम्। पीतम्। जनसनेत्यात्त्वम्(उ१२२पृ०)। जातम्। सातम्। खातम्।

## अदो जग्धिर्ल्यप्ति किति। २। ४। ३६।

ल्यबिति लुप्तसप्तमीकम्। अदो जग्धिः स्यात् ल्यपि तादौ किति च। इकार उच्चारणार्थः। धत्वम्। झरो झरि (४३पृ०)। जग्धः। आदिकर्म्मणि क्तः कर्त्तरि च(उ२५४पृ०)प्रकृतः कटं(८३) सः। प्रकृतः कटस्तेन। निष्ठायामण्यदर्थे इति(उ२४६पृ०) दीर्घः। क्षियो दीर्घादिति (उ२४६पृ०) नत्वम्। प्रक्षीणः सः।

## वा क्रोशदैन्ययोः। ६। ४। ६१।

क्षियो निष्ठायाम् दीर्घो वा स्यादाक्रोशे दैन्ये च। क्षीणायुर्भव क्षीतायुर्भव। क्षीणोऽयन्तपस्वी क्षितो वा।

## निनदीभ्यां स्नातेः कौशले। ८। ३। ८९।

आभ्यां स्नातेः सस्य षः स्यात् कौशले गम्ये। निष्णातः शास्त्रेषु। नद्यां स्नातीति नदीष्णः। सुपीति (उ२२४पृ०) कः।

## सूत्रम्प्रतिष्णातम्। ८। ३। ९०।

प्रतेः स्नातेः षत्वम्। प्रतिष्णातं सूत्रम् शुद्धमित्यर्थः। अन्यत्र प्रतिस्नातम्।

(८२) दधातेर्हि (उ३६०पृ०) रित्यत्र लुग्विकरणस्य ग्रहणात् न धेटो ग्रहणं नापि दो दद्घो(उ३६०पृ०)रित्यत्रापि तस्य ग्रहणं घोरिति स्थितेऽपि इति विशेष्य ग्रहणात्।

(८३) प्रकृत इति कटं कर्त्तुमारब्धवानित्यर्थः प्रशब्द आदिकर्म्मद्योतनार्थः।

**कपिष्ठलो गोत्रे। ८। ३। ९१।**

कपिष्ठलो नाम यस्य कापिष्ठलिः पुत्रः। गोत्रे किम् कपीनां स्थलं कपिस्थलम्।

**विकुशमिपरिभ्यः स्थलम्। ८। ३। ९६।**

एभ्यः स्थलस्य सस्य षः स्यात्। विष्ठलम्। कुष्ठलम्। शमिष्ठलम्। परिष्ठलम्।

**गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्य्यतिभ्यश्च। ३। ४। ७२।**

एभ्यः कर्त्तरि क्तः स्यात् भावकर्मणोश्च। गङ्गाङ्गतः। गङ्गाम् प्राप्तः। ग्लानः सः। लक्ष्मीमाश्लिष्टो हरिः। शेषमधिशयितः। वैकुण्ठमधिष्ठितः। शिवमुपासितः। हरिदिनमुपोषितः। राममनुजातः। गरुड़मारूढः। विश्वमनुजीर्णः। पक्षे प्राप्ता गङ्गा तेनेत्यादि।

**क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः। ३। ४। ७६।**

एभ्योऽधिकरणे क्तः स्यात्। चाद्यथाप्राप्तम्। ध्रौव्यं स्थैर्य्यम्।

मुकुन्दस्यासितमिदमिदं यातं रमापतेः।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः (८४)॥

पक्षे आसेरकर्मकत्वात् कर्त्तरि भावे च। आसितो

(८४) अधिकरणवाचिनश्चेति (३०३पृ०) क्तिष्वपि कर्त्तरि षष्ठी।

मुकुन्दः। आसितं तेन। गत्यर्थेभ्यः कर्त्तरि कर्मणि च। रमापतिरिदं यातः। तेनेदं यातम्। भुजेः कर्मणि। अनन्तेनेदम् भुक्तम्। कथम् भुक्ता ब्राह्मणा इति भुक्त(८५) मस्ति एषामिति मत्वर्थीयोऽच्। वर्त्तमाने इत्यधिकृत्य।

**ञीतः क्तः। ३। २। १८७।**

ञि क्ष्विदा। क्ष्विण्णः। ञि इन्धी। इद्धः।

**मतिबुद्धिपूजार्थेभ्यश्च। ३। २। १८८।**

मतिरिहेच्छा बुद्धेः पृथगुपादानात्। राज्ञां मतइष्टः तैरिष्यमाण इत्यर्थः। बुद्धः। विदितः। पूजितः। अर्च्चितः। चकारोऽनुक्तसमुच्चयार्थः। शीलितो रक्षितः क्षान्तः। आक्रुष्टो जुष्ट इत्यादि(८६)।

**नपुंसके भावे क्तः। ३। ३। ११४।**

क्तावत्वविशिष्टे भावे कालसामान्ये क्तः स्यात्। जल्पितम्। शयितम्। हसितम्।

**सुयजोर्ङ्वनिप्। ३। २। १०३।**

(८५) भोजनार्थधातोः कर्त्तरि क्तोदुर्लभइत्याशङ्क्यान्यथाह भुक्तमिति।

(८६) "शीलितोरक्षितः क्षान्त आक्रुष्टो जुष्टइत्यपि।
रुष्टश्च रुषितश्चोभावभिव्याहृतइत्यपि॥
हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ।
कष्टं भविष्यतीत्याहुरमृताः पूर्व्ववत् स्मृताः"॥

सुनोतेर्यजेश्च ङ्वनिप्स्याद्भूते। सुत्वा सुत्वानौ। यज्वा यज्वानौ।

जीर्य्यतेरतृन्। ३। २। १०४।

भूत इत्येव। जरन्। जरन्तौ। जरन्तः। वासरूपन्यायेन निष्ठापि। जीर्णः। जीर्णवान्।

छन्दसि लिट्। ३। २। १०५।

लिटः कानज्वा। ३। २। १०६।

क्वसुश्च। ३। २। १०७।

इह भूतसामान्ये छन्दसि लिट् तस्य विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतम्। कवयस्तु बहुलम्प्रयुञ्जते। "तन्तस्थिवासं नगरोपकण्ठे"। "श्रेयांसि सर्व्वाण्यधिजग्मुषस्ते" इत्यादि।

वस्वेकाजाद्धसाम्। ७। २। ६७।

कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट् नान्येषाम्। एकाच्। आरिवान्। आत्। ददिवान्। जक्षिवान्। एषां किम् बभूवान्।

भाषायां सदवसश्रुवः। ३। २। १०८।

सदादिभ्यो भूतसामान्ये भाषायां लिड्वा स्यात्। तस्य च नित्यं क्वसुः। "निषेदुषीमासनबन्धधीरः"। "अध्युषुषस्तामभवज्जनस्य"। शुश्रुवान्।

**उपेयिवाननाश्वाननूचानश्च। ३। २। १०९।**

एते निपात्यन्ते। उपपूर्वादिणो भाषायामपि भूतमात्रे लिड्वा तस्य नित्यं क्वसुः। इट्। उपेयिवान्। "उपेयुषः स्वामपि मूर्त्तिमग्र्याम्"। उपेयुषी। उपेत्यविवक्षितम्। ईयिवान्। समीयिवान्। नञ्पूर्वादश्नातेः क्वसुरिडभावश्च। "धृतजय धृतेरनाश्रुषइति" भारविः। अनुपूर्वाद्वचेः कर्त्तरि कानच्। वेदस्यानुवचनं कृतवाननूचानः।

**विभाषा गमहनविदविशाम्। ७। २। ६८।**

एभ्यो वसोरिड् वा। जग्मिवान्-जगन्वान्। जघ्निवान्-जघन्वान्। विविदिवान्-विविद्वान्। विविशिवान्-विविश्वान्। विशिना साहचर्याद्विन्दतेर्ग्रहणम्। वेत्तेस्तु विविद्वान्। नेड्वशि कृतीति(७।२।८।२०)इण्निषेधः। दृशेश्च॰। ददृशिवान्-ददृश्वान्।

**लटः शतृशानचावप्रथमासमानाधिकरणे (८७)। ३। २। १२४।**

अप्रथमान्तेन सामानाधिकरण्ये सतीत्यर्थः। शबादि। पचन्तञ्चैत्रम्पश्य।

**आने मुक्। ७। २। ८२।**

(८७) आदेशयोः प्रथमासामानाधिकरण्यपर्युदासात् स्थानिनि लकारे तत्सामानाधिकरण्यं कल्प्यतइति प्रपञ्चितं शब्दार्थरत्नेऽस्माभिः।

अङ्गस्यातो मुगागमः स्यादाने परे। पचमान(८८)श्चैतं पश्य। लडित्यनुवर्त्तमाने पुनर्लड्ग्रहणं अधिकविधानार्थम्। तेन प्रथमासामानाधिकरण्येऽपि(८९)क्वचित्। सन् ब्राह्मणः। माङ्याक्रोशे इति वाच्यम्॰। "मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति"। माङि लुङिति (३।३।१७५ सू॰)प्राप्ते एतद्वचनसामर्थ्यात्लट्।

**सम्बोधने च। ३। २। १२५।**

हे पचन्?। हे पचमान?।

**लक्षणहेत्वोः क्रियायाः। ३। २। १२६।**

क्रियायाः परिचायके हेतौ चार्थे वर्त्तमानाद्धातोर्लटः शतृशानचौ स्तः। शयाना भुञ्जते यवनाः। अर्ज्जयन्वसति। हरिम्पश्यन् मुच्यते। हेतुः फलं कारणञ्च। कृत्यचः (३।२।९८सू॰) प्रपीयमाणः सोमः।

(८८) विक्लित्त्यनुकूलवर्त्तमानव्यापाराश्रयलित्यर्थः पचतीति विग्रहे तु नैवं तत्र क्रियाप्राधान्यात् "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीत्युक्तेः अतएव

'समासतद्धितकृतां यत्किञ्चिदुपदर्शकम्।
गुणप्रधानभावे च तत्र दृष्टोविपर्य्यय" इति

हरिणा सामान्यतो विपर्य्ययोऽभिहितः।

(८९) अधिकारात् च प्रथमान्तार्थ सामानाधिकरण्याभावे क्वचिदित्यर्थः तेन कुर्व्वतोऽपत्यं कौर्व्वतः कुर्व्वतोभक्तिः कुर्व्वद्भक्तिरित्यादौ प्रत्ययोत्तरपदयोरपि सिद्धतीति द्रष्टव्यम्।

ईदासः। ७। २। ८३।

आसः परस्यानस्य ईत् स्यात्। आदेः परस्य (२६पृ०)। आसीनः।

विदेः शतुर्वसुः(९०)। ७। १। ३६।

वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात्। विदन्-विद्वान्। विदुषी।

तौ सत्। ३। २। १२७।

तौ शतृशानचौ सत्संज्ञौ स्तः।

लृटः सद् वा। ३। ३। १४।

व्यवस्थितविभाषेयम्। तेनाप्रथमासामानाधिकरण्ये, प्रत्ययोत्तरपदयोः, सम्बोधने, लक्षणहेत्वोश्च नित्यम्। करिष्यन्तं करिष्यमाणम् पश्य। करिष्यतोऽपत्यं कारिष्यतः। करिष्यद्भक्तिः। हे करिष्यन्। अर्जयिष्यन्वसति। प्रथमासमानाधिकरणेऽपि क्वचित्। करिष्यति करिष्यन्।

पूङ्यजोः शानन्। ३। २। १२८।

वर्त्तमाने। पवमानः। यजमानः।

ताच्छील्यवयोवचनशक्तिषु चानश्। ३। २। १२९।

(९०) स्थानिवत्त्वादेव सिद्धे पुनर्वसोरुगित्करणं वसोः संप्रसारणमित्यत्र (१८७पृ०) सामान्येन क्वसोरपि ग्रहणार्थम्। अतएव "विदुषा त्वया-कृतमिति" सिद्धम्।

एषु द्योत्येषु कर्त्तरि चानश्। भोगं भुञ्जानः। कवचं बिभ्राणः। शत्रुं निघ्नानः।

### इङ्धार्य्योः शत्रकृच्छ्रिणि। ३। २। १३०।

आभ्यां शतृ स्यादकृच्छ्रिणि कर्त्तरि। अधीयन्। धारयन्। अकृच्छ्रिणि किम् कृच्छ्रेणाधीते। धारयति।

### द्विषोऽमित्रे। ३। २। १३१।

द्विषन् शत्रुः।

### सुञो(९१) यज्ञसंयोगे। ३। २। १३२।

सर्व्वे सुन्वन्तः सर्व्वे यजमानाः सत्रिणः।

### अर्हः प्रशंसायाम्। ३। २। १३३।

अर्हन्।

### आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु (९२) ३। २। १३४।

क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलतद्धर्मतत्साधुकारिषु कर्त्तृषु।

(९१) सुनोतेः शतृप्रत्ययः स्यात् यज्ञेन संयुज्यमाने धातोर्वृत्तिश्चेत्। संयोगग्रहणात् प्रधानकर्त्तर्य्येवायं प्रत्ययस्तेन यजमान एव सुन्वन् नान्य इति सूत्रान्तरेणापि नान्यत्र शतृप्रत्यय इति। मनो०

(९२) शीलादीनां त्रयाणां विशेषणत्वेन निर्द्दिष्टैस्त्रिभिस्तच्छब्दैः प्रकृतिभूतो धात्वर्थो निर्द्दिश्यते।

## ट्नन्। ३। २। १३५।

कर्त्ता कटम्।

## अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्। ३। २। १३६।

अलङ्करिष्णुः। निराकरिष्णुः। प्रजनिष्णुः। उत्पचिष्णुः। उत्पतिष्णुः। उन्मदिष्णुः। रोचिष्णुः। अपत्रपिष्णुः। वर्त्तिष्णुः। वर्द्धिष्णुः। सहिष्णुः। चरिष्णुः।

## णेश्छन्दसि। ३। २। १३७।

"वीरुधं पारयिष्णवः"।

## भुवश्च। ३। २। १३८।

छन्दसीत्येव। भविष्णुः। कथन्तर्हि "जगत्प्रभोरप्रभविष्णु वैष्णवमिति"। निरङ्कुशाः कवयः। चकारोऽनुक्तसमुच्चयार्थः भ्राजिष्णुरिति वृत्तिः। एवं क्षयिष्णुः। नैतद्भाष्ये दृष्टम्।

## ग्लाजिस्थश्च क्स्नुः। ३। २। १३९।

छन्दसीति निवृत्तम्। गिदयम् न तु कित् तेन स्थ ईत्त्वम्न। ग्लास्नुः। गित्त्वान्न गुणः। जिष्णुः। स्थास्नुः। पाङ्कनः। स्युकः क्ङितीत्यत्र (७६७पृ०) गकारप्रश्लेषान्नेट्। भूष्णुः। दंशेश्छन्दस्युपसंख्यानम् *। "दंष्णवः पशवः"।

## त्रसिगृधिधृषिक्षिपेः क्नुः। ३। २। १४०।

लघुः। घसुः। घस्मुः। क्षिप्नुः।

शमित्यष्टाभ्यो घिनुण्। ३। २। १४१।

उकार उच्चारणार्थ इति काशिका। अनुबन्ध इति भाष्यम् तेन शमिनितरा शमिनीतरेत्यत्र उगितश्चेति (४६५पृ०) ह्रस्वविकल्पः। नचैवं शमी शमिनावित्यादौ नुम्प्रसङ्गः झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात्। नोदात्तोपदेशस्येति(७२७२पृ०)वृद्धिनिषेधः शमी, दमी, तमी, श्रमी, भ्रमी, क्षमी, क्लमी। प्रमादी। उतपूर्वान्मदेः अलंकृञादि(७३६८पृ०) सूत्रेणेष्णुजुक्तो वासरूपविधिना घिनुणपि। उन्मादी। ताच्छीलिकेषु वासरूपविधिर्नास्तीति तु प्रायिकम्।

सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च। ३। २। १४२।

घिनुण् स्यात्। सम्पर्की। अनुरोधी। आयामी। आयासी। परिसारी। संसर्गी। परिदेवी। संज्वारी। परिक्षेपी। परिराटी। परिवादी। परिदाही। परिमोही। दोषी। द्वेषी। द्रोही। दोही। योगी। आक्रीड़ी। विवेकी। त्यागी। रागी। भागी। अतिचारी। अपचारी। आमोषी। अभ्याघाती।

वौ कषलसकत्थस्रम्भः। ३। २। १४३।

विकाषी। विलासी। विकत्थी। विस्रम्भी।

अपे च लषः। ३। २। १४४।

चाद्वौ। अपलाषी। विलासी।

प्रे लपसृद्रुमथवदवसः। ३। २। १४५।

प्रलापी। प्रसारी। प्रद्रावी। प्रमाथी। प्रवादी। प्रवासी।

निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरट-परिवादिव्याभाषासूयो वुञ्। ३। २। १४६।

पञ्चम्यर्थे प्रथमा। एभ्योवुञ् स्यात्। निन्दकः। हिंसक इत्यादि। ण्वुला सिद्धे वुञ्वचनं ज्ञापकम् तच्छीलादिषु वासरूपन्यायेन तृजादयो नेति (८३)।

देविक्रुशोश्चोपसर्गे। ३। २। १४७।

आदेवकः। आक्रोशकः। उपसर्गे किम् देवयिता। क्रोष्टा।

चलनशब्दार्थादकर्मकाद्युच्। ३। २। १४८।

चलनार्थाच्छब्दार्थाच्च युच् स्यात्। चलनः। चोपनः। कम्पनः। शब्दनः। रवणः। अकर्मकात् किम् पठिता विद्याम्।

अनुदात्तेतश्च हलादेः। ३। २। १४९।

(८३) नेदं ण्वुल्विषयकमेव ज्ञापकं किन्तु प्रत्ययमात्रविषयमिति बोध्यम्

अकर्मकाद्युच् स्यात्। वर्त्तनः। वर्द्धनः। अनुदात्तेतः किम् भविता। हलादेः किम् एधिता। अकर्मकात् किम् वसिता वस्त्रम्।

जुचंक्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः। ३।२।१५०।

जु इति सौत्रो धातुर्गतौ वेगे च। जवनः। चंक्रमणः। दन्द्रमणः। सरणः। पूर्व्वेण (९४) सिद्धे पदग्रहणं लषपतपदेत्युकञा (७२७२४०) बाधा मा भूदिति तेन ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्तीति (९५) तेनालंकृञस्तृन् न।

क्रुधमण्डार्थेभ्यश्च। ३।२।१५१।

क्रोधनः। रोषणः। मण्डनः। भूषणः।

न यः। ३।२।१५२।

यकारान्ताद्युच् न स्यात्। क्नूयिता। क्ष्मायिता।

सूददीपदीक्षश्च। ३।२।१५३।

युच् न स्यात्। सूदिता। दीपिता। दीक्षिता। नमिकम्पीति (७२७५९०)रेण युचो बाधे सिद्धे दीपेर्ग्रहणं ज्ञापयति ताच्छीलि-

(९४) पद्यतेरकर्मकत्वादनुदात्तेत्त्वाद्धलादित्वाच्चानुदात्तेतइत्यनेन (७२७१४९) प्राप्ते इत्यर्थः।

(९५) नन्द्यादिसूत्रे हि ताच्छीलादिषु वासरूपविधिना तृजादयो नेति भाष्ये साधितमिह तु ताच्छीलिकेषु परस्परं नेति भेद इति भावः।

केषु वासरूपविधिर्नास्तीति प्रायिकमिति। तेन कम्त्रा कमना युवतिः। कम्प्रा कम्पना शाखा। यदि सूदेर्युच् न कथम्मधु-सूदनः, नन्द्यादिः (उ३१७पृ०)।

लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्।
३।२।१५४।

लाषुकः। पातुक इत्यादि।

जल्पभिक्षकुट्टलुण्टवृङः षाकन्। ३।२।१५५।

जल्पाकः। भिक्षाकः। कुट्टाकः। लुण्टाकः। वराकः वराकी।

प्रजोरिनिः। ३।२।१५६।

प्रजवी प्रजविनौ प्रजविनः।

जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च।
३।२।१५७।

जयी। दरी। क्षयी। विश्रयी। अत्ययी। वमी। अव्यथी। अभ्यमी। परिभवी। प्रसवी।

स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्
३।२।१५८।

आद्यास्त्रयश्चुरादावदन्ताः। स्पृहयालुः। गृहयालुः। पत-यालुः। दयालुः। निद्रालुः। तत्पूर्वो द्रा तदो नान्तत्व न्निपात्यते। तन्द्रालुः। शीङो वाच्यः *। शयालुः।

**दाधेट्सिशदसदो रुः। ३। २। १५९।**

दारुः। धारुः। सेरुः। शद्रुः। सद्रुः।

**सृघस्यदः क्मरच्। ३। २। १६०।**

सृमरः। घस्मरः। अद्मरः।

**भञ्जभासमिदो घुरच्। ३। २। १६१।**

भङ्गुरः (९७)। भासुरः। मेदुरः।

**विदिभिदिच्छिदेः कुरच्। ३। २। १६२।**

विदुरः (९६)। भिदुरम्। छिदुरम्।

**इण्नशजिसर्त्तिभ्यः क्वरप्। ३। २। १६३।**

इत्वरः इत्वरी। नश्वरः। जित्वरः। सृत्वरः।

**गत्वरश्च। ३। २। १६४।**

गमेरनुनासिकलोपोऽपि निपात्यते। गत्वरी।

**जागुरूकः। ३। २। १६५।**

जागर्त्तेरूकः स्यात्। जागरूकः।

**यजजपदशां यङः। ३। २। १६६।**

(९६) अभिधानस्वाभाव्यात् भञ्जेः कर्म्मकर्त्तर्य्येवायं घुरच्प्रत्ययः। तत्त्व०

(९७) विदीत्यादिसूत्रे कुरच् मुख्यकर्त्तर्य्यपि भवति "प्रियतमाय ददुर्गतम-त्सरच्छिदुरयादुरयाचितमङ्गना" इत्यादि माघप्रयोगात्। तत्त्व०

एभ्यो यङन्तेभ्य ऊकः स्यात्। दशामिति भाविना नलोपेन निर्देशः। यायजूकः। जञ्जपूकः। दन्दशूकः।

**नमिकम्पिस्म्यजसकमहिंसदीपो रः। ३। २। १६७।**

नम्रः। कम्प्रः। स्मेरः। जसिर्नञ्पूर्वकः क्रियासातत्ये वर्त्तते। अजस्रं सन्ततमित्यर्थः। कम्रः। हिंस्रः। दीप्रः।

**सनाशंसभिक्ष उः। ३। २। १६८।**

चिकीर्षुः। आशंसुः। भिक्षुः।

**विन्दुरिच्छुः (९८)। ३। २। १६९।**

वेत्तेर्नुम् इषेश्छत्वञ्च निपात्यते। वेत्ति तच्छीलो विन्दुः। इच्छति इच्छुः।

**क्याच्छन्दसि (९९)। ३। २। १७०।**

"देवान् जिगाति सुम्नयुः" (१००)।

**आदृगमहनजनः किकिनौ लिट् च। ३। २। १७१।**

---

(९८) विद ज्ञाने इत्यस्यैवेह ग्रहणमेवमिच्छार्थकस्यैवेहेषेर्ग्रहणम्।

(९९) क्यच् क्यष् क्यङ् एतेषां सामान्यग्रहणम् क्यान्ताद्धातोश्छन्दोविषये उप्रत्ययः स्यादित्यर्थः।

(१००) सुम्नशब्दात् क्यजन्तात् न च्छन्दस्यपुत्रस्येति(७५.२४पृ०)निषेधात् क्यचि चेति(७२२०पृ०)ईत्त्वम्, अकृत्सार्वधातुकयोरिति (७५१पृ०) दीर्घश्च न भवतीति द्रष्टव्यम्।

आदन्तादृदन्ताद्(१०१)गमादिभ्यश्च किकिनौ स्तश्छन्दसि तौ च लिड्वत्। पपिः सोमम्। ददिर्गाः। बभ्रिर्वज्रम्। जग्मिर्युवा। "जघ्निर्वृत्रममित्रयुम्"। जघ्निः। भाषायां धाञ्कृसृगमिजनिनमिभ्यः *। दधिः। चक्रिः। सस्रिः। जग्मिः। जज्ञिः। नेमिः(१०२)। सासहिवावहिचाचलिपापतीनामुपसंख्यानम्*। यङन्तेभ्यः सहेत्यादिभ्यः किकिनौ पतेर्नीगमावश्च निपात्यते।

## स्वपितृषोर्नजिङ्।३।२।१७२।

स्वप्नक्। तृष्णक् तृष्णजौ तृष्णजः। धृषेश्चेति वाच्यमिति * काशिकादौ। धृष्णक्।

## शॄवन्द्योरारुः।३।२।१७३।

शरारुः। वन्दारुः।

## भियः क्रुक्लुकनौ।३।२।१७४।

भीरुः। भीलुकः। क्रुकन्नपि वाच्यः *। भीरुकः।

## स्थेशभासपिसकसो वरच्।३।२।१७५।

स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। कस्वरः।

(१०१) ऋदिति ऋवर्णपरत्वाशङ्कायाम् आदिति ऋकारस्य तात्परत्वादाह ऋदन्तादिति। यथा च तात्परस्यापि तत्कालसंज्ञा तथोक्तं(१८पृ०)प्राक्
(१०२) लिङ्वद्भावात् नमेः एत्वाभ्यासलोपाव् सिद्धम्।

**यश्च यङः। ३। २। १७६।**

यातेर्यङन्ताद्वरच् स्यात्। अतो लोपः (७५७ सू०)। तस्याच परस्मिन्निति (३४ सू०) स्थानिवद्भावे प्राप्ते पदस्य चरमावयवे द्विर्वचनादौ च कर्त्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् ✻ तस्य यलोपप्रति स्थानिवद्भावनिषेधात् लोपो व्योरिति(४२१सू०) यलोपः अल्लोपस्य स्थानिवत्त्वमाश्रित्य आतोलोपे वरे लुप्तन्न स्थानिवत्। यायावरः।

**भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप्। ३। २। १७७।**

विभ्राट्। भाः भासौ। धूः धुरौ। विद्युत्। ऊर्क्। पूः पुरौ। दृशिग्रहणस्यापकर्षात् जवतेर्दीर्घः (१०२)। जूः जुवौ जवः। ग्रावशब्दस्य धातुना समासः सूत्रे निपात्यते ततः क्विप्। ग्रावस्तुत्।

**अन्येभ्योऽपि दृश्यते। ३। २। १७८।**

क्विप्। छित्। भित्। दृशिग्रहणम् विध्यन्तरोपसंग्रहार्थम्। क्वचिद्दीर्घः क्वचिदसम्प्रसारणं क्वचिद्द्वे क्वचिद्ध्रस्वः। तथाच वार्त्तिकम्। क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च *। क्विब्वचीत्यादिना (७२९८सू०)उणादिसूत्रेण केषाञ्चित् सिद्धेतच्छीलादौ तृणा बाधा मा भूदिति वार्त्तिके

✻ न पदान्तद्विर्वचनेत्यादि (३५सू०) सूत्रेणेति शेषः।

(१०२) उत्तरसूत्रे दृशिग्रहणस्य विध्यन्तरविशेषसमर्पकतायावक्ष्यमाणतयाऽत्रापि तदपकर्षाद्दीर्घ इत्याह जवतेरिति।

ग्रहणम् । वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौति आयतस्तूः । कटम्प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिं श्रीः । द्युतिगमिजुहोतीनां द्वे च * । दृशिग्रहणादभ्याससंज्ञा । दिद्युत् । जगत् । जुहोतेर्दीर्घश्च* । जुहूः । दॄ भये । अस्य ह्रस्वश्च* । दीर्य्यति । ददृत् । ध्यायतेः सम्प्रसारणञ्च* । धीः ।

**भुवः संज्ञान्तरयोः । ३ । २ । १७९ ।**

मित्रभूर्नाम कश्चित् । धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः ।

**विप्रसंभ्यो ड्वसंज्ञायाम् । ३ । २ । १८० ।**

एभ्यो भुवो डुःस्यान्नतु संज्ञायाम् । विभुर्व्यापकः । प्रभुः स्वामी । सम्भुर्जनिता । संज्ञायान्तु विभूर्नाम कश्चित् । मितद्र्वादिभ्य उपसंख्यानम्* । मितन्द्रवतीति मितद्रुः । शतद्रुः । शम्भुः । अन्तर्भावितण्यर्थोऽत्र भवतिः ।

**धः कर्म्मणि ष्ट्रन् । ३ । २ । १८१ ।**

धेटोधाञश्च कर्म्मण्यर्थे ष्ट्रन् स्यात् । धात्री जनन्यामलकी वसुमत्युपमातृषु ।

**दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे । ३ । २ । १८२ ।**

दाबादेः ष्ट्रन् स्यात् करणेऽर्थे । दायन्त्यनेन दात्रम् । नेत्रम् ।

**तितुत्रतथसिसुसरकसेषु च । ७ । २ । ९ ।**

एषां (१०४) दशानां कृत्प्रत्ययानामिट् न स्यात्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्त्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्त्रम्। दंष्ट्रा। नद्ध्री।

हलसूकरयोः पुवः। ३। २। १८३।

पूङ्पूञोः करणे ष्ट्रन् स्यात् तच्चेत्करणं हलसूकरयोरवयवः। हलस्य सूकरस्य वा पोत्रम् मुखमित्यर्थः।

अर्त्तिलूधूसूखनसहचर इत्रः। ३। २। १८४।

अरित्रम्। लवित्रम्। धवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्।

पुवः संज्ञायाम्। ३। २। १८५।

पवित्रम् येनाज्यमुत्पूयते यज्ञानामिकावेष्टनम्।

कर्त्तरि चर्षिदेवतयोः। ३। २। १८६।

पुव इत्रः स्यात् ऋषौ करणे देवतायां कर्त्तरि। ऋषिर्वेदमन्त्रः तदुक्तमृषिणेति दर्शनात्। पूयतेऽनेनेति पवित्रम्। देवतायान्तु अग्निः पवित्रं स मा पुनातु।

(१०४) ति तुन् त्रन् तन् थन् क्सि सुच् क्सरन् कन् स इत्येषामित्यर्थः तत्र ति इति क्तिक्तिचोर्ग्रहणम् क्तिन् दीपी दीप्तिः। क्तिच् तनु तन्तिः। तुन् सच सक्तुः। त्रन् पत पत्त्रम् तन तन्त्रम्। तन् उणादिक एव न निष्ठातस्तेन हसितादिसिद्धिः। हस हस्तः पुञ् पोतः। क्थन् कुष कोष्ठम्। क्सिः कुष कुक्षिः। सुच् इष इक्षुः। क्सरन् अश अक्षरः। कन् शल शल्कः। स वद वत्स इत्यादौ नेडित्युदाहार्यम्।

## अथोणादयः (१)।

कृवापाजिमिस्वदिसाध्यशूभ्य उण् १। करोतीति कारुः शिल्पी कारकश्च। आतोयुक् (उ२७०पृ०)। वातीति वायुः। पायुर्गुदम्। जयत्यभिभवति रोगान् जायुरौषधम्। मिनोति प्रक्षिपति देहे उष्माणमिति मायुः पित्तम्। स्वादुः। साध्नोति परकार्य्यं साधुः। अश्नुते आशु शीघ्रम्। 'आशुर्व्रीहिः पाटलः स्यात्'। छन्दसीणः २ (२)। 'मा न आयौ'। दृसनिजनिचरिचटिभ्यो ञुण् ३। दीर्य्यत इति दारु। "स्नुः प्रस्थः सानुरस्त्रियाम्"। जानु जानुनी। इह जनिवध्योश्चेति (उ१३६पृ०) न निषेधः अनुबन्धद्वयसामर्थ्यात् (३)। चारु रम्यम्। चाटु प्रियं वाक्यम्। मृगय्वादित्वात् (उ३८४पृ०) कुप्रत्यये चटु इत्यपि। किञ्जरयोः श्रिणः (४) ४। किं शृणातीति किंशारुः शस्यशूकम् वाणश्च। जरामेति जरायुः। 'गर्भाशयो जरायुः स्यात्'। त्रो रश्च लः ५। तरन्त्यनेन वर्णा इति तालुः। कृके वचः कश्च ६। कृकेण गलेन वक्तीति कृकवाकुः। "कृकवाकुर्म्मयूरे च सरटे चरणायुधे" इति विश्वः। भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः ७।

---

(१) उणादयो बहुलमिति (उ४३१पृ०) सूत्रकृतोक्तं तत्र प्रकृतिविशेषेभ्यः प्रत्ययविशेषा शाकटायनेन पञ्चपाद्या सपादशतत्रयमिता दर्शिता-स्तत्प्रकरणारम्भाय प्रतिजानीते अथोणादय इति।

(२) बहुलवचनाद्भाषायामपि तेन एतीत्यायुः जटा आयुर्यस्येति जटायुरिति एतेर्णिच्चेति (उ४०२पृ०) सूत्रे उसिप्रत्यये तु आयुःशब्दः सान्तः।

(३) वस्तुतः प्रसंभ्यां जानुनोर्ज्ञुरिति (४२०पृ०) सूत्रनिर्देशज्ञापकात् न वृद्धिनिषेधः।

(४) किमि उपपदे शृणातेः जरोपपदे इणश्च ञुण् स्यादित्यर्थः।

भरति बिभर्त्ति वा भरुः हरिर्हरश्च। म्रियन्तेऽस्मिन् भूतानि मरुर्निर्ज्जलदेशः। शेते शयुः अजगरः। तरुर्वृक्षः (५)। चरन्ति भक्षयन्ति देवता द्रुममिति चरुः। त्सरुः खड्गादिमुष्टिः। तनु स्वल्पम्। तन्यते कर्म्मपाशोऽनया तनुः शरीरम्। 'स्त्रियां मूर्त्तिस्तनुस्तनूः'। धनुः शस्त्रविशेषः। 'धनुर्नी च धनुर्व्विदुः'। 'धनुरिवाजनि वक्र'इति श्रीहर्षः। मयुः किन्नरः। मद्गुः(६)। पानीयकाकिकेति रभसः न्यङ्क्वादित्वात्(उ३०७पृ०) कुत्वं जश्त्वेन सस्य दः। अणश्च ८। 'लवलेशकणाणवः'। चात्कटिवटिभ्याञ्च। कटुः। वटति वदतीति वटुः। धान्ये नित् ६। धान्ये वाच्येऽण उप्रत्ययः स्यात् स च नित्। नित्त्वादाद्युदात्तः। 'प्रियङ्गवश्चाणवश्च मे'। 'व्रीहिभेदस्त्वणुः पुमान्'। निरूढ़णां फलिपाटीत्यादि(उ३८२पृ०) १८सूत्रमभिव्याप्य सम्बध्यते। शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमणिभ्यश्च १०। शृणातीति शरुरायुधकोपयोः। स्वर्य्यन्ते प्राणिनं अनेन स्वरुर्व्वज्रम्। स्नेहुर्व्याधिः चन्द्र इत्यन्ये। त्रपु (७) सीसम्। पुंसि 'भूम्न्यसवः प्राणाः'। 'वसुर्द्देऽग्नौ योक्त्रेऽशौ वसु तोये धने मणौ'। हनुर्वक्त्रैकदेशः। क्लेशश्चन्द्रः। बन्धुः (८)। मनुः। चात् विदि अवयवे विन्दुः। स्यन्देः सम्प्रसारणन्धश्च ११। 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रिया'मित्यमरः।

---

(५) तरन्ति रोपका नरकमनेनेति तरुरिति।

(६) भक्षार्थं पानीयं मज्जतीति मद्गुः पक्षिविशेषः (पानकौड़ीति) प्रसिद्धः गडि वदनैकदेशे इत्यतोऽपि उरिलुक्ष्वनदत्तस्तेन गण्डुः।

(७) अग्निं दृष्ट्वा त्रपते लज्जते आशुद्रवीभावादिति त्रपु सीसम्।

(८) स्नेहं बध्नातीति बन्धुः।

उन्देरिच्चादेः १२ । उनत्ति इन्दुः । ईषेः किच्च १३ । ईषेरुः स्यात् स च कित् आदेरिकारादेशश्च । ईषते हिनस्ति इषुः शरः । इषुद्वयोः । स्कन्देः सलोपश्च १४ । कन्दुः । सृजेरसुम् च १५ । चात् सलोपउप्रत्ययश्च । रज्जुः । कृतेराद्यन्तविपर्ययश्च १६ । ककारतकारयोर्विनिमयः । तर्कुः सूत्रवेष्टनम् । नावञ्चेः १७ । न्यङ्क्वादित्वात् (७२०७पृ०)कुत्वम् । नियतमञ्चति न्यङ्कुर्मृगः । फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च १८ । फलेर्गुक् फल्गुः । पाटेः पटिः पाटयतीति पटुः । नम्यतेऽनेन नाकुर्वल्मीकम् । मन्यते इति मधु । जायते इति जतु । वलेर्गुक् च १९ । वल सम्वरणे वल्गुः । शः कित्सन्वच्च २० । श्यतेरुः स्यात् स च कित् सन्वच्च । शिशुर्बालः । यो द्वे च २१ । ययुरश्वोऽश्वमेधीयः' । सन्वदिति प्रकृते द्वे ग्रहणमित्त्वनिवृत्त्यर्थम् । कुर्भ्रश्च २२ । 'बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ' । चादन्यतोऽपि । चक्रुः कर्त्ता । जघ्नुर्हन्ता पपुः पालकः । पृभिदिव्यधिगृधिधृषिहृषिभ्यः २३ । कुः स्यात् । पुरुः । भिनत्ति भिदुर्वज्रम् । ग्रहिज्येति (७०१०६पृ०) सम्प्रसारणम् । विरहिणं विध्यति विधुः । 'विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे' । गृधुः कामः । धृषुर्दक्षः । कृग्रोरुच्च २४ । करोतीति कुरुः । गृणातीति गुरुः । अपदुःसुषु स्थः २५ । सुषमादिषु चेति (४७४पृ०) षत्वम् । अपष्ठु प्रतिकूलम् । दुष्ठु । सुष्ठु । रपेरिच्चोपधायाः २६ । अनिष्टं रपतीति रिपुः । अर्जिदृशिकम्यमिपंशिबाधामृजिपशितुग्धुग्दीर्घहकाराश्च २७ । अर्जयति गुणान् ऋजुः । सर्वानविशेषेण पश्यतीति पशुः ।

कन्तुः (९)। अन्धुः कूपः। 'पांशुर्नो न द्वयो रजः'। 'तालव्या अपि दन्त्याश्च संवञ्चकरपांसवः'। बाधते इति बाहुः 'बाहुः स्त्रीपुंसयोर्भुजा'। प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च २८। तयाणां कुः सम्प्रसारणं भ्रस्जेः सलोपश्च। पृथुः। मृदुः। न्यङ्क्वादित्वात्(उ२०७१९०)कुत्वम्। भ्रज्जति तपसा भृगुः। लङ्घिबंह्योर्नलोपश्च २९। लघुः। बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते *। रघुर्नृपभेदः। बहुः। ऊर्णोतेर्नुलोपश्च ३०। ऊरुः सक्थि। महति ह्रस्वश्च ३१। उरु महत्। श्लिषेः कश्च ३२। श्लिष्यतीति श्लिकुः भृत्यः उद्यतं ज्योतिश्च। आङ्परयोः खनिशृभ्यां डिच्च ३३। आ खनतीत्याखुः। परं शृणातीति परशुः। पृषोदरादित्वादकारलोपात् पर्शुरपि। हरिमितयोर्द्रुवः ३४। द्रु गतौ अस्मात् हरिमितयोरुपपदयोः कुः स च डित्। हरिभिर्द्रूयते हरिद्रुर्वृक्षः। मितन्द्रवति मितद्रुः समुद्रः। शते च ३५। शतधा द्रवति शतद्रुः। बाहुलात् केवलादपि। द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च। तद्वान्द्रुमः। खरुशङ्कुपीयुनीलङ्कुलिगु ३६। पञ्चैते कुप्रत्ययान्ता निपात्यन्ते। खनतेरेफश्चान्तादेशः। खरुः कामः क्रूरो मूर्खोऽश्वश्च। 'शङ्कुर्ना कीलशल्ययोः'। पिबतेरीत्वं युगागमश्च। पीयुर्वायसः कालः सुवर्णञ्च। निपूर्वाल्लगि गतावस्मात् कुर्नेर्दीर्घश्च नीलङ्गुः कृमिविशेषः शृगालश्च।

(९) कन्तुः कन्दर्पः। कमिमनीति सूत्रेण (उ३८७१९०) तुना सिद्धावपि स्वरार्थमत्र ग्रहणम्।

* एतच्च वार्त्तिकं कपो रोल इति (८२११८)सूत्रस्थम्।

नीलाङ्गुरिति पाठान्तरन्तत्र धातोरपि दीर्घः। लग सङ्गे अस्य अत इत्वञ्च लगतीति लिगु चित्तम् लिगुर्मूर्खः। मृगय्वादयश्च ३७ (१०)। एते कुप्रत्ययान्ता निपात्यन्ते। मृगं यातीति मृगयुर्व्याधः। देवयुर्धार्म्मिकः। मित्रयुर्लोकयात्राभिज्ञः। आकृतिगणोऽयम्। मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ३८। मन्दुरा वाजिशाला। वाशुरा रात्रिः। मथुरा। चतुरः। चङ्कुरो रथः। अङ्कुरः। खर्जूरादित्वात् (उ४।८८पृ०) अङ्कूरोऽपि। व्यथेः सम्प्रसारणं किच्च ३९। 'विथुरश्चोररक्षसोः। मकुरदर्दुरौ ४०। मकुरो दर्पणः। बाहुलकान्मुकुरोऽपि। दृ विदारणे धातोर्द्विर्वचनमभ्यासस्य रुक् टिलोपश्च। 'दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः। दर्दुरा चण्डिकायां स्याद्ग्रामजाले च दर्दुरमिति विश्वः। मद्गुरादयश्च ४१ (११)। उरजन्ता निपात्यन्ते। माद्यतेर्गुक् मद्गुरो मत्स्यभेदः कर्ब वर्णे रुगागमः। 'कर्बुरः श्वेतरक्षसोः' बभ्नातेः खर्जूरादित्वात् (उ४।८८पृ०) ऊरोपि। 'बन्धूरबन्धुरौ स्यातान्नम्रसुन्दरयोस्त्रिषु इतिरन्तिदेवः। कोकतेर्वा कुक्। कुक्कुरः-कुकुरः। असेरुरन् ४२। असुरः। प्रज्ञाद्यण् (७२६पृ०)। आसुरः। मसेश्च ४३। पञ्चमे पादे मसेरूर-

(१०) मृगयुः देवयुः मित्रयुः कुमारयुः 'राजपुत्रः' अध्वर्युर्याजकः। कुहुः कुहूरमावास्याचन्द्रः पाण्डुः श्वेतः राजभेदश्च पीलुर्मतङ्गजः वृक्षभेदश्च मञ्जु शोभनं मृकण्डुः ऋषिभेदः निघण्टुः कोषभेदः पलाण्डुर्मूलभेदः ककेरटुः करेटुः पक्षिभेदः डमरुर्वाद्यभेदः। आकृतिगणत्वादन्येऽप्यूह्याः।

(११) मद्गुरादेराकृतिगणत्वात् आतुरश्वशुरनकुलवागुरादीनां सिद्धिः।

म्मिति (उ० ४२८४०) वक्ष्यते । " मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः । मसूरी पादरोगे स्यादुपधाने पुनः पुमान् । मसूरमसुरौ च द्वाविति,, विश्वः । शावशेराप्तौ (१२) ४४ । शु इति आश्वर्थे । श्वशुरः (१३) । 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयो'-रित्यमरः । अविमह्योष्टिषच् ४५ । अविषः (१४) । महिषः । अमेर्दीर्घश्च ४६ । 'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि' । रुहेर्वृद्धिश्च ४७ 'रङ्कुशंबररौहिषाः' 'रौहिषो मृगभेदे स्याद्रौ-हिषं च तृणं मत'मिति संसारावर्त्तः । तवेर्णिद्वा ४८ तवेति सौत्रो धातुः । तविषताविषावब्धौ स्वर्गे च । स्त्रियां तविषी ताविषी नदी देवकन्या भूमिश्च । तविषी बलमिति वेदभाष्यम् । नञि व्यथेः ४९ । 'अव्यथिषोऽब्धिसूर्ययोः । अव्यथिषी धरा-रात्र्योः । किलेर्बुक् च ५० । किल्बिषम् । इषिमदिमुदिखिदि-छिदिभिदिमन्दिचण्डितिमिमिहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् ५१ । इषिरोऽग्निः । मदिरा सुरा । 'मुदिरः कामुका-ब्दयोरिति' विश्वमेदिन्यौ । खिदिरश्चन्द्रः । 'छिदिरोऽसिकुठा-रयोः' । भिदिरं वज्रम् । मन्दिरम् गृहम् स्त्रियामपि । 'मन्दि-रम्मन्दिरापि स्यादिति' विश्वः । 'चन्दिरौ चन्द्रहस्तिनौ' ।

(१२) आश्वर्थे शौ उपपदे आप्तौ गम्यमानायाम् अशूङ् व्याप्तावित्य-स्मादुरन् स्यादित्यर्थः ।

(१३) आशु आप्तव्यः उत्पत्तिं विनापि वैवाहिकसंबन्धात् संबन्धितया प्राप्तव्य इति श्वशुरशब्दार्थः ।

(१४) अवन्ति प्रीणयन्ति मह्योऽटमुमिति समुद्रोऽविषः । मह्यन्ते देवा अने-नेति महिषः पशुभेदः ।

तिमिरन्तमोऽक्षिरोगश्च। मिहिरः सूर्यः। 'मुहिरः काम्यसभ्ययोः'। मुचिरो दाता। रुचिरम्। रुधिरम्। बधिरः। शुष शोषणे शुषिरञ्छिद्रम् शुष्कमित्यन्ये। अशेर्णित् ५२। 'आशिरो वह्निरक्षसोः'। अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ५३। अजेर्वीभावाभावः। अजिरमङ्गणम्। शशेरुपधाया इत्वम्। "शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्"। श्रथ मोचने उपधाया इत्वं रेफलोपः प्रत्ययरेफस्य लत्वञ्च। शिथिलम्। स्थास्फायोष्टिलोपः। स्थिरन्निश्चलम्। स्फिरं प्रभूतम्। तिष्ठतेर्वुक् ह्रस्वत्वञ्च। स्थविरः। खदिरः। बाहुलकात् शीङो वुक् ह्रस्वत्वञ्च। शिविरम्। सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् ५४। सलति गच्छति निम्नमिति सलिलम्। कलिलः। अनिलः। महिला। पृषोदरादित्वान्महेलादि। भड इति सौत्रो धातुः। 'भडिलौ शूरसेवकौ'। भण्डिलो दूतः कल्याणञ्च। शण्डिलो मुनिः। पिण्डिलो गणकः। तुण्डिलो मुखरः। कोकिलः। भविलो भव्यः। बाहुलकात् कुटिलः। कमेः पश्च ५५। कपिलः। गुपादिभ्यः (१५) कित् ५६। गुपिलो राजा। तिजिलो निशाकरः गुहिलं वनम्। मिथिलादय(१६)श्च ५७। मथ्नन्त्यत्र रिपवो मिथिला

---

(१५) गुपू रक्षणे तिज निशाने पूज पूजायां शुष शोषणे देट् देवने गुहू संवरणे इति गुपादयः।

(१६) मिथिला नगरी गतिला वेत्रलता तकिलौषधिः चण्डिला नदी पथिलः पथिकः मिथिलादि।

नगरी। पथिलः पथिकः। पतिकठिकुठिगड़िगुड़िदंशिभ्य एरक् ५८। पतेरः पक्षी गन्ता च। कठेरः कृच्छ्रजीवी। कुठेरः पर्णाशः। बाहुलकान्नत्वं। गनेरो मेघः। गुड़ेरो गुड़कः। दंशेरो हिंस्रः। कुम्बेर्नलोपश्च ५९। कुबेरः। शदेस्त च ६०। शतेरः शत्रुः। मूलेरादयः ६१। एरगन्ता निपात्यन्ते। मूलेरो जटा। गुधेरो गोप्ता। गुहेरो लोहघातकः। मुहेरो मूर्खः। कबेरोतच् पश्च ६२। कपोतः पक्षी। भातेर्डवतुप् ६३। भातीति भवान्। कठिचकिभ्यामोरन् ६४। कठोरः। चकोरः। किशोरादय(१७)श्च ६५। किंपूर्वस्य शृणातेष्टिलोपः। किमोऽन्त्यलोपः। किशोरः अश्वशावः। सहोरः साधुः। कपिगड़िगण्डिकटिपटिभ्य ओलच् ६६। कपीति निर्देशान्न लोपः। कपोलः। गडोलगण्डोलौ गुडकपर्यायौ। कटोलः कटुः। पटोलः। मीनातेरूरन् ६७। मयूरः। स्यन्देः संप्रसारणञ्च ६८। सिन्दूरम्। सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ६९। सिनोतीति सेतुः। तितुत्रेति (उ० २७८ पृ०) नेट्। तन्तुः। गन्तुः। मस्तु दधिमण्डम्। सच्यत इति सक्तुः। अर्द्धर्चादिः। ज्वरत्वरेत्यूठ् (उ० २१८पृ०) तत्र क्ङितीत्यनुवर्त्तत इति मते तु बाहुलकात् ओतुर्विड़ालः। धातुः। क्रोष्टा। पः किच्च ७०। पिबतीति 'पितुर्वह्नौ दिवाकरे'। अर्त्तेश्च तुः ७१ अर्त्तेस्तुः स्यात् स च कित्। 'ऋतुः स्त्रीपुष्पकालयोः'। कमिमनिजनिगाभायाहिभ्यश्च ७२। एभ्यस्तुः स्यात्। 'कन्तुः कन्द

(१७) 'गौरोऽरुणे सिते पीते विशुद्धे चाभिधेयवदित्यर्थकः गौरोण्यादिपदं प्राहुः।

र्पचित्तयोः'। मन्तुरपराधः। जन्तुः प्राणी। 'गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च'। मातुरादित्यः। 'यातुरध्वगकालयोः'। रक्षसि क्लीबः। हेतुः कारणम्। चायः किः ७३। 'केतुर्ग्रह पताकयोः'। आप्नोतेर्ह्रस्वश्च ७४। अप्तुः शरीरम्॥ वसेस्तुन्। ७५। वस्तु। अगारे णिच्च ७६। 'वेश्मभूर्वास्तुरस्त्रियाम्'। कृञः क्तुः ७७। क्रतुर्यज्ञः। एधिवह्योश्चतुः (१८) ७८। एधतुः पुरुषः। वहतुरनड्वान्। जीवेरातुः ७९। 'जीवातुरस्त्रिया भक्ते जीविते जीवनौषधे'। आतृकन्वृद्धिश्च ८०। जीवेरित्येव। जैवातृकस्त्विन्दुभेकभिषगायुष्मत्कृषीवले'। कृषिचमितनिधनि-सर्जिखर्जिभ्य ऊः ८१। 'कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियाम्मता,। चमूः। तनूः। धनूः शस्त्रम्। सर्ज अर्जने सर्जू-र्वणिक्। खर्ज व्यथने खर्जूः पामा। मृजेर्गुणश्च ८२ (१९)। मर्जूः शुद्धिकृत्। वहेर्धश्च ८३। 'वधूर्जायास्नुषास्त्रीषु'। कषेः छश्च ८४। कच्छूः पामा। णित्कसिपद्यर्तेः ८५। कासूः शक्तिः। पादूश्चरणधारणी। आरूः पिङ्गलः। अणो डश्च ८६। आडू-र्जलप्लवद्रव्यम्। नञि लम्बेर्नलोपश्च ८७। 'तुम्ब्यलाबूरुभे समे' इत्यमरः। के श्र एरङ् चास्य ८८। कशब्द उपपदे शृणाते-रूः स्यादेरङ् चादेशः। 'कशेरूस्तृणकन्दे स्त्री'। बाहुलकादु-प्रत्यये कशेरुः क्लीबे पुंसि च। त्रो दुट् च ८९। तरतेरूः स्या-त्तस्य दुट्। 'तर्दूः स्यात् दारुहस्तकः'। दरिद्रातेर्यालोपश्च ९०

(१८) चतोश्चकारोऽन्तोदात्तता चित इति (उ० ५५९४०) सूत्रात्।

(१९) अत्र मृजेर्डुरिति सूत्रान्तरमप्यस्तीत्युज्ज्वलदत्तः सर्व्वासम्मतत्वात्तदु-पेक्षितम् ग्रन्थकृता।

दृश्च आश्च यौ तयोर्लोपः। दर्दूः कुष्ठप्रभेदः। नृतिशृध्योः कूः ९१। नृतूर्नर्त्तकः। शृधूरपानम्। ऋतेरम् च ९२। ऋतिः सौत्रो धातुः। ततः कूः अमागमश्च। रतूर्देवनदी सत्यवाक् च। अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषु ९३। एते कूप्रत्ययान्ता निपात्यन्ते। अन्दूर्बन्धनम्। दृभी ग्रन्थे निपातनान्नुम्। दृम्भूः अनुस्वाराभावोऽपि निपातनादित्येके। दृन्भूः। जने-र्बुक्। जम्बूः। जमु अदने इत्यस्येत्येके। बाहुलकात् ह्रस्वोऽपि जम्बु। कफं लाति कफेलूः श्लेष्मातकः। निपातनादेत्त्वम् कर्कन्दधाति कर्कन्धूर्बदरी निपातनान्नुम्। दिधिन्धैर्य्यं स्यति त्यजतीति दिधिषूः पुनर्भूः। केचित्तु अन्दूदृम्फूकम्बू इति पठन्ति। दृम्फ उत्क्लेशे दृम्फूः सर्पजातिः। कमेर्बुक। कम्बूः परद्रव्यापहारी। मृग्रोरुतिः ९४। मरुत्। गरुत्पक्षः। ग्रो-मुट् च ९५। गिरतेरुतिस्तस्य च मुट्। गर्मुत् सुवर्णन्तृणवि-शेषश्च। हृषेरुलच् ९६। "हर्षुलो मृगकामिनोः"। बाहुल-काच्चटतेः। चटुलं शोभनम्। हृसृरुहियुषिभ्यइतिः ९७। 'हरित्ककुभि वर्णे च तृणवाजिविशेषयोः'। सरिन्नदी। रो-हित् मृगविशेषस्य स्त्री। युषइति सौत्रो धातुः। 'ऋश्यस्य रोहित् पुरुषस्य योषित्' इति भाष्यम्। ताडेर्णिलुक् च ९८। ताडयतीति तडित्। शमेर्ढः ९९। बाहुलकादित्संज्ञा एयादेश इट् च न। 'शण्ढः क्लीवः स्यात् पुंसि गोपतौ। आकृ ष्टाण्डे वर्षवरे तृतीयप्रकृतावपि'। कमेरठः १०० 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसक'मिति मेदिनिः। बाहुलकाज्जरठः। रमेर्वृद्धिश्च १०१ 'रामठं हिङ्गु'। शमेः खः ८०२। शङ्खः। कणेष्ठः

१०३। कण्ठः। कलस्तृपश्च १०४। तृपतेः कलप्रत्ययः। चात् तृफतेः। तृपला लता। 'तृफला च फलत्रिके'। शपेर्बश्च १०५ शबलः। वृषा(२०)दिभ्यश्चित् १०६। वृषलः। पललम्। बाहुलकाद्गुणः सरलः। तरलः। कमेर्बुक्। कम्बलः। मुस खण्डने। मुसलम्। लङ्गेर्वृद्धिश्च। लाङ्गलम्। कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्। कुड्मलः। कुडेरपि। कुड्मलः। कश्मलम्। बाहुलकाद्गुणः। कोमलम्। मृजेष्टिलोपश्च १०७। मलम्। चुपेरच्चोपधायाः १०८। चपलम्। शकिशम्योर्नित् १०९। शकलम्। शमलम्। छो गुग्घ्रस्वश्च ११०। छगलः। प्रज्ञा दित्वाच्छागलः। अमन्ताड्डः १११। दण्डः। रण्डा। खण्डः। मण्डः। वण्डश्छिन्नहस्तः। अण्डः। बाहुलकात्सत्वाभावः। षण्डः सङ्घातः। तालव्यादिरित्यपरे। शण्डः। गण्डः। पण्डः क्लीबः। पण्डा बुद्धिः। क्रादिभ्यः कित् ११२। कवर्गादिभ्यो डः कित् स्यात्। कुण्डकाण्डम्। गुड्। गुडः। घुण भ्रमणे घुण्डो भ्रमरः। स्थाचतिमृजेरालज्वालजालीयचः ११३। तिष्ठतेरालच्। स्थालम् स्थाली। चतेर्वालञ्। चात्वालः मृजेरालीयच्। मार्जालीयो बिडालः। पतिचण्डिभ्यामालञ् ११४। पातालम्। चण्डालः। प्रज्ञा (७२६९०)

(२०) वृषु सेचने वृषलः कुशद्रति सौत्रो धातुः कुशलो दक्षः। पल गतौ पललं मांसम् देवृ देवने देवलो देवांशोपजीवी। सृ गतौ सरलः उदारोऽवक्रश्च। धावञ् जवशुद्ध्योः धवलः। पेशलः शुभ्रः सिन्दूरश्च। आकृतिगणत्वात् तरलकेवलकवलतरलानलजम्बलमर्दलकम्बलमुषलमुशलमुसलकोधललाङ्गलकन्दलकदलीकुट्मलकमलकोमलमृदुलकश्मलपिङ्गलसंवलादयो ग्राह्याः।

दित्वादणि चाण्डालोऽपीत्येके। तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् ११५। तमालः। विशालः। विडालः। मृणालम्। कुलालः। कपालम्। पलालम्। पञ्चालाः। पतेरङ्गच् पक्षिणि ११६। पतङ्गः। तरत्यादिभ्यश्च (२१) ११७ तरङ्गः। लवङ्गम्। विडादिभ्यः कित् ११८। विडङ्गः। मृदङ्गः। कुरङ्गः। बाहुलकादुत्वञ्च। सृवृञोर्वृद्धिश्च ११९। सारङ्गः। वारङ्गः खड्गादिमुष्टिः। गन् गम्यद्योः १२०। गङ्गा। अङ्गः पुरोडाशः। छापूखडिभ्यः कित् १२१। छागः। पूगः। खड्गः। बाहुलकात् पिङ्ग अनादरे गन् सत्वाभावश्च। पिङ्गः तरलः। "पिङ्गैरगद्यत ससंभ्रममेवमेकेति" माघः। भञ्जः कित्नुट् च १२२। भञ्जो गन् कित् स्यात्तस्य नुट् च। 'भृङ्गाः पिङ्गालिघृष्याटाः'। शृणातेर्ह्रस्वश्च १२३। शृङ्गम्। गण् शकुनौ १२४। नुट् चेत्यनुवर्त्तते। शार्ङ्गः। मुदिग्रोर्गग्गौ १२५। मुद्गः। गर्ग्गः। अण्डन् कृसृभृवृञः १२६। करण्डः। सरण्डः पक्षी। भरण्डः स्वामी। वरण्डो मुखरोगः। शादृभसोऽदिः १२७। शरत् १ 'दरत्हृदयकूलयोः'। भसज्जघनम्। दृणातेः षुग् ह्रस्वश्च १२८। दृषत्। त्यजितनियजिभ्यो डित् १२९। त्यद्। तद्। यद्। सर्व्वादय: (६७५) एतेस्तुट् च १३०। एतद्। सर्त्तेरटिः १३१। 'सरट् स्याद्वातमेघयोः'। वेदभाष्ये तु याभिः कृशानुमिति मन्त्रे सरड्भ्यो मधुमक्षिकाभ्य इति व्याख्यातम्। लङ्घेर्न्नलोपश्च १३२। लघट् वायुः। पारेरजिः १३३। पारक् सुवर्णम्-प्रथः कित्

(२१) तरत्यादिराकृतिगणः।

सम्प्रसारणञ्च १३४। पृथक्। स्वरादि (१६८ पृ०) पाठादव्ययत्वम्। भियः षुक् ह्रस्वश्च। १३५। भिषक्। युष्यसिभ्याम्मदिक् १३६। युष सौत्रो धातुः। युष्मद्। अस्मद्। त्वम् अहम्। अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् १३७। एभ्यस्त्रयोदशभ्यो मन्। अर्म्म चक्षूरोगः। स्तोमः सङ्घातः। सोमः। होमः। सर्म्मो गमनम्। धर्म्मः। क्षेमं कुशलम्। क्षोमं प्रसादाद्यग्रे क्षौमञ्च। भाम आदित्यः। यामः। 'वामः शोभनदुष्टयोः'। पद्मम्। यक्ष पूजायाम् यक्ष्मो रोगराजः। नेमः। जहातेः सन्वदालोपश्च १३८।' जिह्मः कुटिलमन्दयोः'। अवतेष्टिलोपश्च १३९। मन्प्रत्ययस्यायष्टिलोपः न प्रकृतेः अन्यथा डिदित्येव ब्रूयात्। ज्वरत्वरेति (उ०१८पृ०) ऊठौ (२२) तयोर्दीर्घे कृते गुणः। चादि (उ२०१पृ०) पाठादव्ययत्वमित्युज्ज्वलदत्तस्तन्न तेषामसत्वार्थत्वात्। वस्तुतस्तु स्वरादि (१६८पृ०) पाठादव्ययत्वम्। अवतीति ओम्। ग्रसेरा च १४०। ग्रामः। अविसिविसिशुषिभ्यः कित् १४१। ऊमम् (१२) नगरम्। स्यूमो रश्मिः। सिमः सर्व्वः। शुष्मम्ग्निसमीरयोः। इषियुधीन्धिदसिश्याधूसूभ्यो मक् १४२। 'इष्मः कामवसन्तयोः'। ईषीतिपाठे दीर्घादिः। युध्मः शरो योद्धा च। इध्मः समित्। दस्मो यजमानः। श्यामः। धूमः। सूमोऽन्तरिक्षम्। बाहुलकाद्दीर्घं श्रणः। युजिरुचितिजां कुश्च १४३। युग्मम्। रुक्मम्। तिग्मम्। हनेर्हि च १४५।

(२२) ज्वरत्वरेति सूत्रेण वकारात् पूर्वस्याकारस्योपधाया ऊठः, वकारस्यान्यस्ययोरूठोः सवर्णदीर्घे कृते गुणइति बोध्यम्।

(२२) बाहुलकाद्ह्रस्वे 'उमा दुर्गातसी मते'त्युज्ज्वलदत्तः।

क्षिमम्। भियः षुग्वा १४५। भीमः भीष्मः। घर्म्मः १४६। घृधातोर्म्मग्गुणश्च निपात्यते। ग्रीष्मः १४७। ग्रसतेर्न्निपातोऽयम्। प्रथेः षिवन् सम्प्रसारणञ्च १४८। पृथिवी। षवगित्येके। "पृथवी पृथिवी पृथ्वी" इतिशब्दार्णवः। अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् १४९। अश्वः। प्रुष स्नेहनादौ "प्रुष्वः स्यादृतुसूर्य्ययोः"। प्रुष्वा जालकणिका। लट्वापक्षिभेदः फलञ्च। कण्वम्पापम्। बाहुलकादित्त्वे किखमपि। खट्वा। विश्वम्। इण्शीभ्यां वन् १५०। एवो गन्ता "ये च एवा मरुतः"। असत्वे निपातोऽयम्। "शेवं मिताय वरुणाय"। सर्व्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अस्वतन्त्रे १५१। अकर्त्तर्य्यैते निपात्यन्ते। सृतमनेन विश्वमिति सर्व्वम्। निपूर्व्वाद्घृषेर्गुणाभावोऽपि। निघृष्यतेऽनेन निघृष्वः खुरः। रिष्वो हिंस्रः। लष्वो नर्त्तकः। लिष्व इत्यन्ये। तत्रोपधाया इत्त्वमपि। शेतेऽस्मिन् सर्व्वमिति शिवः शम्भुः। शीङो ह्रस्वत्वम्। पद्वो रथो भूलोकश्च। प्रह्वयते इति प्रह्वः। ह्वेञ आकारवकारलोपः। जहातेरालोपो वा। ईषेर्वन्। ईष्वः आचार्य्यः। इष्वइत्यन्ये। अस्वतन्त्रे किम् सर्त्ता सारकः। बाहुलकात्सृतेः। ह्रस्वः। शेवयह्वजिह्वाग्रीवाप्वमीवाः १५२। शेव इत्यन्तोदात्तार्थम्। याम्यनेन यह्वः ह्रस्वो हुगागमश्च। लिहन्त्यनया जिह्वा। लकारस्य जः गुणाभावश्च। गिरत्यनया ग्रीवा। ईडागमश्च। आप्नोतीत्याप्वो वायुः। मीवा उदरक्रिमिः। वायुरित्यन्ये। कॄगॄशॄदृभ्यो वः १५३। कर्व्वः कामः आखुश्च। गर्व्वः। शर्व्वः। दर्व्वो राक्षसः। कनिन् युव-

पितृवराजिधन्विद्युप्रतिदिवः १५४। यौतीति युवा। वृषा इन्द्रः। तक्षा। राजा। धन्वा मरुः। धन्वा शरासनम्। द्युवा सूर्यः। प्रतिदीव्यन्त्यस्मिन् प्रतिदिवा दिवसः। सप्यशूभ्यां तुट् च (२४)। सप्त। अष्ट। नञि जहातेः १५५। अहः। श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्द्धन्मज्जन्नर्य्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन् इति १५६। एते त्रयोदश कनिन्नन्ता निपात्यन्ते। श्वयतीति श्वा। उक्षा। पूषा। प्लिह गतौ इकारस्य दीर्घत्वम्। प्लेहतीति प्लीहा कुक्षिव्याधिः। क्लिदू आर्द्रीभावे क्लिद्यति क्लेदा चन्द्रः। स्निह्यतेर्गुणः। स्निह्यतीति स्नेहा सुहृच्चन्द्रश्च। मुह्यन्त्यस्मिन्नाहते मूर्द्धा। मुहेरुपधाया दीर्घः धोऽन्तादेशो रमागमश्च। मज्जत्यस्थिषु मज्जा अस्थिसारः। अर्य्यपूर्वो माङ्। अर्यमा। विश्वं प्साति विश्वप्सा अग्निः। परिजायते परिज्मा चन्द्रोऽग्निश्च। जनेरुपधालोपो मश्चान्तादेशः। मातरि अन्तरिक्षे श्वयतीति मातरिश्वा। धातोरिकारलोपः। मह पूजायाम् हस्य घो वुगागमश्च। मघवा इन्द्रः।

इत्युणादिषु प्रथमः पादः।

कृहृभ्यामेणुः १। करेणुः। हरेणुर्गन्धद्रव्यम्। हनिकुषिनीरमिकाशिभ्यः क्थन् २। हथो विषमः। कुष्ठः। नीथो नेता। रथः। काष्ठम्। अवे भृञः ३। अवभृथः। उषिकुषिगार्त्तिभ्यस्थन् ४। ओष्ठः। कोष्ठम्। गाथा। अर्थः। बाहुलकात्

(२४) कनिन्युवृषीति सूत्रे प्राक्प्रत्ययनिर्देशादन्येभ्योऽपि भवतीत्युक्तवृत्तेन दनेश दमने नलोपः दमन् एवं सप्तनादयस्तदाह सप्यशूभ्यामिति।

शोथः। सर्त्तेर्णित् ५। सार्थः समूहः। जृवृभ्यामूथन् ६। जरूथं मांसम्। "वरूथो रथगुप्तौ ना"। पातृतुदिवचिरिचि सिचिभ्यस्थक् ७। पीथोरविर्घृतम्पीथम्। "तीर्थं शास्त्राध्व- रक्षेत्रोपायोपाध्यायमन्त्रिषु। अवतारर्षिजुष्टाम्भःस्त्रीरजः- सु च विश्रुतमिति" विश्वः। तुथोऽग्निः। उक्थं सामभेदः। रिक्थम्। बाहुलकाद्रिचेरपि। "रिक्थमृक्थन्धनं वसु"। सिक्थम्। अर्त्तेर्निरि ८। निरृथः साम। निशीथगोपी- थावगथाः ९। निशीथोऽर्धरात्रः रात्रिमात्रञ्च। गोपीथं तीर्थम्। अवगथः प्रातःस्नातः। गश्चोदि १०। उद्गीथः साम्नो भागविशेषः। समीथः ११। समिथो वह्निः संग्रा- मश्च। तिथपृष्ठगूथयूथप्रोथाः १२। तिजेर्जलोपः। तिथोऽनलः कामश्च। पृष्ठम्। गूथं विष्ठा। यूथं समूहः। "प्रोथमस्त्री तुर- ङ्गास्ये प्रोथः प्रस्थित उच्यते"। स्फायितञ्चिवञ्चिशकिक्षिपिक्षु- दिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदि- छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसि- धिशुभिभ्यो रक् १३। द्वात्रिंशद्भ्यो रक् स्यात्। वलि (४२१९-सू०) यलोपः। स्फारम्। न्यङ्क्वादित्वात् (७२०७सू०) कुत्वम्। तक्रम्। वक्रम्। शक्रः। क्षिप्रम्। क्षुद्रः। सृप्र- श्चन्द्रः। तृप्रः पुरोडाशः। दृप्रः बलवान्। वन्द्रः (१) पूजकः। उन्द्री-उद्रो जलचरः। श्वित्रं कुष्ठम्। "वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे"। अजेर्वीः। वीरः। नीरम्। पद्रो ग्रामः। मद्रोहर्षः देशभेदश्च। "मुद्रा प्रत्ययकारिणी"।

(१) वन्दिमन्दिचन्दीनामिदित्वान्नलोपाभावः

खिद्रोरोगो दरिद्रश्च। छिद्रम्। भिद्रं वज्रम्। मन्द्रः। चन्द्रः। पचाद्यचि (७२१७४) चन्द्रोऽपि। "हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्द्रोहिमद्युतिः"। दस्रोऽग्निः। दस्रः खर्वैद्यः। दभ्रः समुद्रः स्वल्पश्च। वसेः सम्प्रसारणे।

## न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्। ८।३।११०।

रेफपरस्य सकारस्य सृप्यादीनां सवनादीनाञ्च मूर्द्धन्यो न स्यात्। पूर्वपदादिति (७५२७४०)प्राप्तः प्रतिषिध्यतइति वृत्तिर्भूयोभिप्राया तेन शासिवसीति (१०६४०) प्राप्तोऽपि न। उस्रो रश्मिः। उस्रा गौः। वास्रो दिवसः। वास्रं मन्दिरम्। शीरोऽजगरः। इस्रो मूर्खः। सिभ्रः साधुः। शुभ्रम्। मुसेरक्॥ मुस्रम्। बाहुलकात् अश्रु (२)। चकिरम्योरुच्चोपधायाः १४। चुक्रमम्लद्रव्यम्। रुम्रोऽरुणः। वौ कसेः १५। विकुस्रश्चन्द्रः। अमितम्योर्दीर्घश्च १६। आम्रम्। ताम्रम्। निन्देर्नलोपश्च १७। निद्रा। अर्द्देर्दीर्घश्च १८। आर्द्रम्। शुचेर्दश्च १९। शूद्रः। दुरीणो लोपश्च २०। दुःखेनेयते प्राप्यतइति दूरम्। कृतेश्छ, क्रू च २१। कृच्छ्रम्। क्रूरः। रोदेर्णिलुक् च २२। रोदयतीति रुद्रः। बहुलमन्यत्रापि संज्ञाच्छन्दसोः। णिलुगित्येव। "वान्ति पर्णशुषो वातावान्ति पर्णमुचोऽपरे *। जोरी च २३। जीरोऽणुः। ज्यस्येत्येके। सुसूधाग्टधिभ्यः क्रन् २४। सुरः। सूरः। धीरः। ग्टध्रः। शुसिचिमीनान्दीर्घश्च २५। शु सौतः। शूरः। सीरम्। ची-

(२) अश्नोतेरपि रक् तेन अस्र इत्यधरामत्युज्ज्वलदत्तः।

* ततः पर्णरुहोवान्ति ततोदेवः प्रवर्षतीति शेषः।

रम्। मीरः समुद्रः। वाविन्धेः (२) २६। वीध्रम् विमलम्। ऋधिवपिभ्यां रन् २७। वर्ध्रं चर्म्म। वप्रः प्राकारः। ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः २८। रन्नन्ता ऊनविंशतिः। निपातनाद्गुणाभावः। ऋज्रो नायकः। इदि इन्द्रः। अङ्गेर्नलोपः। अग्रम्। "वज्रोऽस्त्री हीरके पवौ"। डुवप् उपधाया इत्त्वम्। विप्रः। कुब्रिचुब्र्योर्नलोपः। कुब्रमरण्यम्। चुब्रं मुखम्। क्षुर विलेखने रेफलोपः। अगुणः। क्षुरः। खुर छेदने रलोपो गुणाभावश्च। खुरः। भन्देर्नलोपः। भद्रम्। उच समवाये चस्य गः। उग्रः। ञिभी। भेरी। पक्षे लः। भेलो जलतरणद्रव्यम्। शुचेश्चस्य कः। शुक्रः पक्षे लः। शुक्लः। गुङ् वृद्धिः "गौरोऽरुणे सिते पीते"। वन सम्भक्तौ। वन्नोविभागी। इण् गुणाभावः। "इरा मद्ये च वारिणि"। मा माने माला। समि कसेरुकन् २६। कस गतौ सम्यक्कसन्ति पलायन्ते जनाश्रस्मादिति सङ्कसुको दुर्ज्जनः अस्थिरश्च। पचिनशोर्णुकन् कनुमौ च ३०। पचेः कः। पाकुकः सूपकारः। नशेर्नुम्। नंशुकः। भियः क्रुकन् ३१। भीरुकः। क्रुन् शिल्पिसंज्ञयोरपूर्व्वस्यापि ३२। रजकः। इक्षुकुट्टकः। चरकः। चष भक्षणे। चषकः। भषकः। शुनकः। रमेरश्च लो वा ३३। रमको विलासी। लमकः। जहातेर्द्वे च ३४। जहकस्त्यागी कालश्च। ध्मो धम च ३५। धमकः कर्म्मकारः। हनो वध च ३६। वधकः। बङ्-

(२) वौ उपपदे इन्धेः क्रन् स्यादित्यर्थः।

लमन्यत्रापि ३७। कुह विस्मापने। कुहकः। क्रतकम्। कृषेर्वृद्धिश्चोदीचाम् ३८। कार्षकः-कृषकः। उदकश्च ३९ (४)। प्रपञ्चार्थम्। वश्चिकृष्योः किकन् ४०। वृश्चिकः। कृषिकः। प्राङि पणिकषः ४१। प्रापणिकः पण्यविक्रयी। प्राकषिकः परदारोपजीवी। मुषेर्दीर्घश्च ४२। मूषिक आखुः। स्यमेः सम्प्रसारणञ्च ४३। चाद्दीर्घः। सीमिको वृक्षभेदः। क्रियइकन् ४४। क्रयिकः क्रेता। आङि पणिपनिपतिखनिभ्यः ४५। आपणिकः। आपनिकः इन्द्रनीलः, किरातश्च। आपतिकः श्येनो, दैवायत्तश्च। आखनिको मूषिको वराहश्च। श्यास्त्याहृञविभ्य इनच् ४६। श्येनः। स्त्येनः। हरिणः। अविनोऽध्वर्युः। वृजेः किच्च ४७। वृजिनम्। अजेरज च ४८। वीभावबाधनार्थम्। अजिनम्। बहुलमन्यत्रापि ४९। कठिनम्। नलिनम्। मलिनम्। कुण्डिनम्। द्युतेः। 'यत्पक्षपि दिनम्,(५) दिवसोऽपि दिनम्। द्रुदक्षिभ्यामिनन् ५०। द्रविणम्। दक्षिणः। दक्षिणा। अर्तेः किदिच्च ५१ इरिणं शून्यम्। वेपितुह्योर्ह्रस्वश्च। ५२। विपिनम्। तुहिनम्। तलिपुलिभ्याञ्च ५३। "तलिनं विरले स्तोके स्वच्छेऽपि तलिनन्त्रिषु"। पुलिनम्। गर्वेरत उच्च ५४। गौरादित्वात् (२२७७०) ङीष्। गुर्विणी गर्भिणी। रुहेश्च ५५। रोहिणः। महेरिनण्च ५६। चादिनन् माहिनम् महिनं राज्यम्। क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणञ्च ५७। वाक्। प्राट्। श्रीः। स्रवत्यतो

(४) उन्दी क्लेदने इत्यस्मात् क्वुनि सिद्धम्।

(५) यदित्यादिश्रुतेः पक्षपि पर्वणि दिनं खण्डितं यत् तद्देवानामित्यर्थः।

घृतादिकमिति स्रूः यज्ञोपकरणम्। द्रूर्हिरण्यम्। कटप्रूः कामरूपी कीटश्च। "जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम्"। आप्नोतेर्ह्रस्वश्च ५८। आपः। अपः। अद्भिः। अप्सु। परौ व्रजेः षश्च पदान्ते ५९। व्रजेः क्विब्दीर्घौ स्तः पदान्ते तु षश्च। परिव्राट्। परिव्राजौ। ह्वः स्रुवश्च ६०। जूह्वः। स्रुवः कः ६१। स्रुवम्। चिक् च ६२। इकार उच्चारणार्थः। क इत् कुत्वम्। स्रुक्। "स्रुवं स्रुचश्च संमृड्ढि"। तनोतेरनश्च वः ६३। तनोतेश्चिक्प्रत्ययः अनो वशब्दादेशश्च। त्वक्। ग्लानुदिभ्यां डौः ६४। ग्लौः। नौः। द्विरव्ययम् ६५। डौरित्येव। ग्लौकरोति। कृन्मेजन्त इति (२०४२०) सिद्धे नियमार्थमिदम् उणादिप्रत्ययान्तस्यान्त एवेति। रातेर्डैः ६६। राः। रायौ। रायः। गमेर्डोः ६७। "गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः। स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि। नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु"। बाहुलकात् द्युतेरपि डोः। "द्यौः स्त्री स्वर्गान्तरिक्षयोः"। भ्रसेश्च डूः ६८। भ्रूः। बाहुलकात् अग्रेगूः। दमेर्डोसिः ६९। दोः। दोषौ। पणेरिज्यादेश्च (६) वः ७०। वणिक्। स्वार्थेऽण्। "नैगमो वाणिजो वणिक्"। वशः कित् ७१ "उशिगग्नौ घृतेऽपि च"। भृञ ऊच्च ७२। भूरिक् भूमिः। जसिसहोरुरिन् ७३। जसुरिर्वज्रम्। सहुरिरादित्यः पृथिवी च। सुयुरुवृञो युच् ७४। सवनस्तु चन्द्रमाः। यवनः। रवणः कोकिलः। वरणः। अशेः रश च ७५। अश्नोतेर्युच्स्यात् रशादेशश्च। रशना काञ्ची। जि-

(६) पणेरिजिप्रत्ययः स्यादादेश्च वः इत्यर्थः।

ह्वावाची तु दन्त्यसकारवान्। उन्देर्नलोपश्च ७६। ओदनः। गमेर्गश्च ७७। गमेर्युच् स्याद्गश्चादेशः। गगनम्। बहुलमन्यत्रापि ७८। युच् स्यात्। स्यन्दनः। रोचना। रञ्जेः क्युन् ७९। रजनम्। भूसूधूभ्रस्जिभ्यश्छन्दसि ८०। भुवनम्। सुवन आदित्यः। धुवनो वह्निः। निधुवनम् सुरतम्। भ्रज्जनमम्बरीषम्। कृपृवृजिमन्दिनिधाञः क्युः ८१। किरणः। पुरणः समुद्रः। वृजनमन्तरिक्षम्। मन्दनं स्तोत्रम्। निधनम्। धृषेर्धिष च संज्ञायाम् ८२। (७) धिषणो गुरुः। धिषणा धीः वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवत् ८३। अतिप्रत्ययान्ताः। पृष सेचने गुणाभावः। पृषन्ति। बृहत्। महान्। गमेर्ज्जगादेशः। जगत्। संश्चत्तृपद्वेहत् ८४। एते निपात्यन्ते। पृथक्करणं शतृवद्भावनिवृत्त्यर्थम्। सश्चिनोतेः सुट् इकारलोपः। संश्चत् कुहकः। तृपच्छत्रम्। विपूर्वाद्धन्तेष्टिलोपः इतएच। "वेहत् गर्भोपधातिनी"। छन्दस्यसानच् शुजृभ्याम् ८५। शवसानः पन्थाः। जरसानः पुरुषः। ऋञ्जिवृधिमन्दिसहिभ्यः कित् ८६। ऋञ्जसानो मेघः। वृधसानः पुरुषः। मन्दसानोऽग्निर्जीवश्च। सहसानो यज्ञो मयूरश्च। अर्त्तेर्गुणः शुट् च ८७। अर्शसानोऽग्निः। सम्यानच् स्तुवः ८८। संस्तवानो वाग्मी। युधिबुधिदृशिभ्यः किच्च ८९। (८) युधानः। बुधानः। दृशानो लोकपालकः।

---

(७) अत्र हन्तेर्घुरश्चेत्यधिकं सूत्रं तेन घुरणः शब्द इत्युज्ज्वलदत्तः।

(८) अत्र मुचियुधिभ्यां सन्वच्चेति सूत्रान्तरं तेन मुमुचानः युयुधान इति सिद्धमित्युज्ज्वलदत्तः।

ऋच्छेः सनो लुक् क्लोपश्च ६०। जङ्गराणश्चन्द्रमाः। श्वितेदश्च ६१। शिश्विदानः पुण्यकर्म्मा। तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायाञ्चानिटौ ६२। शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः तौ चानिटौ। शंस्ता स्तोता। शंस्तारौ। शंस्तारः। क्षदिः सौत्रो धातुः खण्डीकरणे भक्षणे च। अनुदात्तेत्। "वृक्ये क्षत्तदानमिति" मन्त्रात् "उक्षाणं वा वेहतं वा क्षदन्ते" इति ब्राह्मणाच्च। "क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे"। बहुलमन्यत्रापि ६३। मन-मन्ता। हन-हन्ता इत्यादि। नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ ६४। न पतन्त्यनेन नप्ता पौत्रो दौहित्रश्च। नयतेः षुग्गुणश्च। नेष्टा। त्विषेरितोऽत्वम्। त्वष्टा। होता। पोता ऋत्विग्भेदः। भ्राजतेर्ज्जलोपः भ्राता। जायाम्माति जामाता। मान पूजायां नलोपः। माता। पातेराकारस्य इत्त्वम्। पिता। दुहेस्तृचइट् गुणाभावश्च। दुहिता। स्वावसेर्ऋन् ६५। स्वसा। यतेर्वृद्धिश्च ६६। याता। "भार्य्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्"। नञि च नन्देः ६७। न नन्दति ननान्दा। इह वृद्धिर्नानुवर्त्तत इत्येके। "ननन्दा तु स्वसा पत्युर्न्ननान्दा नन्दिनी च सेति" शब्दार्णवः। दिवेर्ऋः। ६८। देवा देवरः। "स्वामिनोदेवृदेवरौ"। नयतेर्डिच्च ६९। ना। नरौ। नरः। सव्ये स्थश्छन्दसि १००। अम्बाम्बेत्यत्र(८३२४७) स्थास्थिन्स्थृणामुपसंख्यानम्। सव्येष्ठा सारथिः। सव्येष्ठरौ। सव्येष्ठरः। अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिः १०१। अष्टभ्योऽनिप्रत्ययः स्यात्। अरणिरग्नेर्योनिः। सरणिः। धरणिः। धमनिः। अमनि-

ण्णतिः। अशनिः। अवनिः। तरणिः। बाहुलकात् रजनिः। आङि शुषेः सनश्छन्दसि १०२। आशुशुक्षणिरग्निर्वातश्च। कृषेरादेश्च चः १०३। चर्षणिर्मनः। अदेर्मुट् च १०४। अद्मनिरग्निः। वृतेश्च १०५। वर्त्तनिः। गोवर्द्धनस्तु चकारान्मुट् वर्त्मनिरित्याह। क्षिपेः किच्च १०६। क्षिपणिरायुधम्। अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः १०७। अर्चिर्ज्वाला। इदन्तोऽप्ययम्। "अग्नेर्भ्राजन्ते अर्चयः"। शोचिर्दीप्तिः। हविः सर्पिः। इस्मन् इति (उ१४०१०) ह्रस्वः। छदिः पटलम्। छर्दिर्वमनव्याधिः। इदन्तोऽपि 'छर्द्यतीसारशूलवान्'। बृंहेर्नलोपश्च १०८। "बर्हिर्नां कुशशुष्मणोः"। द्युतेरिसिन्नादेश्च जः १०९। ज्योतिः। वसौ रुचेः संज्ञायाम् ११०। वसुरोचिर्यज्ञः। भुवः कित् १११। भुविः समुद्रः। सहो धश्च ११२। सधिरनड्वान्। पिबतेस्थुक् ११३। "पाथिश्चक्षुःसमुद्रयोः"। जनेरुसिः ११४। जनुर्जननम्। मनेर्धश्छन्दसि ११५। मधु। अर्त्तिपृवपियजितनिधनितपिभ्यो नित् ११६। अरुः। परुर्ग्रन्थिः। वपुः। यजुः। तनुः तनुषी तनूंषि। धनुरस्त्रियाम्। "धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति"। सान्तस्य उदन्तस्य वा रूपम्। "तपुः सूर्य्याग्निशत्रुषु"। एतेर्णिच्च ११७। आयुः आयुषी। चक्षेः शिच्च ११८। चक्षुः। मुहेःकिच्च ११९। मुहुरव्ययम्। बहुलमन्यत्रापि १२०। आचक्षुः। परिचक्षुः। कृगृशृवृचतिभ्यः ष्वरच् १२१। "कर्वरो व्याघ्ररक्षसोः"। गर्वरोऽहङ्कारी। शर्वरी रात्री। "वर्वरः प्राकृतो जनः"। चत्वरम्। नौ सदेः १२२। "निषद्वरस्तु जम्बालः"। निषद्वरी रात्रिः।

इत्युणादिषु द्वितीयः पादः।

छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः १। एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते। छिदिर् छद् अनयोस्तकारोऽन्तादेशः छिदेर्गुणाभावश्च। छित्वरो धूर्त्तः। "छत्वरो गृहकुञ्जयोः"। धीवरः कैवर्त्तः। पीवरः स्थूलः। मीवरो हिंसकः। चिनोतेर्दीर्घश्च। चीवरम्भिक्षुकप्रावरणम्। तीवरो जातिविशेषः। नीवरः परिव्राट्। गाहतेर्ह्रस्वत्वम्। गह्वरम्। कटे वर्षादौ कट्वरं व्यञ्जनम्। यमेर्दकारः। संयद्वरो नृपः। पदेः सम्पद्वर इत्येके। इणषिञ्जिदीङुष्यविभ्यो नक् २। "इनः सूर्य्ये नृपे पत्यौ"। सिनः काणः। जिनोऽर्हन्। दीनः। उष्णः। ऊनः। फेनमीनौ ३। एतौ निपात्येते। स्फायते फेनः। मीनः। कृषेर्वर्णे ४। कृष्णः। बन्धेर्ब्रधिबुधी च ५। ब्रध्नः। बुध्नः। धाप्टवस्वज्यतिभ्यो नः ६। "धाना भृष्टयवे स्त्रियः"। पर्णम्पतत्रम्। पर्णः किंशुकः। "वस्नो मूल्ये वेतने च"। अजेर्वी। वेनः। अत्न आदित्यः। बाहुलकात् शृणोतेः। श्रोणः पङ्गुः। लक्षेरट् च ७। लक्षेस्सुरादिण्यन्तान्नः स्यात्तस्याडागमश्च। चाम्मडित्येके। लक्षणं लक्ष्मणम् नाम्नि चिह्ने च। पुंसि रामभ्राता। "लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा"। वनेरिच्चोपधायाः ८। वेन्ना नदी। सिवेष्टेर्यू च ९। दीर्घोच्चारणसामर्थ्यान्न गुणः। स्यून आदित्यः। बाहुलकात् केवलो नः। ऊठ अन्तरङ्गत्वाद्यण् गुणः। स्योनः। कृटजृसिद्रुपन्यनिस्वपिभ्यो नित् १०। कर्णः। वर्णः। "जर्णश्चन्द्रे च वृक्षे" च। सेना। द्रोणः। पन्नो नीचैर्गतिः। अन्नमोदनः। स्वप्नो निद्रा।

धेट इच्च ११। "धेनः सिन्धुर्नदी धेना"। तृषिशुषिरसिभ्यः कित् १२। तृष्णा। शुष्णः सूर्यो वह्निश्च। रत्नम् द्रव्यम्। सुञो दीर्घश्च १३। सूना बधस्थानम्। रमेस्त च १४। रमयतीति रत्नम्। रास्नासास्नास्थूणावीणाः १५। रास्ना गन्धद्रव्यम्। सास्ना गोगलकम्बलः। स्थूणा गृहस्तम्भः। वीणा वल्लकी। गादाभ्यामिष्णुच् १६। गेष्णुर्गायनः। देष्णु दाता। कृत्यशूभ्यां क्स्नः १७। कृत्स्नम्। अक्ष्णमखण्डम्। तिजे दीर्घश्च १८। तीक्ष्णम्। श्लिषेरच्चोपधायाः १९। श्लक्ष्णम्। यजिमनिशुन्धिदसिजनिभ्यो युच् (१) २०। यज्युरध्वर्युः। "मन्युर्दैन्ये क्रतौ क्रुधि"। शुन्ध्युरग्निः। दस्युस्तस्करः। जन्युः शरीरी। भुजिमृङ्भ्यां युक्त्युकौ २१। भुज्युर्भाजनम्। मृत्युः। सर्तेरयुः २२। सरयुर्नदी। अयूरिति पाठान्तरम्। सरयूः। पानीविषिभ्यः पः २३। पाति रक्षत्यस्मादात्मानमिति पापम्। तद्योगात् पापः। नेपः पुरोहितः। बाहुलकाद्गुणाभावे नीपो वृक्षविशेषः। वेष्पः पानीयम्। च्युवः किच्च २४। च्युपो वक्त्रम्। स्तुवो दीर्घश्च २५। स्तूपः समुच्छ्रायः। सुशृभ्यां निच्च २६। चात्कित्। सूपः। बाहुलकादुत्त्वम्। शूर्पम्। कुयुभ्यां च २७। कुवन्ति मण्डूका अस्मिन् कूपः। युवन्ति बध्नन्त्यस्मिन् पशुमिति यूपो यज्ञस्तम्भः। खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः २८। सप्तैते पप्रत्ययान्ता निपात्यन्ते। खनतेर्नकारस्य षत्वम्। "खष्पौ क्रोधबलात्कारौ"। शीलतेर्ह्रस्वः। शिल्पं कौशलम्। शषु हिंसायाम् निपातनात्

(१) निरनुनासिकत्वादृयोरनादेशो नेत्युज्ज्वलदत्तः।

षत्वम्। शष्पम्बालतृणम् प्रतिभाच्चयश्च। बाधतेः षः। "बाष्पो नेत्रजलोष्मणोः"। वाष्पश्च। रौतेर्दीर्घः। "रूपं स्वभावे सौन्दर्य्ये"। ष्ट-पपं तल्पम्बालतृणम्पङ्कपीठञ्च। तल प्रतिष्ठा-करणे चुरादिर्णिचो लुक्। "तल्पं शय्याट्टदारेषु"। स्तनिहृषि-पुषिगदिमदिभ्यो णेरित्नुच् २९। अयामन्ते ति (७६०४०) णेरयादेशः। स्तनयित्नुः। हर्षयित्नुः। पोषयित्नुः। गदयित्नु-र्व्विदूकः। मदयित्नुर्म्मदिरा। कृहनिभ्यां क्तुः ३०। कृतुः शिल्पी। हतुर्व्याधिः शस्त्रञ्च। गमेः सन्वच्च ३१। जिगत्नुः। दाभाभ्यान्नुः ३२। दानुर्दाता। भानुः। वचेर्गश्च ३३। वग्नुः। धेट इच्च ३४। धयति तामिति धेनुः। सुवः कित् ३५। "सूनुः पुत्रेऽनुजे रवौ"। जहातेर्द्वे अन्तलोपश्च ३६। जह्नुः। स्थो णुः ३७। "स्थाणुः कीले स्थिरे"। अजिवृरीभ्यो निच्च ३८। अजेर्वी। वेणुः। वर्णुर्नदहेशभेदयोः। "रेणुर्द्वयोः स्त्रियान्धूलिः"। विषेः किच्च ३९। विष्णुः। कृदाधारार्चि-कलिभ्यः कः ४०। बाहुलकान्न कस्येत्संज्ञा। "कर्को धवल-घोटकः"। दाको दाता। धाकोऽनड्वानाधारश्च। राका पौ-र्णमासी। अर्कः। "कल्कः पापाशये पापे दम्भे विट्किट्ट-योरपि"। सृवृभृशुषिमुषिभ्यः कक् ४१। 'सृक उत्पलवा-तयोः"। "वृकः श्वापदकाकयोः"। भृकश्छिद्रम्। शुष्कः। मुष्कोऽण्डम्। शुकवल्कोल्काः ४२। शुभेरन्त्यलोपः। शुकः। 'वल्कं वल्कलमस्त्रियाम्"। उष दाहे षस्य लः। उल्का। इण्भीकापाशल्यतिमर्चिभ्यः कन् ४३। "एके मुख्यान्य-केवलाः"। "भेको मण्डूकमेघयोरिति विश्वमेदिन्यौ। काकः"।

पाकः शिग्रुः। शल्कं शकलम्। अल्कः पथिकः शरीरावयवश्च। मर्कः शरीरवायुः। नौ ह्रः ४४। जहातेः कन् स्यान्नौ। निहाका गोधिका। नौ सदेर्डिच्च४५। "निष्कोऽस्त्री हेम्नि तत्पले"। स्यमेरीट् च ४६। स्यमीकोवाल्मीकः वृक्षभेदश्च। इट् ह्रस्व इति केचित्। स्यमिकः। अजियुधुनीभ्यो दीर्घश्च ४७ "वीकः स्याद्वातपक्षिणोः"। यूका(२)। धूको वायुः। नीको वृक्षविशेषः। ह्रियो रश्च लो वा ४८। "ह्रीका ह्लीका त्रपा मता"। शकेरुनोन्तोन्त्युनयः ४९। उन उन्त उन्ति उनि एते चत्वारः स्युः। शकुनः। शकुन्तः। शकुन्तिः। शकुनिः। भुवोभिच् ५०। भवन्तिर्वर्त्तमानकालः। बाहुलकादवेश्च। अवन्तिः। वदेर्वदन्तिः "किंवदन्ती जनश्रुतिः"। कन्युच् क्षिपेश्च ५१। चाङ्गवः। क्षिपण्युर्वसन्तः इत्युज्ज्वलदत्तः। "भवन्युः स्वामिसूर्य्ययोः। अनुङ् नदेश्च ५२। चात् क्षिपेः। नदनुर्मेघः। क्षिपणुर्व्वातः। कृदृदारिभ्य उनन् ५३ "करुणो वृक्षभेदःस्यात् करुणा च कृपा मता"। वरुणः। दारुणम् तो रश्च लो वा ५४। 'तरुणस्तलुनो युवा'। क्षुधिपिशिमिथिभ्यः कित् ५५। क्षुधुनो म्लेच्छजातिः। पिशुनः। मिथुनम्। फले र्गुक् च ५६। फल्गुनः पार्थः। प्रज्ञाद्यण् (७२६९०) फाल्गुनः। अशेर्लशश्च ५७। लशुनम्। अर्जेर्णिलुक् च ५८। अर्ज्जुनः। तृणाख्यायाञ्चित् ५९। चित्त्वादन्तोदात्तः। अर्ज्जुनं तृणम्। अर्त्तेश्च ६०। अरुणः। अजियमिशीङ्भ्यश्च ६१। "वयुनन्देवमन्दिरम्"। यमुना। शयुनोऽजगरः। वृतृवदिहनिकमि-

---

(२) यूका केशस्य क्षुद्रजन्तुभेदः "यूकाभयेन न हि केशविमोचनं स्यादिति"।

कपिभ्य: स: ६२। वर्षम् "तर्ष: प्लवसमुद्रयो:"। वत्स:। वत्सं वक्ष:। हंस:। 'कंसोऽस्त्री पानभाजनम्'। कक्षन्नक्षतम्। प्लुषेरच्चोपधाया: ६३। प्लक्ष:। मनेर्दीर्घश्च ६४। मांसम्। अशेर्देवने ६५। अक्ष:। स्नुव्रश्चिकृत्यृषिभ्य: कित् ६६। स्नुषा। वृक्ष:। कृत्समुदकम्। ऋक्षन्नक्षतम्। ऋषेर्जातौ ६७। "ऋक्षो ऽद्रिभेदे भल्लूके" इति च। उन्दिगुधिकुषिभ्यश्च ६८। "उत्स: प्रस्रवणम्"। गुत्स: स्तवक:। कुक्षो जठरम्। गृधिपण्योर्दकौ च ६९। गृत्स: कामदेव:। पक्ष:। अशे: सरन्। ७० अक्षरम्। वसेश्च ७१। वत्सर:। सम्पूर्वाच्चित् ७२। संवत्सर:। कृधूमदिभ्य: कित् ७३। बाहुलकान्न षत्वम्। "कृसर: स्यात्तिलौदनम्"। धूसर:। मत्सर:। 'मत्सरा मक्षिका ज्ञेया भम्भराली‡ च सा मता"। पते: रश्च ल: ७४। पत्सल: पन्था:। तन्यृषिभ्यां क्सरन् ७५। 'तसर: सूत्रवेष्टने'। ऋक्षर: ऋत्विक्। पीयुक्वणिभ्यां कालन् ह्रस्व: सम्प्रसारणञ्च ७६। पीयु: मौत:। पियालो वृक्षभेद:। कुणालो देशभेद:। कटिकुषिभ्यां काकु: ७७। कटाकु: पक्षी। कुषाकुरग्नि: सूर्य्यश्च। सर्त्तेर्दुक् च ७८। 'सृदाकुर्व्वातसरितो:'। वृतेर्वृद्धिश्च ७९। वार्त्ताकु:। बाहुलकादुकारस्य अत्वम्। वार्त्ताकम्। पर्दैर्नित्सम्प्रसारणमल्लोपश्च ८०। "पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे"। सृयुवचिभ्योऽन्युजागूजक्नुच: ८१। अन्युच् आगूच् अक्नुच् एते क्रमात्स्यु:। सरण्युर्म्मेघवातयो:"। यवागू:। "वचक्नुर्विप्रवाग्मिनो:"। आनक:

‡ भम्भराली पाठान्तरम्

भीङ्भियः ८२ । भयानकोऽजगरः । भयानकः । आण-कोलूधूशिङ्घिधूञ्भ्यः ८३ । लवाणकन्दात्रम् । धवाणको वातः । शिङ्घाणकः श्लेष्मा । पृषोदरादित्वात् पक्षे कलोपः । "शिङ्घाणं नासिकामले" । धाणको दीनारभागः । उल्मुक-दर्विहोमिनः ८४ । उष दाहे । षस्य लः मुकप्रत्ययश्च । "उल्मुकं ज्वलदङ्गारम्" । दृणातेर्विः । दर्विः । जुहोतेर्म्मिनिः । होमी । ह्रियः कुक् रश्च लो वा ८५ । ह्रीकुः ह्लीकुर्ल्ल-ज्जावान् । हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन् ८६ । एभ्य-स्तन् स्यात् । तितुत्रेति (३।७८८०) नेट् । हस्तः । मर्त्तः । गर्त्तः । एतः कर्बुरः । वातः । अन्तः । दन्तः 'लोतः स्याद-श्रुचिह्नयोः । "पोतो बालवहित्रयोः" । धूर्त्तः बाहुलकात्तु से-र्दीर्घत्वम् । तूस्तम्पापन्धूलिर्ज्जटा च । नञ्याप इट् च ८७ । नापितः । तनिमृङ्भ्याङ्किच्च ८८ । ततम् । मृतम् । अञ्जिघृसि-भ्यः क्तः ८९ । अक्तम् । घृतम् । सितम् । दुतनिभ्यान्दीर्घश्च ९० । दूतः । तातः । जेर्मूट् चोदात्तः ९१ । जीमूतः । लोष्टप-लितौ ९२ । लुनातेः क्तस्य सुट् धातोर्गुणः । लोष्टम् पलितम् । हृश्याभ्यामितन् ९३ । हरितश्यतौ वर्णभेदौ । रुहे-रश्च लो वा ९४ । 'रोहितो मृगमत्स्ययोः' । लोहितं रक्तम् । पिशेः किच्च ९५ । पिशितम्मांसम् । श्रुदक्षिस्पृहिगृहिभ्य आय्यः ९६ । श्रवाय्यो यज्ञपशुः । दक्षाय्यो गरुडो गृध्रश्च । स्पृहयाय्यः । गृहयाय्यो गृहस्वामी । दिधिषाय्यः ९७ । दधाते-र्द्वित्वमित्वं षुक् च । "मित्र इव यो दिधिषाय्यः" । वृञ एण्यः ९८ । वरेण्यः । स्तुवः क्सेय्यश्छन्दसि ९९ । "स्तुषेय्यम्पुरुवर्चसम्"

राजेरन्यः १०० । राजन्यो वह्निः । शरण्योश्च १०१ । शरण्यम् । रमण्यम् । अर्त्तेर्निच्च १०२ । अरण्यम् । पर्जन्यः १०३ । पृषु-सेचने षस्य जः । "पर्ज्जन्यः शक्रमेघयोः" । वदेरान्यः १०४ । "वदान्यस्त्यागिवाग्मिनोः" । अभिनक्षियजिबधिपतिभ्योऽत्रन् १०५ । अमत्रम्भाजनम् । नक्षत्रम् । यजत्रः । बधत्रमायुधम् । पतत्रन्तनूरुहम् । गडेरादेश्च कः १०६ । कडत्रं डलयोरेकत्वस्मरणात् कलत्रम् । वृञश्चित् १०७ । वरत्रा चर्म्ममयी रज्जुः । सुविदेः कत्रन् १०८ । "सुविदत्रं कुटुम्बकम्" । कृतेर्नुम् च १०९ । कृन्तत्रं लाङ्गलम् । भृमृदृशियजिपर्विपच्यमितमिनमिहर्य्येभ्योऽतच् ११० । दृशभ्योऽतच् स्यात् । भरतः । मरतो मृत्युः । "दर्शतः सोमसूर्य्ययोः" । यजतऋत्विक् । पर्व्वतः । पचतोऽग्निः । अमतो रोगः । तमतस्तृष्णापरः । नमतः प्रह्वः । हर्य्यतोऽश्वः । पृषिरञ्जिभ्यां कित् १११ । पृषतो मृगो विन्दुश्च । रजतम् । खलतिः ११२ । स्खलतेः सलोपः अतच्प्रत्ययान्तस्य इत्त्वञ्च । खलतिर्निष्केशशिराः । शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ११३ । सप्तभ्योऽथः स्यात् । शयथोऽजगरः । शपथः । रवथः कोकिलः । गमथः पथिकः पन्थाश्च । वञ्चथो धूर्त्तः । वन्दीतिपाठे वन्दते वन्द्यते वा वन्दथः स्तोता स्तुत्यश्च । जीवथ आयुष्मान् । प्राणथो बलवान् । वाञ्छलकाच्छमिदमिभ्याम् । "शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः" । भृञश्चित् ११४ । भरथो लोकपालः । रुदिविदिभ्यां ङित् ११५ । रोदितीति रुदथः शिशुः । वेत्तीति विदथः । उपसर्ग्गे वसेः ११६ । आवसथो गृहम् ।

संवसथो ग्रामः। अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् ११७। तयोदशभ्योऽसच् स्यात्। अततीत्यतसः वायुरात्मा च। अवतीत्यवसो राजा भानुश्च। चमत्यस्मिन् चमसः सोमपानपात्रम्। ताम्यत्यस्मिन् तमसोऽन्धकारः। नमसोऽनुकूलः। "रभसो वेगहर्षयोः"। लभसो धनं याचकश्च। नभति नभ्यति वा नभसमाकाशः। तपसः पक्षी चन्द्रश्च। पतसः पक्षी। "पनसः कण्टकिफलः"। पणसः पण्यद्रव्यम्। महसं ज्ञानम्। वेञस्तुट् च ११८। बाकुलकाद्दान्त्वाभावः। वेतसः। वहियुभ्यां णित् ११९। वाहसोऽजगरः। यावसस्तृणसङ्घातः। वयश्च १२०। वय गतौ वायसः काकः। दिवः कित् १२१। दिवसम् दिवसश्च। कृशृशलिकलिगर्दिभ्योऽभच् १२२। करभः। शरभः। शलभः। कलभः। गर्दभः। ऋषिवृषिभ्यां कित् १२३। ऋषभः। वृषभः। रुषेर्नित्लुष् च १२४। रुष हिंसायाम् अस्मादभच् नित्कित्स्यात् लुषादेशश्च। "लुषभो मत्तदन्तिनि"। रासिवल्लिभ्याञ्च १२५। रासभः। वल्लभः। जविशिभ्यामच् १२६। जरन्तो महिषः। वेशन्तःपल्वलम्। रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि १२७। रोहन्तो वृक्षभेदः। नन्दन्तः पुत्रः। जीवन्त औषधम्। प्राणन्तो वायुः। षित्त्वात् ङीष्। रोहन्ती। तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च १२८। दशभ्यो झच् स्यात् स च षित्। तरन्तः समुद्रः। तरन्ती नौका। भवन्तः कालः। वहन्तो वायुः। वसन्त ऋतुः। भासन्तः सूर्यः। साधन्तो भिक्षुः। गडेर्घ-

टादित्वान्ङीप्त्वं ह्रस्वः। अथामन्तेति(७६४८)णेरयः। गडयन्तो जलदः। मण्डयन्तो भूषणम्। जयन्तः शक्रपुत्रः। नन्दयन्तो नन्दकः। हन्तेर्मुट् हि च १२९। हेमन्तः। भन्देर्नलोपश्च १३०। भदन्तः प्रव्रजितः। कृच्छेररः १३१। कृच्छरा वेश्या। बाहुलकाज्जर्जरभर्भरादयः। अर्त्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् १३२। षड्भ्योऽरश्चित् स्यात्। अररङ्गपाठम्। कमरः कामुकः। भ्रमरः। चमरः। देवरः। वासरः। कुवः करन् १३३। कुररः पक्षिभेदः। अङ्गिमदिमन्दिभ्यः आरन् १३४। अङ्गारम्। मदारो वराहः। "मन्दारः पारिजातकः"। गडेः कड च १३५। कडारः। शृङ्गारभृङ्गारौ। १३६। शृभृञ्भ्यामारन्नुम् गुक् ह्रस्वश्च। शृङ्गारो रसः। "भृङ्गारः कनकालुका"। कञ्जिमृजिभ्याश्चित् १३७। कञ्जिः सौत्रः कञ्जारो मयूरः। मार्जारः। कमेः किदुच्चोपधायाः १३८। चिदित्यनुवृत्तेरारन्नन्तोदात्तः। कुमारः। तुषारादयश्च १३९। तुषारः। कासारः। मह्नार आम्रभेदः। दीङो नुट् च १४०। दीनारः सुवर्णाभरणम्। सर्त्तेरपः षुक् च १४१। सर्षपः। उषिकुटिदलिकचिखजिभ्यः कपन् १४२। "उषपौ वह्निसूर्य्ययोः"। कुटपो मानभाण्डम्। दलपः प्रहरणम्। कचपं शाकपत्रम्। खजपं घृतम्। क्वणेः सम्प्रसारणञ्च १४३। कुणपम्। कपश्चाक्रवर्म्मणस्य १४४। स्वरे भेदः। विटपपिष्टपविशिपोलपाः १४५। चत्वारोऽमी कपन्प्रत्ययान्ताः। विट शब्दे विटपः। विशतेरादेः पः प्रत्ययस्य तुट् षत्वम्। पिष्टपं भुवनम्। विशतेः प्रत्ययादेरित्त्वम्। विशिपं मन्दिरम्। वलतेः सम्प्र-

स्तरणम्। "उलपं कोमलं तृणम्"। इतेस्तिकन् १४६। वर्त्तिका। कृतिभिदिलतिभ्यः कित् १४७। कृत्तिका। भित्तिका भित्तिः। लत्तिका गोधा। इष्यशिभ्यान्तकन् १४८। इष्टका। अष्टका। इणस्तशन्तशसुनौ १४९। एतशो ब्राह्मणः। स एव एतशाः। वीपतिभ्यान्तनन् १५०। वी गत्यादौ। वेतनम्। पत्तनम्। दृदलिभ्याम्भः १५१। दर्भः। "दलभः स्यादृषिचक्रयोः"। अर्त्तिगृभ्याम्भन् १५२। अर्भः। गर्भः। इणः कित् १५३। इभः। असिसञ्जिभ्यां क्थिन् १५४। अस्थि। सक्थि। प्लुषिकुषिशुषिभ्यः क्सिः १५५। प्लुक्षिर्वह्निः। कुक्षिः। शुक्षिर्वातः। अशेर्नित् १५६। अक्षि। इषेः क्सुः १५७। इक्षुः। अवितृस्तृतन्त्रिभ्य ईः १५८। अवीनारी रजस्वला। तरीर्नौः। स्तरीर्धूमः। तन्त्रीर्वीणादेर्गुणः। यापोः किद्द्वे च १५९। ययीरश्वः। "पपीः स्यात्सोमसूर्ययोः"। लक्षेर्मुट् च १६०। लक्ष्मीः।

इत्युणादिषु तृतीयः पादः।

वातप्रमी १। वातशब्दे उपपदे माधातोरीप्रत्ययः स च कित्। वातप्रमीः। अयं स्त्रीपुंसयोः। ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निज्यतुजलिजिष्टुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः २। द्वादशभ्यः क्रमात्स्युः। ऋतेः कत्निच् यण्। "बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः"। तनोतेर्यतुच्। तन्यतुर्वायुः रात्रिश्च। अ-

ञ्जेरलिच्। अञ्जलिः। वनेरिष्टुच्। वनिष्टुः (१) स्थविरः। अञ्जेरिष्ठच्। अञ्जिष्ठो भानुः। अर्पयतेरिसन्। अर्पिसोऽग्रमांसम्। मदेः स्यन्। मत्स्यः। अतेरिथिन्। अतिथिः। अङ्गेरुलिः। अङ्गुलिः। कौतेरसः। कवसः। अचदृत्येके। कवचम्। यौतेरासः। यवासोदुरालभा। कृशेरानुक्। कृशानुः। स्रः करन् ३। उत्तरसूत्रे किद्ग्रहणादिह ककारस्य नेत्त्वम्। शर्करा। पुषः कित् ४। पुष्करम्। कलश्च ५। पुष्कलम्। गमेरिनिः ६। गमिष्यतीति (२) गमी। आङि णित् ७। आगामी। भुवश्च ८। भावी। प्रे स्थः ९। प्रस्थायी। परमे कित् १०। परमेष्ठी। मन्थः ११। मन्थतेरिनिः कित्स्यात्। कित्त्वान्नकारलोपः। मन्थाः। मन्थानौ। मन्थानः। पतस्थ च १२। पन्थाः। पन्थानौ। खजेराकः १३। खजाकः पक्षी। बलाकादयश्च १४। बलाका। शलाका। पताका (३)। पिनाकादयश्च १५। पातेरित्त्वं नुम् च! "क्लीबपुंसोः पिनाकः स्यात् शूलशङ्करधन्वनोः"। तड आघाते। तडाकः (४)। कपिदूषिभ्यामीकन् १६। कपीका पक्षिजातिः। "दूषीका नेत्रयोर्म-

(१) वनेरिष्णुच् वनिष्णुरपानमित्युज्ज्वलदत्तीये पाठः।

(२) भविष्यति गम्यादय (उ ४।३।१पृ०) इत्युक्तेराह गमिष्यतीति।

(३) एवं मनाका हस्तिनी पवाका वात्या पटाका पक्षी इत्यादि।

(४) एवं भदाकः कल्याणं श्यैङः सुगागमे श्यामाकः नञ्पूर्वभातेः नभाकं नभः। पिष संचर्णने पकारस्य णत्वे युगागमे पिण्याकस्तिलकल्कः। शुनतेर्गुनाकइत्यादि।

लम्"। अनिहृषिभ्यां किच्च १७। अनीकम्। हृषीकम्। चङ्कणः कङ्कणच् १८। कण शब्दे अस्माद्यङ्लुगन्तादीकन् धातोः कङ्कणादेशश्च। "घण्टिकायां कङ्कणीका सैव प्रतिसरापि च"। शृपृवृञां द्वे रक् चाभ्यासस्य १९। शर्शरीको हिंस्रः। पर्परीको दिवाकरः। वर्वरीकः कुटिलकेशः। फर्फरीकादयश्च। २०। स्फुर स्फुरणे। अस्मादीकन् धातोः फर्फरादेशः। फर्फरीकङ्किसलयम्। दर्दरीकं वादित्रम्। झर्झरीकं शरीरम्। तिन्तिड़ीको वृक्षभेदः। चरेर्नुम् च। चञ्चरीको भ्रमरः। मर्मरीको हीनजनः। कर्करीका गलन्तिका। पुणतेः- पुण्डरीकं वादित्रम्। पुण्डरीकोव्याघ्रोऽग्निर्दिग्गजश्च। ईषेः किद्ध्रस्वश्च २१। इषीका शलाका। ऋजेश्च २२। ऋजीक उपहतः। सर्तेर्नुम् च २३। सृणीका लाला। मृडः कीकन्कङ्कणौ २४। मृडीको मृडः। मृडङ्कणः शिशुः। अलीकादयश्च २५। कीकनन्ता निपात्यन्ते। अल भूषणादौ अलीकं मिथ्या। विपूर्वात् व्यलीकं विप्रियङ्कृदश्च। "वलीकम्पटलप्रान्ते" इत्यादि(५)। कॄतॄभ्यामीषन् २६। करीषोऽस्त्री शुष्कगोमये। तरीषस्तरीता। शॄपॄभ्यां किच्च २७। शिरीषः। पुरीषम्। अर्जेर्ऋज च २८। "ऋजीषं पिष्टपचनम्"। अम्बरीषः २९। अयन्निपात्यते। अबि शब्दे "अम्बरीषः पुमान् भ्राष्ट्रम्"। अमरस्तु "क्लीबेऽम्बरीषं भ्राष्ट्रो ना"। कॄशॄपॄकटिपटिशौटिभ्य ईरन् ३०। करीरो वंशाङ्कुरः। शरीरम्। परीरम्फलम्। कटीरः कन्दरो जघनप्रदेशश्च। पटी-

---

(५) एवं वाह्लीको गोवाहः। सुप्रतीकोऽग्निकोणदिग्गजइत्यादि।

दृश्चन्दनः कण्टकः कामश्च। "शौटीरस्त्यागिवीरयो"। ब्राह्मणादित्वात् ष्यञ्। शौटीर्यम्। वशःकित् ३१। उशीरम्। कशेर्मुट् च ३२। कश्मीरो देशः। कृञ उच्च ३३। कुरीरं मैथुनम्। घसेः किच्च ३४। चीरम्। गभीरगम्भीरौ ३५। गमेर्भः पचे नुम् च। विषाविहा ३६। स्यतेर्जहातेश्च विपूर्वाभ्यामप्रत्ययः। विषा बुद्धिः। विहा स्वर्गः। अव्यये इमे। पच एलिम च ३७। "पचेलिमो वह्निरव्योः"। शीङो धुक्लग्वलञ्वालनः ३८। चत्वारः प्रत्ययाः स्युः। शीधु मद्यम्। शीलं स्वभावः। शैवलः शेवालम्। बाहुलकात् वस्य पोऽपि। "शेवालः शैवलो न स्त्री शेपालो जलनीलिका"। मृकणिभ्यामूकोकणौ ३९। मरूको मृगः। काणूकः काकः। वलेरूकः ४०। वलूकः पक्षी उत्पलमूलञ्च। उलूकादयश्च ४१। वलेः सम्प्रसारणमूकश्च। "उलूकाविन्द्रपेचकौ"। वावदूको वक्ता। भल्लूकः। शलेर्बुक् च। शम्बूको जलशुक्तिः (६)। शल्मिमण्डिभ्यामूकण् ४२। शालूकं मूलविशेषः। मण्डूकः। नियो मिः ४३। नेमिः। अर्त्तेरूच्च ४४। ऊर्म्मिः भुवः कित् ४५। भूमिः। अश्नोतेः रश च ४६। रश्मिः किरणो रज्जुश्च। दल्मिः ४७। दल विशरणे दल्मिरिन्द्रायुधम्। वी-ज्या-ज्वरिभ्यो निः ४८। बाहुलकात्सत्वम्। "वेणिः स्यात् केशविन्यासः प्रवेणी च स्त्रियामुभे"। ज्यानिः। जूर्णिः। (७)

(६) एवं भलतेर्वृद्धौ भालूका महेर्हस्य धत्वे मधूको वृक्षभेदः। एवं बन्धूकजम्बूकवास्तूकैलूकादयोऽत्र द्रष्टव्या इत्युज्ज्वलदत्तः।

(७) बाहुलकात् चोणिः क्षेणिरित्यादीत्युज्ज्वलदत्तः।

सृवृषिभ्यां कित् ४९। सृणिरङ्कुशः। 'वृष्णिः क्षत्रियमेषयोः'। अङ्गेर्नलोपश्च ५०। अग्निः। वह्निश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ५१। वह्निः। श्रेणिः। श्रोणिः। योनिः। द्रोणिः। ग्लानिः। हानिः। तूर्णिः। बाहुलकात् म्लानिः (८)। घृणिपृश्निपार्ष्णिचूर्णिभूर्णि ५२। एते पञ्च निपात्यन्ते। घृणिः किरणः। स्पृशतेः सलोपः। पृश्निरल्पशरीरः। पृषेर्वृद्धिश्च। पार्ष्णिः पादतलम्। चरेरुपधायाऊत्त्वम्। चूर्णिः कपर्दकशतम्। बिभर्तेरुत्वम्। भूर्णिर्धरणी। वृदृभ्यां विन् ५३। वर्विर्घस्मरः। दर्विः। जृशॄस्तॄजागृभ्यः क्विन् ५४। जीर्विः पशुः। शीर्विर्हिंस्रः। स्तीर्विरध्वर्युः। जागृविर्नृपः। दिवो द्वे दीर्घश्चाभ्यासस्य ५५। 'दीदिविः स्वर्गमोक्षयोः'। कृविघृष्विच्छविस्थविकिकीदिवि ५६। कृविस्तन्तुवायद्रव्यम्। घृष्विर्वराहः। छाद्येर्ह्रस्वत्वञ्च। छविर्दीप्तिः। स्थविस्तन्तुवायः। दीव्यतेः किकीपूर्वात् किकीदिविश्चाषः। बाहुलकात् ह्रस्वदीर्घयोर्विनिमयः "चाषेण किकिदीविना"। पातेर्डति ५७। पतिः। शकेर्ऋतन् ५८। शकृत्। अमेरतिः ५९। अमतिः कालः। वहिवस्यर्तिभ्यश्चित् ६०। वहतिः। पवनः। "वसतिर्गृहयामिन्योः"। अरतिः क्रोधः। अञ्चेः को वा ६१। अङ्कतिः। अञ्चतिर्वातः। हन्तेरंह च ६२। हन्तेरतिः स्यादंहादेशश्च धातोः। हन्ति दुरितमनया अंहतिर्दानम्। "प्रादेशनन्निर्वपणमपवर्जनमंहतिः"। रमेर्नित् ६३। "रमतिः कालकामयोः"। सूङः क्रिः ६४। सूरिः।

(८) एवं शीङोऽपि निप्रत्यये ह्रस्वत्वे शिनिः क्षत्रियभेदः।

अदिशदिभूशुभिभ्यः क्रिन् ६५। अद्रिः। शद्रिः शर्करा। भूरि प्रचुरम्। शुभ्रिर्ब्रह्मा। वङ्क्र्यादयश्च ६६। क्रिन्नन्ता निपात्यन्ते। वङ्क्रिर्वाद्यभेदो गृहदारु पार्श्वास्थि च। वप्रिः क्षेत्रम्। अंह्रिरङ्घ्रिश्च चरणः। तदिः सौत्रो धातुः। तन्द्रिर्मोहः बाहुलकाद्गुणः। भेरिः। राशदिभ्यां त्रिप् ६७। रात्रिः। शत्रिः कुञ्जरः। अदेस्त्रिनिश्च ५८। चात्त्रिप्। अत्त्री। अत्त्रिणौ। अत्त्रिणः। अत्रिः। अत्री। अत्रयः। पतेरत्रिन् ६९। पतत्रिः पक्षी। मृकणिभ्यामीचिः ७०। मरीचिः। कणीचिः पल्लवी निनादश्च। श्वयतेश्चित् ७१। श्वयीचिर्व्याधिः। वेञो डिच्च ७२। वीचिस्तरङ्गः। नञ्समासे अवीचिर्नरकभेदः। ऋहनिभ्यामूपन् ७३। अरूषः सूर्यः। हनूषो राक्षसः। पुरः कुषन् ७४। पुर अग्रगमने पुरुषः। अन्येषामपीति(४।२६८०वा)दीर्घः। पूरुषः। पृनहिकलिभ्य उषच् ७५। परुषम्। नहुषः। कलुषम्। पीयेरूषन् ७६। पीय इति सौत्रो धातुः। पीयूषम्। बाहुलकाद्गुणे "पेयूषोऽभिनवम्पयः"। मसजेर्नुम् च ७७। मञ्जूषा। गडेश्च ७८। गण्डूषः। गण्डूषा। अर्त्तेरूः ७९। अररूः शत्रुः। अररू। अररवः। कुटः किच्च ८०। कुटरूर्वस्त्रगृहम्। कित्त्वप्रयोजनञ्चिन्त्यम्। शकादिभ्योऽटन् ८१। शकटोऽस्त्रियाम्। ककिर्गत्यर्थः। कङ्कटः सन्नाहः। देवटः शिल्पी। करट इत्यादि (९) कृकदिकडिकटिभ्योऽम्बच् ८२। करम्बं

---

(९) सरटः कृकलासः वरट कीटभेदः कपटो माया कर्कटसर्कटपर्पटाः प्रसिद्धार्थाः कक्खटं कठिनं चपेटचपटौ तले, मयटः प्रसाद इत्यादि।

व्यामिश्रम् । कदिकडी सौत्रौ । कदम्बो वृक्षभेदः । कडम्बोऽग्रभागः । कटम्बो वादित्रम् । कदेर्णिल्यच्चिणि ८३ । "कादम्बः कलहंसः" । कलिकर्द्योरमः ८४ । कलमः । कर्दमः । कुणिपुल्योः किन्दच् ८५ । कुण शब्दोपकरणयोः । कुणिन्दः शब्दः । पुलिन्दो जातिविशेषः । कुपेर्वा बश्च ८६ । कुपिन्द-कुबिन्दौ तन्तुवाये । नौ षञ्जेर्घथिन् ८७ । निषङ्गथिरालि-ङ्गकः । उदृक्तेश्चित् ८८ । उदरथिः समुद्रः । सर्त्तेर्णिच्च ८९ । सारथिः । खर्जिपिञ्जादिभ्य ऊरोलचौ ९० । खर्जूरः । कर्पूरः । वल्लूरं शुष्कमांसम् (१०) । पिञ्जूलं कुशवर्त्तिः । लङ्गे-र्वृद्धिश्च । लाङ्गलम् । कुसूलः (११) । कुवश्चट् दीर्घश्च ९१ । कूची चित्रलेखनिका । समीणः ९२ । समीचः समुद्रः । समीची हरिणी । सिवेष्टेरू च ९३ । सूचो दर्भाङ्कुरः । सूची । शमेर्ब्वन् ९४ । शम्बो मुसलम् । उलबादयश्च ९५ । वन्नन्ता निपात्यन्ते । उच समवाये । चस्य लत्वम् । गुणाभा-वश्च । उलबः गर्भाशयः। शुल्बन्ताम्रम् । निम्बः । बिम्बम्(१२) स्थः स्तोऽम्बजवकौ ९६ । तिष्ठतेरम्बच् अवक एतौ स्तस्तादेशश्च । "स्तम्बो गुच्छस्तृणादिनः" । स्तवकः पुष्पगुच्छः । शाशपिभ्या-न्ददनौ ९७ । "शादो जम्बालशष्पयोः" । शब्दः । अब्दादयश्च

(१०) एवं धुस्तूर शालूर मल्लूर कस्तूर्यादय ऊरान्ता निपात्यन्ते ।

(११) एवं कम्बूलोटम्बौ स्त्रीगात्राच्छादनं तमेबुन्दोर्धते ताम्बूलं गृ हिंसायां दुगागमो वृद्धिश्च शार्दूलः । दुनोतेः कूक् दुकूलं एवमन्येऽपी-त्युज्ज्वलदत्तः ।

(१२) नयति नेत्योर्नुमागमो ह्रस्वे च निम्बबिम्बे एवं धन्वजम्बादयः ।

९८। अवतीत्यब्दः (१३)। कौतेर्नुम्। कुन्दः। वलिमलितनिभ्यः कयन् ९९। वलयम्। मलयः। तनयः। वृञो: पुगडुकौ च१००। वृषयआश्रयः। हृदयम्। मिपीभ्यां रुः१०१। मेरुः। पेरुः सूर्यः। बाहुलकात् पिबतेरपि। "सम्वत्सरवपुः पारुः पेरुर्वासीर्दिनप्रणीः"। जत्वादयश्च १०२।(१४)। जतु। जतुणी। अश्रु। अश्रुणी। रुशातिभ्यां क्रुन् १०३। रुरुर्मृगभेदः। शातयतीति शत्रुः। प्रज्ञादौ (७२६५०) पाठाद्ध्रस्वत्वम्। जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्त्वण्-क्विन् शक् स्व ढ डटाटाचः१०४। "जनित्वौ मातापितरौ"। दात्वः दाता। च्यौत्नः गन्ता अण्डजः क्षीणपुण्यश्च। सृणिः अङ्कुशः चन्द्रः सूर्यो वायुश्च। वृशः आर्द्रकं मूलकञ्च। मत्स्यः। पण्ठः। डित्त्वाट्टिलोपः। नमतीति नटः शैलूषः। बिभर्त्ति भरटः कुलालो भृतकश्च। अन्येभ्योपि दृश्यन्ते१०५। पेत्वममृतम्। भृशम् (१५) कुसेरुम्भोभेदेताः १०६। कुसुम्भम्। कुसुमम्। कुसीदम्। कुसेतो जनपदः। सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिषणाशल्याः १०७। सनोतेरसिप्रत्यय उपधावृद्धिः। सानसिर्हिरण्यम्। वृञो नुक् च। वर्णसिर्जलम्। पॄ पर्णसिर्जलगृहम्। तड आधाते

(१३) एवं दन्दं समूहः कन्दं मूलं तुन्दः स्थूलोदरं ककन्दो मृगभेदः।

(१४) शिग्रुः शोभाञ्जनः वितद्रुर्नदी कर्दुर्वर्णभेदः अश्रु नयनजलं वमूरु प्रभृतयोऽप्यत्रैव द्रष्टव्या इत्युज्ज्वलदत्तः।

(१५) एवं कच बन्धने शक्रु कच्छुः कूलम् सरटो वातः, ध्यै ध्यात्वं चिन्ता, होत्वोयजमानः, नूनिर्व्रीहिः एवमन्येऽपीत्युज्ज्वलदत्तः।

तण्डुलः। अङ्कि लक्षणे उशच्। अङ्कुशः। चषेरालच्। "चषालो यूपकटकः"। दृल्वलो दैत्यभेदः। पल्वलम्। ञि षृषा गथः ऋकारस्य इकारः। धिष्ण्यम्। शलेय्यैः। "शल्यं वा पुंसि शङ्कर्नौ"। मूशक्यविभ्यः क्लः १०८। मूलम्। शक्लः प्रियंवदे। अब्लोरसः। बाहुलकाद्भेः। अब्लः। माछासशिभ्यो यः १०९। माया। छाया। सस्यम्। बाहुलकात्सुनोतेः। "सव्यन्द-क्षिणवामयो"। जनेर्यक् ११०। ये विभाषा (उ६।४३) जन्यं युद्धम्। जाया भार्या। अघ्न्यादयश्च १११। यगन्ता निपात्यन्ते। हन्तेर्यक् अडागमः उपधालोपश्च। अघ्न्या माहेयी। अघ्न्यः प्रजापतिः। कनी दीप्तौ। कन्या। बवयोरैक्याम्। वन्ध्या (१६)। स्नामदिपद्यर्त्तिपृशकिभ्यो वनिप् ११२। स्नावा रसिकः। मद्वा शिवः। पद्वा पन्थाः। "अर्वा तुरङ्गगर्ह्ययोः"। पर्व ग्रन्थिः प्रस्तावश्च। शक्वा हस्ती। ङीब्रफौ। शक्वरी अ-ङ्गुलिः। शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ११३। शीवा अजगरः। क्रुश्वा सृगालः। रुह्वा वृक्षः। जित्वा जेता। क्षित्वा वायुः। सृत्वा प्रजापतिः। धृत्वा विष्णुः। ध्याप्योः संप्रसारणञ्च ११४। धीवा कर्मकरः। पीवा स्थूलः। अदेर्ध च ११५। अध्वा। प्र ईरशदोस्तुट् च ११६। प्रेत्वा, प्रशत्वा च सागरः। प्रेत्वरी प्रशत्वरी च नदी। सर्वधातुभ्य इन् ११७। पचिरग्निः। तुडिः। तुण्डिः। वलिः। वटिः।। यजिः। देवयजिः। काशतइति काशिः। यतिः। मल्लिः। मल्ली।

(१६) एवं बभि धाञो यक् आतो लोपः बन्ध्या कौतेर्डुकि कुडंग भिक्तिः मनो धत्वं मध्यमित्यादि।

केलिः। मसी परिणामे। मसिः। बाहुलकाद्गुणः। कोटिः। हेलिः। बोधिः। नन्दिः। कलिः। हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च ११८। "हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ। चन्द्रे कीरे प्लवङ्गे च यमे वाते च कीर्त्तितः"॥ पेषिर्वज्रम्। रोहिर्व्रती। वर्त्तिः। वेदिः। छिदिः छेत्ता। कीर्त्तिः। इगुपधात्कित् ११९। कृषिः। ऋषिः। शुचिः। लिपिः। बाहुलकाद्वत्वे लिविः। तूल निष्कर्षे। तूलिः कूर्चिका। भ्रमेः सम्प्रसारणञ्च १२०। भृमिर्वातः। बाहुलकाद्भ्रमिः। कृमितमिशतिस्तम्भामत इच्च १२१। क्रिमिः। सम्प्रसारणानुवृत्तेः। कृमिरपि। तिमिर्मत्स्य भेदः। "शितिमेचकशुक्लयोः"। स्तिम्भिः समुद्रः। मनेरुच्च १२२। मुनिः। वर्णेर्वलिश्चाहिरण्ये १२३। वर्णिः मोतः अस्य वलिरादेशः। "करोपहारयोः पुंसि वलिः प्राण्यङ्गजे स्त्रियाम्"। हिरण्ये तु वर्णिः सुवर्णम्। वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् १२४ "वासिः छेदनवस्तुनि"। वापिः वापी याजिर्यष्टा। राजिः राजी। व्राजिर्वातालिः। सादिः सारथिः। "निघातिर्लोहघातिनी"। वाशिरग्निः। वादिर्विद्वान्। वारिर्गजबन्धनी। जले तु क्लीबम्। बाहुलकात् "वारिः पथिकसंहतौ"। णहो भश्च १२५। "नाभिः स्यात् क्षत्रिये पुंसि प्राण्यङ्गे तु स्त्रियाम्" पुंस्यपीति केचित्। कृषेर्वृद्धिश्छन्दसि १२६। कार्षिः। शृः शकुनौ १२७। शारिः शारिका। कृञ उदीचाङ्कारकेषु १२८। कारिः शिल्पी। जनिघसिभ्यामिण्

१२९। जनिर्जननम्। घासिर्भक्ष्यमग्निश्च। अज्यतिभ्याञ्च १३०। आजिः संग्रामः। आतिः पक्षी। पादे च १३१। पदाजिः। पदातिः। अशिपणाय्योरुडायलुकौ च १३२। अशेरुट्। राशिः पुञ्जः। पणायतेरायलुक्। पाणिः करः। वातेर्डिच्च १३३। विः पक्षी स्त्रियां वीत्यपि। प्रे हरतेः कूपे १३४। प्रहिः कूपः। नौ व्यो यलोपः पूर्वस्य च दीर्घः १३५। व्येञ्इण् स्यात् यलोपश्च नेर्दीर्घः। नीविः। नीवी वस्त्रग्रन्थौ मूलधने च। समाने ख्यः स चोदात्तः १३६। समानशब्दे उपपदे ख्या इत्यस्मादिण् स्यात् स च डिच्च यलोपश्च समानस्य तूदात्तः स इत्यादेशश्च। समानं ख्यायते जनैरिति सखा। आङि श्रिहनिभ्यां ह्रस्वः १३७। इण् स्यात् स च डित् आङो ह्रस्वश्च। "स्त्रियः पाल्यश्रिकोटयः"। "सर्पे। हतासुरेप्यहिः"। अच इः १३८। रविः। पविः। तरिः। कविः। अरिः। अलिः। खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च १३९। खनिः। कषिर्हिंस्रः। अजिः। असिः। वसिर्वस्त्रम्। वनिरग्निः। सनिर्भक्तिर्दानञ्च। ध्वनिः। ग्रन्थिः। चलिः पशुः। वृतेश्छन्दसि १४०। वर्त्तिः। भुजेः किच्च १४१। भुजिः। कृगृशृपृकुटिभिदिच्छिदिभ्यश्च १४२। इः कित्स्यात्। किरिर्वराहः। "गिरिर्गौरवाक्षिरोगयोः"। गिरिणा काणः गिरिकाणः। शिरिः शलभो हन्ता च। पुरिर्नगरं राजा नदी च। कुटिः शाला शरीरञ्च। भिदिर्वज्रम्। छिदिः परशुः। कुडिकम्पयोर्नलोपश्च १४३। कुडि दाहे। कुडिर्देहः। कपिः। कल्प-

धातुभ्यो मनिन् १४४। क्रियत इति कर्म्म। चर्म्म। भस्म। जन्म। शर्म्म। स्थाम बलम्। इस्मन्निति (उ३४०पृ०) ह्रस्वः। छद्म। सुत्रामा। बृंहेर्नोऽच्च १४५। नकारस्याकारः। "ब्रह्म तत्त्वन्तपो वेदो ब्रह्मा विप्रः प्रजापतिः"। अशिशकिभ्यां छन्दसि १४६। अश्मा। शक्मा। हृभृधृसृस्तृशृभ्य इमनिच् १४७। हरिमा कालः। भरिमा कुटुम्बम्। धरिमा रूपम्। सरिमा वायुः। स्तरिमा तल्पम्। शरिमा प्रसवः। जनिमृङ्भ्यामिमनिन् १४८। जनिमा जन्म। मरिमा मृत्युः। वेञः सर्व्वत्र १४९। छन्दसि भाषायाञ्चेत्यर्थः। वेमा तन्तुवायदण्डः। अर्द्धर्चादिः। सामनी वेमनी इति वृत्तिः। नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्मामन् १५०। सप्त अमी निपात्यन्ते। म्नायतेऽनेनेति नाम। सिनोतेर्दीर्घः। सीमा। सीमानौ। सीमानः। पक्षे डाप्। सीमे। सीमाः। व्येञोऽन्त्यस्यौत्वङ्गुणः। व्योम। रौतेः। रोम। लोम। पाप्मा पापम्। ध्मामा परिमाणन्तेजश्च। मिथुने मनिः १५१। उपसर्गक्रिययोः सम्बन्धो मिथुनम्। स्वरार्थमिदम्। सुशर्मा। सातिभ्याम्मनिन्मनिणौ १५२। स्यति—साम सामनी। आत्मा। हनिमशिभ्यां सिकन् १५३। "हंसिका हंसयोषिति"। मक्षिका। कोररन् १५४। कवरः। गिर उडच् १५५। गरुडः। इन्देः कमिन्नलोपश्च १५६। इदम्। कायतेर्डिमिः १५७। किम्। सर्वधातुभ्यः ष्ट्रन् १५८। वस्त्रम्। अस्त्रम्। शस्त्रम्। इस्मन्निति (उ३४०पृ०) ह्रस्वत्वम्। छादना च्छत्त्रम्। ग्रसजिगमिनमिह-

निविशिभ्यां टन्क्विच्च १५९। भ्राष्ट्रः। गान्त्रं शकटम्। नान्त्रं स्तोत्रम्। हान्त्रं मरणम्। वेष्ट्रं पिष्टपम्। आष्ट्रमाकाशम्। दिवेर्द्युश्च १६०। द्योत्रं ज्योतिः। उषिखनिभ्यां कित् १६१। उष्ट्रः। खात्रम् खनित्रञ्जलाधारश्च। सिचिमुच्योष्टेरूच् १६२। सूत्रम्। मूत्रम्। अमिचिमिदिशसिभ्यः क्त्रः १६३। अन्त्रम्। चित्रम्। मित्त्रम्। शस्त्रम्। पुवो ह्रस्वश्च १६४। पुत्रः। स्त्यायतेर्ड्रट् १६५। स्त्री। गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः १६६। "गोत्रं स्यान्नामवंशयोः"। गोत्रा पृथिवी। धर्त्रं गृहम्। वेत्रम्। पक्त्रम्। वक्त्रम्। यन्त्रम्। सत्त्रम्। क्षत्त्रम्। हुयामाश्रुभसिभ्यस्त्रन् १६७। होत्रम्। यात्रा। मात्रा। श्रोत्रम्। भस्त्रा। गमेरा च १६८। गात्रम्। दादिभ्यश्छन्दसि १६९। दात्रम्। पात्रम्। भूवादिगृभ्यो णित्रन् १७०। भावित्रम्। वादित्रम्। गारित्रमोदनम्। चरेर्वृत्ते १७१। चारित्रम्। अशित्रादिभ्य इत्रोत्रौ १७२। अशित्रम्। वहित्रम्। धरित्री मही। लेङ् एवमादिभ्य उत्रः। तोत्रम्प्रहरणम्। ष्ठ्र्-वरुत्रं प्रावरणम्। अमेर्द्विषति चित् १७३। अमित्रः शत्रुः। आः समिण्निकषिभ्याम् १७४। सम्पूर्वादिणः निपूर्वात्कषेश्चाः स्यात्। स्वरादित्वादव्ययत्वम्। समया। निकषा। चितेः कणः कश्च १७५। बाहुलकादगुणः। "चिक्कणं मसृणं स्निग्धम्"। सूचेः स्मन् १७६। सूक्ष्मम्। पातेर्डुम्सुन् १७७। पुमान्। रुचिभुजिभ्यां किष्यन् १७८। रुचिष्यमिष्टम्। भुजिष्यो दासः। वसेस्तिः १७९। "वस्तिर्नाभेरधो द्वयोः"। "वस्तयः स्युर्दशा स्त्रके"।

बाहुलकात् शास:। शास्तिः राजदण्डः। विन्ध्याख्यमगम-स्यतीति अगस्तिः। शकन्ध्वादिः (४७५०)। सावसेः १८०। स्वस्ति। स्वरादिपाठादव्ययत्वम्। वौ तसेः १८१। वितस्तिः। पदिप्रथिभ्यान्नित् १८२। पत्तिः। प्रथितिः। तितुत्रेष्वग्रहादी-नामितीट्(३४५१४०)। दृषातेर्ह्रस्वश्च १८३। दृतिः। कृतृकृपि-भ्यः कीटन् १८४। किरीटम्। तिरीटं सुवर्णं शिरोवेष्टनञ्च। "कृपीटं कुक्षिवारिणोः"। रुचिवचिकुचिकुटिभ्यः कितच् १८५। रुचितं मिष्टम्। उचितम्। कुचितं परिमितम्। कुटितं कुटिलम्। कुटिकुषिभ्यां क्मलन् १८६। कुट्मलम्। कुष्मलम्। कुषेर्लश्च १८७। कुल्मलम्पापम्। सर्वधातुभ्योऽसुन् १८८। चेतः। सरः। पयः। सदः (१७)। रपेरत एच्च १८९। रेपोऽवद्यम्। अशेर्देवने युट् च। १९०। देवने स्तुतौ। यशः। उब्जेर्बले बलोपश्च १९१। ओजः। श्वेः सम्प्रसारणञ्च १९२। शवः। शवसी। बलप-र्यायोऽयम्। श्रयतेः स्वाङ्गे शिरः किच्च १९३। श्रयतेः शिर आदेशोसुन् किच्च। शिरः। शिरसी। अर्त्तेरुच्च १९४। उरः। व्याधौ शुट् च १९५। अर्शो गुदव्याधिः। उद-के नुट् च १९६। अर्त्तेरसुन् स्यान्तस्य च नुट्। अर्णः। अर्ण-सी। इण आगसि १९७। एनः। रिचेर्धने घिच्च १९८। चात्प्रत्ययस्य नुट्। घित्त्वात्कुत्वम्। रेक्णः सुवर्णम्। चायते-

(१७) एवं वर्चः पुरीषम् रक्षोराक्षसः रोषस्तटं रोदसी द्यावाभूम्यौ वयः कालकृतावस्था अनोभक्तं तमोऽन्धकारः राहुश्च महस्तेजः सद्मोत्सवम् सहा मार्गशीर्षः तपस्तपस्या, तपा माघः मासश्चन्द्रो मासश्च इत्यादयः।

रन्ने ह्रस्वश्च १९९। चनो भक्तम्। इङ्शीञ्भ्यां रूपस्वाङ्गयोः पुट् च २००। वर्प्पो रूपम्। शेपो गुह्यम् (१८)। स्रुरीभ्यान्तुट् च २०१। स्रोतः। रेतः। पातेर्बले जुट् च २०२। पाजः। पाजसी। उदके थुट् च २०३। पाथः। अन्ने च २०४। पाथो भक्तम्। अदेर्नुम्धौ च २०५। अदेर्भक्ते वाच्येऽसुन् नुमागमो धादेशश्च। अन्धोऽन्नम्। स्कन्देश्च स्वाङ्गे २०६। स्कन्धः। स्कन्धसी। आपः कर्म्माख्यायाम् २०७। कर्माख्यायां ह्रस्वो नुट् च वा। अप्नः अपः। बाहुलकात्। आपः। आपसी। रूपे जुट् च २०८। अजो रूपम्। उदके नुम्भौ च २०९। अम्भः। नहेर्दिवि भश्च २१०। नभः। इण आगोऽपराधे च २११। "आगः पापापराधयोः"। अमेर्हुक् च २१२। अंहः। रमेश्च २१३। रंहः। देशे ह च २१४। रमन्तेऽस्मिन् रहः। अञ्च्यञ्जियुजिभृजिभ्यः कुश्च २१५। एभ्योऽसुन् कवर्गश्चान्तादेशः। "अङ्कश्चिह्नशरीरयोः"। अङ्गः पक्षी। योगः समाधिः। भर्गस्तेजः। भूरञ्जिभ्याङ्कित्। २१६। भुवः। रजः। वसेर्णित् २१७। वासो वस्त्रम्। चन्देरादेश्च छः २१८। छन्दः। पचिवचिभ्यां सुट् च २१९। "पच्चसी तु स्मृतौ पक्षौ"। वक्षो हृदयम्। वहिहाधाञ्भ्यश्छन्दसि २२०। वक्षाः अनड्वान्। हासश्चन्द्रः। धासाः पर्वत इति प्राञ्चः। वस्तुतस्तु णिदित्यनुवर्त्तते न तु सुट्। तेन वहेरुपधावृद्धिः। इतरयोरातो युगिति(उ२७०९०)युक्। "शोणाधणा

(१८) शेपशब्दोऽदन्तोऽपि मेढ्वाची शुनःइव शेपो यस्य स मुनिः। अत्रैव केचित् फ चेति पठित्वा शेफो मेढ्रं वर्फोरूपमित्याहुः।

स्त्ववाहसा"। "ओता हवं गृणत स्तोमवाहाः"। विश्वो विहायाः। "वाजम्भरो विहायाः"। "देवो नय पृथिवीं विश्वधायाः"। "अधारयत् पृथिवीं विश्वधायसम्"। "धर्णसिम्भूरिधायस"मित्यादि। दृणा आसिः २२१। अयाः वह्निः। स्वरादिपाठादव्ययम्। मिथुनेऽसिः पूर्ववच्च सर्वम् २२२। उपसर्गविशिष्टो धातुर्मिथुनन्त्वासुनोऽपवादोऽसिः स्वरार्थः।*
नञि हन एह च २२३। अनेहाः। अनेहसौ। विधाञो वेध च २२४। विदधातीति वेधाः। नुवो धुट् च २२५। नोधः। गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वञ्च २२६। असिः(१६) स्यात्। सुतपाः। जातवेदाः। गतिकारकोपपदात् कृत् (उ५.८५.)इत्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे (२०) प्राप्ते तदपवादार्थमिदम्। चन्द्रे मो डित् २२७। चन्द्रोपपदान्माङोऽसिः स्यात्स च डित्। चन्द्रमाः। वयसि धाञः २२८। वयोधास्तरुणः। पयसि च २२६। पयोधाः समुद्रो मेघश्च। पुरसि २३० च। पुरोधाः। पुरूरवाः २३१। पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते। चक्षेर्बहुलं शिच्च २३२। नृचक्षाः। उषः कित् २३३। उषः। दमेरुनसि २३४। "सप्तर्षिर्दमुनाः"। अङ्गिराः २३५। अङ्गतेरसिः इरुडागमश्च। अप्सराः २३६। सर्त्तेरप्पूर्वादसिः। प्रायेणायं भूम्नि। अप्स

* सुपयाः स्त्रीपुंसयोः। सुपेशा इत्युज्ज्वलदत्तः।

(१६) प्रादिश्चिडाचो गतिसंज्ञा। गतौ कारके चोपपदे धातोरसिः पूर्वपदप्रकृतिस्वरत्वं चेत्यर्थः।

(२०) अनुदात्तं पदमेकवर्जम् (उ५.२८.) इत्यधिकारात्तथात्वम्।

रसः। विदिभुजिभ्यां विश्वे २३७। विश्ववेदाः। विश्वभोजाः। वशेः कनसिः २३८। सम्प्रसारणम्। उसनाः।

इत्युणादिषु चतुर्थः पादः।

---

अदि भुवो डुतच् १ अद्भुतम्। गुधेरूमः २। गोधूमः। मसेरूरन् ३ मसूरः। प्रथमे पादे असेरुरन्नसेश्चे त्यत्र(उ२८४पृ॰) व्याख्यातम्। स्थः किच्च ४ स्थूरो मनुष्यः। पातेरतिः ५। पातिः स्वामी। सम्पातिः पक्षिराजः। वातेर्नित् ६।"वातिरादित्यसोमयोः"। अर्त्तेश्च ७। अरतिरुद्वेगः। तृहेः क्नो हलोपश्च ८। तृणम्। इन्लुटितनिताडिभ्य उलन् तण्डश्च। ९। त्रियन्ते लुच्यन्ते तन्यन्ते ताड्यन्तइति वा तण्डुलाः। दन्सेः टटनौ न आ च १०।"दासः सेवकशूद्रयोः"। दंशेश्च ११। दाशो धीवरः। उदि चेर्डैसिः १२। स्वरादिपाटादव्ययत्वम्। उच्चैः। नौ दीर्घश्च १३। नीचैः। सौ रमेः क्तो दमे पूर्व्वपदस्य च दीर्घः १४। रमेः सुपूर्व्वाद्दमे वाच्ये क्तः स्यात्। कित्त्वादनुनासिकलोपः। सूरत उपशान्तो दयालुश्च(१)। पूञोयणुक् ह्रस्वश्च १५। यत्प्रत्ययः। पुण्यम्। स्नन्सेः शि कुट् किच्च १६। स्रंसतेः शिरादेशः यत्प्रत्ययः कित् तस्य कुडागमश्च। शिक्यम्। अर्त्तेः क्युरुच्च १७। उरणो मेषः। हिंसेरीरन्नीरचौ (२) १८।"हिंसीरो व्याघ्रदुष्टयोः"। उदि-

---

(१) दमादन्यत्र सुरतः क्रीड़ानुरक्तः।

(२) स्वरार्थं प्रत्ययद्वयं रूपं तु तुल्यम्।

हृणातेरजलौ पूर्वपदान्त्यलोपश्च १९। उदरम्। डित् खनेर्मुट् चोदात्तः २०। अच् अल् च डित्स्याद्धातोर्मुट् स चोदात्तः। मुखम्। अमेः सन् २१। अंसः। मुहेः खो मूर् च २२। मूर्खः। नहेर्हलोपश्च २३। नखः। शीङो ह्रस्वश्च २४। शिखा। माङ ऊखो मय च २५। मयूखः। कलिगलिभ्याम् फगस्योच्च २६। कुल्फः शरीरावयवो रोगश्च। गुल्फः पादग्रन्थिः। स्पृशेः श्वण्शुनौ पृ च २७। श्वण्शुनौ प्रत्ययौ पृ इत्यादेशः। "पार्श्वोऽस्त्री कक्षयोरधः"। पर्शुरायुधम्। श्मनि श्रयतेर्डुन् २८। श्मन्शब्दो मुखवाची। मुखमाश्रयत इति श्मश्रु। अश्वादयश्च २९। अश्रु नयनजलम्। जनेष्टन् लोपश्च ३०। जटा। अच् तस्य जङ्घ च ३१। तस्य जनेः जङ्घादेशः स्यादच्च। जङ्घा। हन्तेः शरीरावयवे द्वे च ३२। जघनम्। "पश्चान्नितम्बः स्त्रीकट्यां क्लीवे तु जघनं पुरः"। क्लिशेरन् लो लोपश्च ३३। लकारस्य लोपः। केशः। फलेरितजादेश्च पः ३४। पलितम्। कृञादिभ्यः संज्ञायां वुन् ३५। करकः करका। कटकः। नरकम् नरकः। नारकोऽपि चेति द्विरूपकोषः। सरकम् गमनम्। कोरकः कोरकञ्च। चीकयतेराद्यन्तविपर्ययश्च ३६। कीचको वंशभेदः। पचिमच्योरिच्चोपधायाः ३७। पेचकः। मेचकः। जनेररष्ठ च ३८। जठरम्। वचिमनिभ्याश्चिच्च ३९। वठरो मूर्खः। "मठरो मुनिशौण्डयोः"। विदादित्वात् (५०० पृ०) माठरः। गर्गादित्वात् (५०१ पृ०) माठर्य्यः। ऊर्जि हृणातेरलचौ पूर्वपदान्त्यलोपश्च ४०। "ऊर्द्दरः शूररक्षसोः"। कृदरादयश्च ४१। कृदरः

कूसूलः। ऋदरं विलम्। सूदरः सर्पः। हन्तेर्युग्णादन्तयोर्घत्वतत्वे ४२। घातनो मारकः। क्रमिगमिचमिभ्यस्तुन् वृद्धिश्च ४३। क्रान्तुः पक्षी। गान्तुः पथिकः। चान्तुर्मशकः। हर्य्यतेः कन्यन् हिर च ४४। कन्यन् प्रत्ययः। हिरण्यम्। कृञः पासः ४५। कर्पासः। विल्वादित्वात्(१८७४०)कार्पासं वस्त्रम्। जनेस्तुरश्च ४६। जर्तुर्हस्ती योनिश्च। ऊर्णोतेर्डः ४७। ऊर्णा। दधातेर्यत् नुट् च ४८। धान्यम्। जीर्य्यतेः क्रिन् रश्च वः ४६। "जिव्रिः स्यात् कालपक्षिणोः"। बाहुलकाद्वलि (१५७४०) चेति दीर्घो न। मव्यतेर्य्यलोपो मश्चापतुट् चालः ५०। मव्यतेरालः प्रत्ययः स्यात् तस्यापतुडागमो धातोर्यलोपो मकारस्यान्त्यस्य। ममापतालो विषयः। ऋजेः कीकन् ५१। ऋजीक इन्द्रो धूमश्च। तनोतेर्डउः सन्वच्च ५२। "तितउः पुंसि क्लीवे च"। अर्भकपृथुकपाका वयसि ५३। ऋधु वृद्धौ। अतो वुन्। भकारश्चान्तादेशः। प्रथेः कुकन् सम्प्रसारणञ्च। पिबतेः कन्। अवद्यावमाधमार्वरेफाः कुत्सिते ५४। वदेर्नञि यत्। अवद्यम्। अवतेरमः वस्य पक्षे धः। अवमः। अधमः। अर्त्तेर्व्वन्। अर्वा। रिफतेस्तौदादिकात् रेफः। लीङ्रीङोर्हस्वः पुट्च तरौ श्लेषणकुत्सितयोः ५५। तरौ प्रत्ययौ क्रमात् स्तो धातोर्ह्रस्वः प्रत्ययस्य पुट्। लिप्तं श्लिष्टम्। रिप्रं कुत्सितम्। क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च ५६। क्लिशेः कन् स्यात् उपधाया ईत्त्वं लस्य लोपो नामागमश्च। कीनाशः यमः। किन्त्वफलञ्चिन्त्यम्। अश्नोतेराशुकर्म्मणि वरट् च ५७। चकारादुपधाया ईत्त्वम्। ईश्वरः। चतेरुरन्

५८। चत्वारः। प्रातेररन् ५९। प्रातः। अमेस्तुट् च ६०। अन्तर्मध्यम्। दृहेर्गोलोपो दस्य नः ६१। गप्रत्ययो धातोरन्त्यस्य लोपो दकारस्य नकारः। नगः। सिचेः संज्ञायां हनुमौ कश्च ६२। सिञ्चतेः कप्रत्ययो हकारादेशो नुम् च स्यात्। सिंहः। व्याङि घ्रातेश्च जातौ ६३ कप्रत्ययः स्यात्। व्याघ्रः। हन्तेरच् घुर च ६४। घोरम्। चलेरुपधालोपश्च। ६५। चादच्। च्मा। तरतेर्ड्रि: ६६। त्रयः। त्रीन्। ग्रहे रनिः ६७। ग्रहणिः। ङीष्। ग्रहणी व्याधिभेदः। प्रथेरमच् ६८। प्रथमः। चरेश्च ६९। चरमः। मङ्गेरलच् ७०। मङ्गलम्।

इत्युणादिषु पञ्चमः पादः।

---

## उणादयो बहुलम्। ३। ३। १।

एते वर्त्तमाने संज्ञायाञ्च बहुलं स्युः। केचिदविहिता अप्यूह्याः

"संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।
कार्य्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु"।

## भूतेऽपि दृश्यन्ते। ३। ३। २।

## भविष्यति गम्यादयः। ३। ३। ३।

## दाशगोघ्नौ सम्प्रदाने। ३। ४। ७३।

एतौ सम्प्रदाने कारके निपात्येते। दाशन्ति तस्मै दाशः। गां हन्ति तस्मै गोघ्नोऽतिथिः।

**भीमादयो (१) ऽपादाने । ३ । ४ । ७४ ।**

भीमः । भीष्मः । प्रस्कन्दनः । रक्षः । मूर्खः । खलतिः ।

**ताभ्यामन्यत्रोणादयः । ३ । ४ । ७५ ।**

सम्प्रदानापादानपरामर्शार्थन्ताभ्यामिति । ततोऽन्यत्र भवति तन्तुः । वृत्तन्तदिति वर्त्म । चरितन्तदिति चर्म्म ।

**तुमुण्ण्वुलौ क्रियायाङ्क्रियार्थायाम् । ३ । ३ । १० ।**

क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णन्दर्शको याति । अत्र वासरूपेण तृजादयो न, पुनर्विधिसामर्थ्यात् ।

**समानकर्तृकेषु तुमुन् । ३ । ३ । १५८ ।**

अक्रियार्थोपपदार्थमेतत् । इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन् स्यात् । इच्छति भोक्तुम् वष्टि वाञ्छति वा ।

**शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् । ३ । ४ । ६५ ।**

एषूपपदेषु धातोस्तुमुन् स्यात् । शक्नोति भोक्तुम् । एवन्धृष्णोतीत्यादापि । अर्थग्रहणमस्तिनैव सम्बध्यते अनन्तरत्वात् । अस्ति भवति विद्यते वा भोक्तुम् ।

(१) भीम भीष्म भयानक वाह चरु प्रस्कन्दन प्रपात समुद्र स्रुव स्रुक् दृष्टि रक्षः शङ्कु सुक मूर्ख खलति भीमादि । आकृतिगणोऽयम् ।

पर्य्याप्तिवचनेष्वलमर्थेषु । ३ । ४ । ६६ ।

पर्य्याप्तिः पूर्णता तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन् स्यात्। पर्य्याप्तो भोक्तुं प्रवीणः कुशलः पटुरित्यादि। पर्य्याप्तिवचनेषु किम्? अलं भुक्त्वा। अलमर्थेषु किम्? पर्य्याप्तम्भुङ्क्ते प्रभूतेतेह गम्यते न तु भोक्तुः सामर्थ्यम्।

कालसमयवेलासु तुमुन्। ३। ३। १६७।

पर्य्यायोपादानमर्थोपलक्षणार्थम्। कालार्थेषूपपदेषु तुमुन् स्यात्। कालः समयो वेला अनेहा वा भोक्तुम्। प्रैषादिग्रहणमिहानुवर्त्तते तेनेह न। "भूतानि कालः पचतीति वार्त्ता"।

भाववचनाश्च। ३। ३। ११।

भाव (उ४२४८०)इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः। यागाय याति।

अण् कर्म्मणि च। ३। ३। १२।

कर्म्मण्युपपदे क्रियार्थायां क्रियायाञ्चाण् स्यात्। ण्वुलोऽपवादः। काण्डलावो व्रजति। परत्वादयं कादीन् बाधते। कम्बलदायो व्रजति।

पदरुजविशस्पृशो घञ्। ३। ३। १६।

भविष्यतीति निवृत्तम्। पद्यतेऽसौ पादः। रुजतीति रोगः। विशतीति वेशः। स्पृशतीति स्पर्शः।

## सृ स्थिरे। ३। ३। १७।

सृ इति लुप्तविभक्तिकं सर्त्तेः स्थिरे कर्त्तरि घञ् स्यात्। सरति कालान्तरमिति सारः। व्याधिमत्स्यबलेषु चेति वाच्यम्*। अतीसारो व्याधिः। अन्तर्भावितण्यर्थोऽत्र सरतिः। रुधिरादिकमतिशयेन सारयतीत्यर्थः। विसारो मत्स्यः। "सारो बले दृढांशे" च।

## भावे। ३। ३। १८।

सिद्धावस्थापन्ने (२) धात्वर्थे वाच्ये धातोर्घञ् स्यात्। पाकः। पाकौ।

## स्फुरतिस्फुलत्योर्घञि। ६। १। ४७।

अनयोरेच आत्त्वं स्याद्घञि। स्फारः। स्फालः। उपसर्गस्य घञीति (४८०सू०) दीर्घः। परीहारः। इकः काशे (४८०सू०)। काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः। नीकाशः। अनूकाशः। इकः किम्? प्रकाशः। नोदात्तोपदेशेति(७२७२सू०)न वृद्धिः। शमः। आचमादेस्तु। आचामः। कामः। विश्राम इति त्वपाणिनीयम्।

## स्यदो जवे। ६। ४। २८।

स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते। स्यदो वेगः। अन्यत्र स्यन्दः।

---

(२) "साध्यरूपा क्रिया तत्र धातुरूपनिबन्धना। सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धन "इति हर्य्युक्तमनुरुत्याह सिद्धेति।

## अवोदैधौद्मप्रश्रथहिमश्रथाः। ६। ४। २९।

अवोदोऽवक्लेदनम्। एध इन्धनम्। श्रोद्मउन्दनम्। श्रथ्ये-र्नलोपो हस्वाभावश्च।

## अकर्त्तरि च कारके संज्ञायाम्। ३। ३। १९।

कर्त्तृभिन्ने कारके घञ् स्यात्।

## घञि च भावकरणयोः। ६। ४। २७।

रञ्जेर्नलोपः स्यात्। रागः। अनयोः किम् रज्यत्यस्मिन् रङ्गः। प्रास्यते इति प्रासः। संज्ञायामिति प्रायिकम्। को भवता लाभो लब्धः। इत उत्तरम्भावे अकर्त्तरि कारके इति कृत्यल्युटो बहुलमिति (उ३००सू०) यावद् द्वयमप्यनुवर्त्तते।

## परिमाणाख्यायां सर्वेभ्यः। ३। ३। २०।

घञ्। अजपोर्बाधनार्थमिदम्। एकस्तण्डुलनिचायः। द्वौ शूर्पनिष्पावौ। द्वौ कारौ। दारजारौ कर्त्तरि णिलुक् च *। दारयन्तीति दाराः। जरयन्तीति जाराः।

## इङश्च। ३। ३। २१।

घञ्। अचोऽपवादः। उपेत्य अस्मादधीयते उपाध्यायः। अपादाने स्त्रियामुपसंख्यानन्तदन्ताच्च वा ङीष् *। उपाध्याया उपाध्यायी। शॄ वायुवर्णनिवृतेषु *। शॄ इत्यविभक्तिको निर्देशः। शारो वायुः। करणे घञ्। शारो वर्णः। चित्री करणमिह धात्वर्थः। निव्रियते आव्रियतेऽनेनेति निवृतमाव-

रणम् बाहुलकात् करणे क्तः । "गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः" अकृतप्रावरण इत्यर्थः ।

उपसर्गे रुवः । ३ । ३ । २२ ।

घञ् । संरावः । उपसर्गे किम् रवः ।

अभिनिसस्तनः शब्दसंज्ञायाम् । ८ । ३ । ८६ ।

अस्मात् स्तनः सस्य मूर्द्धन्यः । अभिनिष्टानो वर्णः । शब्दसंज्ञायां किम् ? अभिनिःस्तनति मृदङ्गः ।

समि युद्रुदुवः । ३ । ३ । २३ ।

संयूयते मिश्रीक्रियते गुडादिभिरिति संयावः पिष्टविकारोऽपूपविशेषः । सन्द्रावः । सन्दावः ।

श्रिणीभुवोऽनुपसर्गे । ३ । ३ । २४ ।

श्रायः । नायः । भावः । अनुपसर्गे किम् प्रश्रयः । प्रणयः । प्रभवः । कथम् ? प्रभावो राज्ञ इति प्रकृष्टो भाव इति प्रादि समासः । कथं ? राज्ञो नय इति बाहुलकात् ।

वौ क्षुश्रुवः । ३ । ३ । २५ ।

विक्षावः । विश्रावः । वौ किम् क्षवः । श्रवः ।

अवोदोर्नियः । ३ । ३ । २६ ।

अवनायोऽधोनयनम् । उन्नायः ऊर्द्धनयनम् । कथम् ? उन्नयः उत्प्रेक्षेति बाहुलकात् ।

प्रे द्रुस्तुस्रुवः। ३। ३। २७।

प्रद्रावः। प्रस्तावः। प्रस्रावः। प्रे इति किम्? द्रवः। स्तवः। स्रवः।

निरभ्योः पूल्वोः। ३। ३। २८।

निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेषः। अभिलावः। निरभ्योः किम् पवः। लवः।

उन्न्योर्ग्रः। ३। ३। २९।

उद्गारः। निगारः। उन्न्योः किम् गरः।

कॄ धान्ये। ३। ३। ३०।

कॄ इत्यस्माद्धान्यविषयकादुन्न्योर्घञ् स्यात्। उत्कारो निकारो धान्यस्य विक्षेप इत्यर्थः। धान्ये किम्? भिक्षोत्करः। पुष्पनिकरः।

यज्ञे समि स्तुवः। ३। ३। ३१।

समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः संस्तावः। यज्ञे किम्? संस्तवः परिचयः।

प्रे स्त्रोऽयज्ञे। ३। ३। ३२।

अयज्ञे इति च्छेदः यज्ञे इति प्रकृतत्वात्। प्रस्तारः। अयज्ञे किम्? बर्हिषः प्रस्तरो मुष्टिविशेषः।

प्रथने वावशब्दे। ३। ३। ३३।

विपूर्वात् स्तृणातेर्घञ् स्यादशब्दविषये प्रथने । पटस्य विस्तारः । प्रथने किम् ? तृणविस्तरः । अशब्दे किम् ? ग्रन्थविस्तरः ।

छन्दोनाम्नि च । ३ । ३ । ३४ ।

स्त्र इत्यनुवर्त्तते । विष्टारपङ्क्तिः छन्दः । विस्तीर्य्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ् । ततः कर्म्मधारयः ।

छन्दोनाम्नि च । ८ । ३ । ९४ ।

विपूर्वात् स्तृणातेर्घञन्तस्य सस्य षत्वं स्याच्छन्दोनाम्नि । इति षत्वम् ।

उदि ग्रहः । ३ । ३ । ३५ ।

उद्ग्राहः ।

समि मुष्टौ । ३ । ३ । ३६ ।

मल्लस्य संग्राहः । मुष्टौ किम् ? द्रव्यस्य संग्रहः ।

परिन्योर्नीणोर्द्यूताभ्रेषयोः । ३ । ३ । ३७ ।

परिपूर्व्वान्नयतेर्निपूर्वादिणश्च घञ् स्यात् क्रमेण द्यूतेऽभ्रेषे च विषये । परिणायेन शारान् हन्ति समन्तान्नयनेनेत्यर्थः । एषोऽत्र न्याय उचितमित्यर्थः । द्यूताभ्रेषयोः किम् ? परिणयो विवाहः । न्ययो नाशः ।

परावनुपात्यय इणः । ३ । ३ । ३८ ।

क्रमप्राप्तस्य अनतिपातोऽनुपात्ययः। तव पर्य्यायः। अनुपात्यये किम्? कालस्य पर्यय: अतिपात इत्यर्थः।

व्युपयोः शेतेः पर्य्याये। ३। ३। ३९।

तव विशायः। राज्ञ उपशायः। पर्य्याये किम्? विशयः संशयः। उपशयः समीपशयनम्।

हस्तादाने चेरस्तेये। ३। ३। ४०।

हस्तादान इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते। पुष्पप्रचायः। हस्तादाने किम्? वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति। अस्तेये किम्? पुष्पप्रचयश्चौर्य्येण।

निवासचितिशरीरोपसमाधानेष्वादेश्च कः। ३। ३। ४१।

एषु चिनोतेर्घञ् आदेश्च ककारः। उपसमाधानं राशीकरणम् तच्च धात्वर्थः। अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः। निवासे-काशी निकायः। चितौ-आकायमग्निश्चिन्वीत। शरीरे- चीयतेऽस्मिन्नस्थ्यादिकमिति कायः। समूहे-गोमयनिकायः। एषु किम्? चयः। चेः कः इति वक्तव्ये आदेरित्युक्तिर्यङ्लुक्यादेरेव यथा स्यादिति गोमयानान्निकेचायः पुनः पुनः राशीकरणमित्यर्थः।

सङ्घे (२) चानौत्तराधर्य्ये। ३। ३। ४२।

---

(२) उत्तरे चाधरे चोत्तराधरास्तेषां भावस्तद्भिन्नेऽर्थे गम्येइत्यर्थः।

चेर्घञ् आदेश्च कः। भिक्षुनिकायः। प्राणिनां समूहः सङ्घः। अनौत्तराधर्य्ये किम्? सूकरनिचयः (४)। सङ्घे किम्? ज्ञान-कर्म्मसमुच्चयः।

**कर्म्मव्यतिहारे णच् स्त्रियाम्।३।३।४३।**

स्त्रीलिङ्गे भावे णच्।

*** णचः स्त्रियामञ्।५।४।१४।**

**न कर्म्मव्यतिहारे।७।३।६।**

अत ऐच् न स्यात्। व्यावक्रोशी। व्यावहासी।

**अभिविधौ भावइनुण्।३।३।४४।**

*** अणिनुणः।५।४।१५।**

आदिवृद्धिः। इन्नण्यनपत्ये (५.२४पृ०) सांराविणम् वर्त्तते।

**आक्रोशेऽवन्योर्ग्रहः।३।३।४५।**

अव, नि, एतयोर्ग्रहेर्घञ् स्यात् शापे। अवग्राहस्ते भूयात् अविभवइत्यर्थः। निग्राहस्ते भूयात् बाध इत्यर्थः। आक्रोशे किम्? अवग्रहः पदस्य। निग्रहश्चोरस्य।

**प्रे लिप्सायाम्।३।३।४६।**

पात्रप्रग्राहेण चरति भिक्षुः।

**परौ यज्ञे।३।३।४७।**

उत्तरः परिग्राहः। स्फ्येन वेदेः स्वीकरणम्।

---

(४) सन्यमानार्थं सूकरा उत्तराधरभावेन शेरते तद्देव प्रत्युदाहरणम्।

* स्त्रियां विहित णजन्तात् स्वार्थेऽञ् स्यात्। अञन्तात् ङीप्।

* इनुणन्तात् स्वार्थेऽण् स्यात्।

नौ वृ धान्ये। ३। ३। ४८।

इति लुप्तपञ्चमीकम्। नीवारः। धान्ये किम्? निवरा(५)-कन्या। क्तिन्विषयेऽपि बाहुलकादप्। प्रवरा सेतिवत्।

उदि श्रयतियौतिपूद्रुवः। ३। ३। ४९।

उच्छ्रायः। उद्यावः। उत्पावः। उद्द्रावः। "कथम्पतनान्ताः समुच्छ्रयाः" इति? बाहुलकात्।

विभाषाङि रुप्लुवोः। ३। ३। ५०।

आरावः-आरवः। आप्लावः-आप्लवः।

अवे ग्रहो वर्षप्रतिबन्धे। ३। ३। ५१।

विभाषेति वर्त्तते। अवग्राहः-अवग्रहः। वर्षप्रतिबन्धे किम्? अवग्रहः पदस्य।

प्रे वणिजाम्। ३। ३। ५२।

प्रे ग्रहेर्घञ् वा वणिजां सम्बन्धि चेत्प्रत्ययार्थः तुलासूत्रमिति यावत्। तुलाप्रग्राहेण चरति तुलाप्रग्रहेण वा।

रश्मौ च। ३। ३। ५३।

प्रग्रहः-प्रग्राहः।

वृणोतेराच्छादने। ३। ३। ५४।

(५) निवरेति स्वहस्तद्रित्यादिना(उ४।२९०)कर्म्मणि अपि कर्म्मार्थित्वात् स्त्रीत्वम्

विभाषा प्र इत्येव। प्रवारः-प्रवरः (६)।

परौ भुवोऽवज्ञाने। ३। ३। ५५।

परिभावः-परिभवः। अवज्ञाने किम्? सर्व्वतोभवनम्परिभवः।

एरच्। ३। ३। ५६।

चयः। जयः। भयादीनामुपसंख्यानम् *। नपुंसके क्तादि-निवृत्त्यर्थम्। भयम्। वर्षम्।

ॠदोरप्। ३। ३। ५७।

ॠवर्णान्तादुवर्णान्तादप्। करः। गरः। शरः। यवः। स्तवः। लवः। पवः (७)।

वृक्षासनयोर्विष्टरः। ८। ३। ९३।

अनयोर्विपूर्वस्य स्तः षत्वं निपात्यते। विष्टरो वृक्ष आसनञ्च। वृक्षेति किम्? वाक्यस्य विस्तरः।

ग्रहवृदृनिश्चिगमश्च। ३। ३। ५८।

अप्स्यात्। घञचोरपवादः। ग्रहः। वरः। दरः। निश्चयः। गमः। वशिरण्योरुपसंख्यानम् *। वशः। रणः। घञर्थे कविधानम् *। प्रस्थः। विघ्नः। द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम् *। चक्रम्। चिक्लिदम्। चक्नसः।

उपसर्गेऽदः। ३। ३। ५९।

---

(६) आच्छादने किं प्रवरो गौः प्रशस्तइत्यर्थः।

(७) ॠदोरित्यत्र दकारो मुखसुखार्थः, नतु तकारस्तेन ॠवर्णान्तादित्युक्तमेवम् तात्परत्वाभावात् दीर्घॠवर्णान्तादप्यपविधानार्थयेनाह स्तवः पव इति।

अप्स्यात्।

## घञपोश्च। २। ४। ३८।

अदेर्घस्लृ स्यात् घञि अपि च। प्रघसः विघसः (८)। उपसर्गे किम्?। घासः।

## नौ ण च। ३। ३। ६०।

नौ उपपदे अदेर्घः स्यादप् च। न्यादः। निघसः।

## व्यधजपोरनुपसर्गे। ३। ३। ६१।

अप्स्यात्। व्यधः। जपः। उपसर्गे तु। आव्याधः। उपजापः।

## स्वनहसोर्वा। ३। ३। ६२।

अप्। पक्षे घञ्। स्वनः—स्वानः। हसः-हासः। अनुपसर्ग इत्येव। प्रस्वानः। प्रहासः।

## यमः समुपनिविषु च। ३। ३। ६३।

एषु अनुपसर्गे च यमेरब् वा। संयमः-संयामः। उपयमः-उपयामः। नियमः-नियामः। वियमः-वियामः। यमः-यामः।

## नौ गदनदपठस्वनः। ३। ३। ६४।

अब्वा स्यात्। निगदः-निगादः। निनदः-निनादः। निपठः-निपाठः। निस्वनः-निस्वानः।

(८) व्यद्यते विशेषेण भक्ष्यते विघसो वैश्वदेवशिष्टमन्नम्।

### क्वणो वीणायाञ्च। ३। ३। ६५।

नावनुपसर्गे च वीणाविषयाच्च क्वणतेरब्वा स्यात्। वीणाग्रहणं प्राद्यर्थम्। निक्वणः-निक्वाणः। क्वणः क्वाणः। वीणायान्तु प्रक्वणः-प्रक्वाणः।

### नित्यम्पणः परिमाणे। ३। ३। ६६।

अप्स्यात्। मूलकपणः। शाकपणः। व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते सोऽस्य विषयः। परिमाणे किं पाणः।

### मदोऽनुपसर्गे। ३। ३। ६७।

धनमदः। उपसर्गे तु उन्मादः।

### प्रमदसम्मदौ हर्षे। ३। ३। ६८।

हर्षे किम्? प्रमादः। सम्मादः।

### समुदोरजः पशुषु। ३। ३। ६९।

सम्पूर्व्वोऽजिः समुदायेउत्पूर्व्वश्च प्रेरणे तस्मात् पशुविषयकादप्स्यात्। अघञपोरित्युक्तेः(उ४८सू०सू०)वीभावो न। समजः पशूनां सङ्घः। उदजः पशूनां प्रेरणम्। पशुषु किम् समाजो ब्राह्मणानाम्। उदाजः चत्रियाणाम्।

### अक्षेषु ग्लहः। ३। ३। ७०।

अक्षशब्देन देवनं लक्ष्यते तत्र यत्पणरूपेण ग्राह्यन्तत्र ग्लह इति निपात्यते। अक्षस्य ग्लहः। "व्यात्युक्षीमपसरणग्लहामदीव्यन्"। अक्षेषु किम् पादस्य ग्रहः।

प्रजने सर्त्तेः। ३। ३। ७१।

प्रजनं प्रथमगर्भग्रहणम्। गवामुपसरः। कथमवसरः प्रसर इति? अधिकरणे "पुंसि संज्ञायामिति" (७४५६९०) घः।

ह्वः सम्प्रसारणञ्च न्यभ्युपविषु। ३। ३। ७२।

निहवः। अभिहवः। उपहवः। विहवः। एषु किम्? प्रह्वायः।

आङि युद्धे। ३। ३। ७३।

आहूयन्तेऽस्मिन्नित्याहवः। युद्धे किम्? आह्वायः।

निपानमाहावः। ३। ३। ७४।

आङ्पूर्व्वस्य ह्वयतेः सम्प्रसारणमप् वृद्धिश्च उदकाधारश्चेद्वाच्यः। "आहावस्तु निपानं स्यादुपकूपजलाशये"।

भावेऽनुपसर्गस्य। ३। ३। ७५।

अनुपसर्गस्य ह्वयतेः सम्प्रसारणमप् च स्यात् भावे। हवः।

हनश्च बधः। ३। ३। ७६।

अनुपसर्गाद्धन्तेर्भावेऽप् चस्यात् बधादेशश्चान्तोदात्तः "बधेन दस्युम्"। चाद्घञ्। घातः।

मूर्त्तौ घनः। ३। ३। ७७।

मुर्त्तिः काठिन्यन्तस्मिन्नभिधेये हन्तेरप्स्यात् घनश्चादेशः। अभ्रघणः। कथं सैन्धवघनमानयेति घनशब्देन धर्मो लक्ष्यते।

अन्तर्घनो देशे। ३। ३। ७८।

वाहीकग्रामविशेषस्य संज्ञेयम्। अन्तर्घण इति पाठान्तरम्।

अगारैकदेशे प्रघणः प्रघाणश्च। ३। ३। ७९।

द्वारदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरो वाह्यश्च। तत्र वाह्ये प्रकोष्ठे निपातनमिदम्। प्रविशद्भिर्ज्जनैः पादैः प्रकर्षेण हन्यते इति प्रघणः-प्रघाणः। कर्म्मण्यप्। पक्षे वृद्धिः।

उद्घनोऽत्याधानम्। ३। ३। ८०।

अत्याधानमुपरिस्थापनम्। यस्मिन् काष्ठे अन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तदुद्घनः। अधिकरणेऽप्।

अपघनोऽङ्गम्। ३। ३। ८१।

अङ्गं शरीरावयवः। स चेह न सर्व्वः किन्तु पाणिः पादश्चेत्याहुः। करणेऽप्। अपघातोऽन्यः।

करणेऽयोविद्रुषु। ३। ३। ८२।

एषु हन्तेः करणेऽप्स्याद्घनादेशश्च। अयो हन्यतेऽनेनेत्ययोघनः। विघनः। द्रुघनः। द्रुघण इत्येके। पूर्व्वपदात् संज्ञायामिति (४१५ पृ०) णत्वम्। संज्ञैषा कुठारस्य द्रुर्वृक्षः।

स्तम्बे क च। ३। ३। ८३।

स्तम्बे उपपदे हन्तेः करणे कः स्यादप् च अप्सन्नियोगेन घनादेशश्च। स्तम्बघ्नः। स्तम्बघनः। करण इत्येव। स्तम्बघातः।

परौ घः। ३। ३। ८४।

परौ हन्तेरप्स्यात् करणे घशब्दश्चादेशः। परिहन्यतेऽनेनेति परिघः।

परेश्च घाङ्कयोः। ८। २। २२।

परेः रेफस्य लो वा स्याद्घशब्दे अङ्कशब्दे च। पलिघः-परिघः। पल्यङ्कः-पर्य्यङ्कः। इह तरप्तमपौ घ इति(७०सू०) कृत्रिमस्य न ग्रहणं व्याख्यानात्।

उपघ्न आश्रये। ३। ३। ८५।

उपपूर्व्वाद्धन्तेरप्स्यादुपधालोपश्च। आश्रयशब्देन सामीप्यं लक्ष्यते। पर्वतेनोपहन्यते सामीप्येन गम्यते इति पर्व्वतोपघ्नः।

सङ्घोद्घौ गणप्रशंसयोः। ३। ३। ८६।

संहननं सङ्घः। भावेऽप्। उद्धन्यते उत्कृष्टो ज्ञायते इत्युद्घः। कर्म्मण्यप्। गत्यर्थानां बुद्ध्यर्थत्वाद्धन्तिर्ज्ञाने।

निघो निमितम्। ३। ३। ८७।

समन्तान्मितन्निमितम्। निर्विशेषं हन्यन्ते ज्ञायन्ते इति निघाः वृक्षाः समारोहपरिणाहा इत्यर्थः।

ड्वितः क्त्रिः। ३। ३ ८८।

अयम्भाव एव स्वभावात्। क्त्रेर्मम्नित्यम् *। क्त्रिप्रत्ययान्तात् मप् निर्वृत्तेऽर्थे नित्यग्रहणात् क्त्रिर्म्मब्विषयः। अतएव क्त्र-

क्त्रेन न विग्रहः । डुपचष् पाकेन निर्वृत्तम् । पक्त्रिमम् । डुवप् उप्त्रिमम् ।

ट्वितोऽथुच् । ३ । ३ । ८९ ।

अयमपि स्वभावात् भावएव । टुवेपृ वेपथुः । श्वयथुः

यजयाचयतविच्छप्रच्छरक्षो नङ् । ३ । ३ । ९० ।

यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । प्रश्ने चासन्नेति(३।२।८६ ६०) ज्ञापकात् न सम्प्रसारणम् । ङित्त्वन्तु विश्न इत्यत्र गुणनिषेधाय । रक्ष्णः ।

स्वपो नन् । ३ । ३ । ९१ ।

स्वप्नः ।

उपसर्गे घोः किः । ३ । ३ । ९२ ।

प्रधिः । अन्तर्द्धिः(९) । उपाधीयतेऽनेनेत्युपाधिः ।

कर्म्मण्यधिकरणे च । ३ । ३ । ९३ ।

कर्म्मण्युपपदे घोः किः स्यादधिकरणेऽर्थे । जलानि धीयन्ते अस्मिन्निति जलधिः ।

स्त्रियां क्तिन् । ३ । ३ । ९४ ।

स्त्रीलिङ्गे भावादौ क्तिन् स्यात् । घञोऽपवादः । अजपौ तु पर-

---

(९) अन्तःशब्दस्य आङ्किविधिणत्वेषूपसर्गत्वमिति *वार्त्तिकोक्तेराहान्तर्द्धिरिति

त्वाद्बाधते। कृतिः। चितिः (१०)। स्तुतिः। स्फायी-स्फातिः। स्फीतिः का मे इति तु प्रामादिकम्। कान्ताद्भावत्वर्थे णिचि स्फच इरिति(उ४२२पृ०उ.)वा समाधेयम्। श्रुयजीषिस्तुभ्यः करणे*। श्रूयतेऽनया श्रुतिः। यजेरिषेश्च इष्टिः। स्तुतिः। ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः*। तेन नत्वम् (११)। कीर्णिः। गीर्णिः। लूनिः। धूनिः। ह्लाद इति (उ३५९पृ०) योगविभागात् क्तिनि ह्रस्वः। प्रह्लन्निः। ति च (उ३५९पृ०)। चूर्त्तिः। फुल्तिः। चायतेः क्तिनि चिभावो वाच्यः*। अपचितिः। सम्पदादि (१२)भ्यः क्विप्*। सम्पत्। विपत्। क्तिन्नपीष्यते (१३)। सम्पत्तिः। विपत्तिः।

## स्थागापापचो भावे।३।३।९५।

क्तिन् स्यात्। अङोऽपवादः (१४)। प्रस्थितिः। उपस्थितिः। सङ्गीतिः। सम्पीतिः। पक्तिः। कथमवस्था संस्थेति व्यवस्थायामिति (९९पृ०) ज्ञापकात्।

(१०) चिनोतिस्तौतिभ्यां स्त्रियामुभयप्रसङ्गे परत्वात् क्तिनेवेत्याह चितिरिति

(११) तेनेति रदाभ्यामित्यनेन (उ३४६पृ)कीर्णिरित्यादौ, लूनिरित्यादौ तु ल्वादिभ्यः(उ३२७पृ०)इति नत्वं स च गणः क्र्यादौ १६५ १६६ १६७ पृष्ठेषु द्रष्टव्यः।

(१२) एवम् आपद् प्रतिपद्।

(१३) अस्त्रियामिति (उ२९७पृ०सू०) प्रतिषेधेन स्त्रियां वासरूपविधेरभाव इत्याशयेनेदम्।

(१४) पुरस्तादपवादन्यायेन स्थादिभ्यश्चातश्चोपसर्गे इति(उ४५२पृ०) पचेस्तु-षिद्भिदादिभ्यइति (उ४५२पृ०)प्राप्तस्याङ इत्यर्थः। अङोऽपवादेन तु ण्वुलिञोरिति भावः तेन ण्वुलिञौ परत्वाद्भवत एव। तत्त्व०

### ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ।३।३।९७।

अवतेर्ज्वरत्वरेत्यूट् (७।२।८४९०) ऊतिः। • स्वरार्थं वचनम्। उदात्त इति हि वर्त्तते (१५)। यूतिः। जूतिः। अनयोर्दीर्घत्वञ्च निपात्यते,। स्यतेः। सातिः। द्यतिस्यतिमास्थेतीति (७।४।४९०)प्राप्तस्येत्त्वस्याभावो निपात्यते। सनोतेर्वा,जनसनेत्यात्त्वे (७।१२४९०) कृते स्वरार्थं निपातनम्। हन्तेर्हिनोतेर्वा हेतिः। कीर्त्तिः।

### व्रजयजोर्भावे क्यप्।३।३।९८।

व्रज्या। इज्या।

### संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः।३।३।९९।

समजादिभ्यः स्त्रियाम्भावादौ क्यप्स्यात्स चोदात्तः संज्ञायाम्। अजेः क्यपि वीभावो नेति वाच्यम् •। समजन्ति तस्यामिति समज्या सभा। निषीदन्त्यस्यान्निषद्या आपणः। निपतन्त्यस्यामिति निपत्या पिच्छिला भूमिः। मन्यतेऽनयेति मन्या गलपार्श्वशिरा। विदन्त्यनया विद्या। सुत्या अभिषवः। शय्या। भृत्या। ईयतेऽनया इत्या शिविका।

### कृञः श च।३।३।१००।

---

(१५) मन्त्रे वृषेषेति(७४८९९०)सूत्रादनुवर्त्तते इत्यर्थः। एवञ्च क्तिन्नन्तस्याद्युदात्तत्वे प्राप्तेऽन्तोदात्ततार्थमिदम्।

कृञ इति योगविभागः। कृञः क्यप्स्यात्। कृत्या। श च। चात् क्तिन्। क्रिया-कृतिः।

## इच्छा। ३। ३। १०१।

इषेर्भावे शः। यगभावश्च निपात्यते। इच्छा। परिचर्य्या-परिसर्य्यामृगयाटाट्यानामुपसंख्यानम् *। शे यक् च निपात्यते। परिचर्य्या पूजा। परिसर्य्या परिसरणम्। अत्र गुणोऽपि। मृग अन्वेषणे चुरादावदन्तः अतो लोपाभावोऽपि शे यकि णिलोपः। मृगया। अटतेः शे यकि व्यशब्दस्य द्वित्वं पूर्व्वभागे यकारनिवृत्तिर्दीर्घश्च। अटाट्या। जागर्त्तेरकारो वा *। पक्षे शः। जागरा-जागर्य्या।

## अ प्रत्ययात्। ३। ३। १०२।

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात्। चिकीर्षा। पुत्रकाम्या।

## गुरोश्च हलः। ३। ३। १०३।

गुरुमतो हलन्तात् स्त्रियामकारः स्यात्। ईहा। ऊहा। गुरोः किम्? भक्तिः। हलः किम्? नीतिः। निष्ठायां सेट इति वक्तव्यम् *। नेह। आप्तिः। तितुत्रेति (७। २। ९ सू०) नेट्। दीप्तिः। तितुत्रेष्वग्रहादीना(१६)मिति। वाच्यम् *। निगृहीतिः। निपठितिः

---

(१६) येषामिट् क्तिन्प्रत्यये भाष्यादौ दृश्यते ते ग्रहादयः तेन उपस्निहितिः निकुचितिरित्यादि सिद्धम्।

## षिद्भिदादिभ्योऽङ्। ३। ३। १०४।

षिद्भ्यो भिदादि (१७) भ्यश्च स्त्रियामङ्। जृष-ऋदृशोऽङि (७१०४५०) गुणः। जरा। त्रपूष-त्रपा। भिदा। विदारण-एवायम्। भित्तिरन्या। छिदा। मृजा। कृपेः सम्प्रसारणञ्च॰। कृपा।

## चिन्तिपूजिकथिकुम्बिचर्च्चश्च। ३। ३। १०५।

अङ् स्यात्। युचोऽपवादः। चिन्ता। पूजा। कथा। कुम्बा। चर्च्चा।

## आतश्चोपसर्गे। ३। ३। १०६।

अङ् स्यात्। क्तिनोऽपवादः। प्रदा। उपदा। अदन्तरोरुपसर्गवद्वृत्तिः *। श्रद्धा। अन्तर्द्धा।

## ण्यासश्रन्थो युच्। ३। ३। १०७।

आकारस्यापवादः। कारणा। हारणा। आसना। श्रन्थना। घट्टिवन्दिविदिभ्यश्चेति वाच्यम् *। घट्टना। वन्दना। वेदना। इषेरनिच्छार्थस्य॰। अन्वेषणा। परेर्वा॰। पर्य्येषणा परीष्टिः।

## रोगाख्यायां ण्वुल् बहुलम्। ३। ३। १०८।

---

(१७) भिदा छिदा विदा क्षिपा गुहा श्रद्धा मेधा गोधा आरा हारा कारा (बन्धनस्थाने) च्चिपा तारा (ज्योतिषि) धारा रेखा चूड़ा पीड़ा वपा वसा मृजा कृपा भिदादि। अत्र छिदा द्वैधीकरणएवान्यत्र छित्तिः। आरा शस्त्र्यामन्यत्र अर्त्तिः। धारा जलप्रवाहेऽन्यत्र धृतिः गुहा गिर्य्योषध्योरन्यत्र गूढिरिति बोध्यम्।

प्रच्छर्द्दिका। प्रवाहिका। विचर्च्चिका। क्वचिन्न। शिरोऽर्त्तिः। धात्वर्थनिर्द्देशे ण्वुल्वक्तव्यः *। आसिका। शायिका। इक्-श्तिपौ धातुनिर्द्देशे * (१८)। पचिः। पचतिः। वर्णात्कारः (१९) *। निर्द्देश इत्येव। अकारः। ककारः। रादिफः *। रेफः (२०)। मत्वर्थाच्छः *। बहुलवचनादकारलोपः। मत्वर्थीयः। इणजादिभ्यः * (२१)। आजिः आतिः। इञ् वपादिभ्यः *। वापिः। वासिः। स्वरे भेदः। इक् कृषादिभ्यः *। कृषिः। गिरिः।

## संज्ञायाम्। ३। ३। १०९।

अत्र धातोर्ण्वुल्। उद्दालकपुष्पभञ्जिका (२२)।

## विभाषाख्यानपरिप्रश्नयोरिञ् च। ३। ३। ११०

---

(१८) अत्र धातोर्निर्द्देशोऽनुकरणं बहुलमित्यनुवर्त्तते तेन गुप्तिज्किद्भ्यः सन्नित्यादौ (उ१०१पृ०) क्वचिन्न। उपसर्गात् सुनोतेरित्यादि (उ३७पृ०) निर्द्देशात् अकर्त्तर्य्यपि शबादय इति। तत्त्व०

(१९) कारप्रत्ययस्य धातोरविहितत्वेऽपि धात्वधिकारस्थत्वात् कृत्संज्ञा तेन कृदन्तत्वात् प्रातिपदिकत्वं प्रयोजनाभावात् कस्य नेत्संज्ञा आर्द्धधातुकत्वाभावान्नेट्। तत्त्व०

(२०) पूर्वोक्तरीत्या कृत्त्वात् वासरूपविधिना कारोऽपि तेन "रकारादीनि नामानि शृण्वतो मम पार्व्वतीति" साधु।

(२१) धात्वर्थनिर्द्देशे प्राप्तस्य ण्वुलोऽपवादः। एवमग्रेऽपि। आजिरिति बाहुलकादजेर्वीभावाभावः।

(२२) उद्दालकस्य श्लेष्मातकस्य पुष्पाणि भज्यन्तेऽस्यामित्याधारे ण्वुलर्थम्।

परिप्रश्ने आख्याने च गम्ये इञ् स्यात् । चाण्वुल् । विभाषोक्तेर्यथाप्राप्तमन्येऽपि । त्वं कां ? कारिं, कारिकां, क्रियां, कृत्यां, कृतिं वाऽकार्षीः । सर्वां कारिं, कारिकां, क्रियां, कृत्यां, कृतिं वाऽकार्षम् । एवं गणिं गणिकां गणनाम् । पाचिं पचिकां पचां पक्तिम् ।

## पर्य्यायार्हर्णोत्पत्तिषु ण्वुच् । ३ । ३ । १११ ।

पर्य्यायः परिपाटी क्रमः । अर्हणमर्हः योग्यता । पर्य्यायादिषु द्योत्येषु ण्वुच् वा स्यात् । भवत आसिका । शायिका । अग्रगामिका । भवानिक्षुभक्षिकामर्हति । ऋणे-इक्षुभक्षिकां मे धारयति । उत्पत्तौ-इक्षुभक्षिका उदपादि ।

## आक्रोशे नञ्यनिः । ३ । ३ । ११२ ।

विभाषेति निवृत्तम् । नञि उपपदेऽनिः स्यादाक्रोशे । अजीवनिस्ते शठ ! भूयात् । अप्रयाणिः । कृत्यल्युटो बहुलम् (उ३००सू०)भावेऽकर्त्तरि च कारके संज्ञायामिति च निवृत्तम् । राज्ञा भुज्यन्ते राजभोजनाः शालयः ।

## नपुंसके भावे क्तः । ३ । ३ । ११४ ।

## ल्युट् च । ३ । ३ । ११५ ।

हसितम् हसनम् । योगविभाग उत्तरार्थः ।

कर्म्मणि च येन संस्पर्शात् कर्त्तुः शरीरसुखम्
।३।३।११६।

येन स्पृश्यमानस्य कर्त्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्म्मण्युपपदे ल्युट् स्यात्। पूर्व्वेण सिद्धे नित्यसमासार्थं वचनम्। पयःपानम् सुखम्। कर्त्तरीति किम्? गुरोः स्नापनं सुखम्। नेह गुरुः कर्त्ता किन्तु कर्म्म।

वा यौ।२।४।५७।

अजेर्वी वा स्यात् यौ। प्रवयणम् प्राजनम्।

करणाधिकरणयोश्च।३।३।११७।

ल्युट् स्यात्(२३)। इध्मप्रव्रश्चनः कुठारः। गोदोहनी स्थाली। खलः प्राक् करणाधिकरणयोरित्यधिकारः।

अन्तरदेशे।८।४।२४।

अन्तःशब्दाद्धन्तेर्न्नस्य णः स्यात्। अन्तर्हणनम्। देशे तु अन्तर्हननो देशः। अत्पूर्व्वस्येत्येव अन्तर्घ्नन्ति। तपरः किम् अन्तरघानि।

अयनञ्च।८।४।२५।

अयनस्य णोऽन्तःशब्दात्परस्य। अन्तरयणम्। अदेशे इत्येव। अन्तरयनो देशः।

---

(२३) येन नाप्राप्तन्यायेन घञोऽपवादोऽयम् अजपौ स्त्रीप्रत्ययांश्च परत्वात् बाधते।

**पुंसि संज्ञायाङ्घः प्रायेण। ३। ३। ११८।**

**छादेर्घेऽद्व्युपसर्गस्य। ६। ४। ९६।**

द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्याद्घे परे। दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः। आकुर्व्वन्त्यस्मिन् आकरः।

**गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च। ३। ३। ११९।**

घान्ता निपात्यन्ते। हलश्चेति वक्ष्यमाणस्य घञोऽपवादः। गावश्चरन्त्यस्मिन्निति गोचरो देशः। सञ्चरन्तेऽनेन सञ्चरो-मार्ग्गः। वहन्त्यनेन वहः स्कन्धः। व्रजः। व्यजस्तालवृन्तम्। निपातनाद्वीभावो न। आपणः पण्यस्थानम्। निगच्छन्त्यनेन निगमश्छन्दः। चात्कषः। निकषः।

**अवे तॄस्त्रोर्घञ् (२४)। ३। ३। १२०।**

अवतारः कूपादेः। अवस्तारो जवनिका।

**हलश्च(२५)। ३। ३। १२१।**

हलन्ताद्घञ् स्यात्। घापवादः। रमन्ते योगिनोऽस्मिन्निति रामः। अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः। विमार्गः समूहनी।

---

(२४) अवे उपपदे तॄस्तृभ्यां करणाधिकरणयोः पुंसि संज्ञायां घञ् स्यात् घस्यापवादः।

(२५) अत्रापि पुंसि संज्ञायामित्यनुवर्त्तते करणाधिकरणे त्वधिकारलभ्ये।

अध्यायन्यायोद्यावसंहाराश्च। ३। ३। १२२।

अधीयतेऽस्मिन् अध्यायः। नियन्ति उद्युवन्ति संहरन्त्यनेनेति विग्रहः। अवहाराधारावायानामुपसंख्यानम्*।

उदङ्कोऽनुदके। ३। ३। १२३।

उत्पूर्व्वादञ्चतेर्घञ् स्यात् न तूदके। घृतमुदच्यते उद्ध्रियतेऽस्मिन्निति घृतोदङ्कः चर्म्ममयं भाण्डम्। अनुदके किम्? उदकोदञ्चनः (२६)।

जालमानायः। ३। ३। १२४।

आनीयन्ते मत्स्यादयोऽनेनेत्यानायः। जालमिति किम्? आनयः।

खनो घ च। ३। ३। १२५।

चाद्घञ्। आखनः आखानः। घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थम्। तेन भगः पदमित्यादि। खनेर्डडरेकेकवकाः वाच्याः*। आखः। आखरः। आखनिकः। आखनिकवकः। एते (२७) खनित्रवचनाः।

ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्। ३। ३। १२६।

करणाधिकरणयोरिति निवृत्तम्। एषु दुःखसुखार्थेषूपप-

---

(२६) घञन्तो रूपाभेदेऽपि अनुदके इति निषेधात् पुंसि संज्ञायां घ (उ४५६पृ०) इत्यनेनापि न घः।

(२७) एते आखनादयः षड़ित्यर्थः।

देषु खल् स्यात्। तयोरेवेति(उ२८८पृ०)भावे कर्म्मणि च। कृच्छ्रे दुष्करः कटो भवता। अकृच्छ्रे ईषत्करः। सुकरः। निमिमीलियां खलचोरात्त्वं नेति वाच्यम् *। ईषन्निमयः। दुष्प्रमयः। सुविलयः। निमयः। मयः। लयः।

## उपसर्गात् खलघञोः। ७। १। ६७।

उपसर्गादेव(२८)लभेर्नुम् स्यात्। ईषत्प्रलम्भः। दुःप्रलम्भः। सुप्रलम्भः। उपालम्भः। उपसर्गात् किम्? ईषल्लभः। लाभः।

## न सुदुर्भ्यां केवलाभ्याम्। ७। १। ६८।

उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम्न स्यात् खलघञोः। सुलभम्। दुर्लभम्। केवलाभ्याङ्किम्? सुप्रलम्भः। अतिदुर्लम्भः। कथन्तर्हि अतिसुलभमतिदुर्लभमिति? यदा स्वती कर्म्मप्रवचनीयौ तदा भविष्यति।

## कर्त्तृकर्म्मणोश्च(२९)भूकृञोः। ३। ३। १२७।

कर्त्तृकर्म्मणोरीषदादिषु च उपपदेषु भूकृञोः खल् स्यात्। यथासंख्यं नेष्यते। कर्त्तृकर्म्मणी च धातोरव्यवधानेन प्रयो-

---

(२८) लभेश्च(उ१९२पृ०)इत्यनेनैव सिद्धे नियमार्थमिदमित्याहोपसर्गादेवेति।

(२९) चकारः सन्नियोगार्थः यदा कर्त्तृकर्म्मणोरीषदादीनां च युगपत्प्रयोग स्तदैव प्रत्ययः। कर्त्तृकर्म्मणोः प्रत्ययार्थत्वं तु न शक्यं तथात्वे खलः खित्त्वस्य समर्थतयाव्ययस्येति निषेधेन ईषदादेस्तदप्रवृत्तेर्वैयर्थ्यापत्तेरत उपपदत्वमित्याशयेन तथा व्याख्यातमत एव च खित्कार्य्यसमर्थनया धातोरव्यवधानेन कर्त्तृकर्म्मणोः प्रयोग इत्युक्तम्।

ज्ये ईषदादयस्तु ततः प्राक्। कर्त्तृकर्म्मणोश्चार्थयोरिति वाच्यम् *। खित्त्वान्मुम्। अनाढ्येनाढ्येन दुःखेन भूयते दुराढ्यम्भवम्। ईषदाढ्यम्भवम् स्वाढ्यम्भवम्। ईषदाढ्यङ्करः। दुराढ्यङ्करः स्वाढ्यङ्करः। च्व्यर्थयोः किम्? आढ्येन सुभूयते।

## आतो युच्। ३। ३। १२८।

खलोऽपवादः। ईषत्पानः सोमो भवता। दुःपानः। सुपानः। भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः *। दुःशासनः। दुर्य्योधन इत्यादि।

## षात्पदान्तात्। ८। ४। ३५।

नस्य णो न। निष्पानम्। सर्प्पिष्पानम्। षात् किम्? निर्णयः। पदान्तात् किम्? पुष्णाति। पदे अन्तः पदान्तोऽयमिति सप्तमीसमासोऽयम् तेनेह न (३०)। सुसर्पिष्केण।

## आवश्यकाधमर्ण्ययोर्णिनिः। ३। ३। १७०।

अवश्यङ्कारी। शतन्दायी।

## कृत्याश्च। ३। ३। १७१।

आवश्यकाधमर्ण्ययोरित्येव। अवश्यं हरिः सेव्यः। शतन्देयम्।

## क्तिच्क्तौ च संज्ञायाम्। ३। ३। १७४।

(३०) तेनेह नेति न णत्वनिषेध इत्यर्थः

धातोः क्तिच् क्तश्च स्यादाशिषि संज्ञायाम्। तितुत्रेति (७२७८४०) नेट्। भवतात् भूतिः।

न क्तिचि दीर्घश्च। ६। ४। ३९।

अनिटां वनतितनोत्यादीनाञ्च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे। यन्तिः। रन्तिः। वन्तिः। तन्तिः।

सनः क्तिचि लोपश्चास्यान्यतरस्याम्। ६।४।४५।

सनोतेः क्तिचि आत्त्वं वा स्याल्लोपश्च वा। सनुतात् सातिः। सतिः। सन्तिः। देवा एनं देयासुः। देवदत्तः।

अलङ्खल्वोः प्रतिषेधयोः प्राचां क्त्वा।३।४।१८।

प्रतिषेधार्थयोरलङ्खल्वोरुपपदयोः क्त्वा स्यात्। प्राचां ग्रहणं पूजार्थम्। अमैवाव्ययेनेति (२७८४०) नियमान्नोपपदसमासः। दो दद्घोः (७२६०४०)। अलन्दत्त्वा। घुमास्था (७११८४०) पीत्वा खलु। अलङ्खल्वोः किम्? मा कार्षीः। प्रतिषेधयोः किम्? अलङ्कारः।

उदीचाम्माङो व्यतीहारे (३१)।३।४।१९।

व्यतीहारेऽर्थे माङः क्त्वा स्यात्। अपूर्व्वकालार्थमिदम्।

मयतेरिदन्यतरस्याम्। ६।४।७०।

(३१) व्यतीहारो व्यतिक्रमः मेङः कृतात्त्वनिर्देशादनुबन्धकृतमनेजन्तत्वमिति परिभाषा सूचिता।

मेङ इकारोऽन्तादेशः स्याद्वा ल्यपि। अपमित्य याचते अपमाय वा। उदीचां ग्रहणाद्यथाप्राप्तमपि। याचित्वा अपमयते।

## पराावरयोगे च। ३। ४। २०।

परेण पूर्व्वस्यावरेण परस्य योगे गम्ये धातोः क्त्वा स्यात्। अप्राप्य नदीं पर्वतः (३२) परनदीयोगोऽत्र पर्वतस्य। अतिक्रम्य पर्वतं स्थिता नदी (३३)। अवरपर्वतयोगोऽत्र नद्याः।

## समानकर्त्तृकयोः पूर्व्वकाले। ३। ४। २१।

समानकर्त्तृकयोर्धात्वर्थयोः (३४) पूर्व्वकाले विद्यमानाद्धातोः क्त्वा स्यात्। क्त्वा तु(३५) अव्ययकृतो भावे। भुक्त्वा व्रजति।

(३२) अत्र नदी गङ्गा, पर्वतोविन्ध्यः तथा च दक्षिणस्थानां गङ्गामप्राप्य विन्ध्यः गङ्गाप्राप्तिविरहविशिष्टदेशस्थोविन्ध्य इत्यर्थः। तेन विन्ध्यात्परा गङ्गेति गम्यते।

(३३) अतिक्रम्येति। दक्षिणदेशस्थानामेवायं प्रयोगः अत्र हि गङ्गायाः पूर्वो विन्ध्य इति गम्यते इति विशेषः। इह त्रिस्थलत्रां क्त्वाप्रत्ययस्य भावार्थत्वेऽपि विशेष्यविशेषणभावसंसर्गभेदो बोध्यते इत्यवैयर्थ्यम्।

(३४) धात्वधिकारात् समानकर्त्तृकत्वं क्रिययोरेवेत्याशयेन धात्वर्थयोरित्युक्तं तत्र निर्धारणषष्ठ्यन्तं तथा च धात्वर्थयोर्मध्ये पूर्वः कालो यस्य तत्र विद्यमानादित्यर्थः।

(३५) क्त्वा त्विति अव्ययकृतो भावे इति वचनाद्भाव एवेत्यर्थः। भावश्चेह घञादाविव न सिद्धावस्थः किन्तु साध्यावस्थस्तदुक्तं हरिणा

"अव्ययकृतइत्युक्तः प्रकृत्यर्थे तुमादयः।

समानकर्त्तृकत्वादि द्योत्यमेषामिति स्थितिरिति"॥

यथा चैषां साध्यक्रियाद्योतकत्वं तथा प्रपञ्चितमस्माभिः शब्दार्थरत्ने।

द्वित्वमतन्त्रम् (२६)। स्नात्वा भुक्त्वा पीत्वा व्रजति। अनुदात्तेति (७११०पृ०) अनुनासिकलोपः। विष्णुं नत्वा स्तौति। स्वरत्यादेः श्र्युकः किताति (७६७पृ०) नित्यमिडभावः पूर्व्वविप्रतिषेधेन। स्वृत्वा। सूत्वा। धूत्वा।

### क्त्वि स्कन्दिस्यन्दोः। ६। ४। ३१।

एतयोर्नलोपो न स्यात् क्त्वि(२७) परे। स्कन्त्वा। ऊदित्वादिड् वा। स्यन्त्वा-स्यन्दित्वा।

### न क्त्वा सेट्। १। २। १८।

सेट् क्त्वा किन्न स्यात्। शमित्वा। सेट् किम्? कृत्वा।

### मृडमृदगुधकुषक्लिशवदवसः क्त्वा। १। २। ७।

एभ्यः सेट् क्त्वा कित्। मृडित्वा। क्लिशः क्त्वेति (७२५३पृ०) वेट्। क्लिशित्वा-क्लिष्ट्वा। उदित्वा। उषित्वा। रुदविदेति(७१६८पृ०) कित्त्वम्। रुदित्वा। विदित्वा। मुषित्वा। गृहीत्वा।

### नोपधात्थफान्ताद्वा। १। २। २३।

(२६) "गुणानाञ्च परार्थत्वादसंबन्धः समत्वात् स्यादिति" न्यायेन क्रियाणां न परस्परविशेष्यविशेषणभावः किन्तु सर्व्वासामेव प्रधानक्रियायामन्वयस्तत्याशयेनोक्तं द्वित्वमतन्त्रमिति एतच्च विशेषणक्रिययोरसति तथा तात्पर्य्ये बोध्यम् यदि तु विशेषणक्रिययोरपि पूर्व्वापरकालत्वं विवक्षितं तदा क्त्वान्तान्तरस्यैव विशेषणतया पूर्व्वकालिकक्रियायामेव क्त्वेति तथाच पक्त्वा भुक्त्वा स्वपितीत्येव प्रयोगो न तु भुक्त्वा पक्त्वा स्वपितीति।

(२७) क्त्वीत्यत्रालोपो यथा तथा आतोधातोः(१०८पृ०)इत्यत्र ग्रन्थकृतोक्तम्।

सेट् क्त्वा कित् स्याद्वा। श्रथित्वा-श्रन्थित्वा। गुफित्वा गुम्फित्वा। नोपधात् किम्? कोथित्वा। रेफित्वा।

वञ्चिलुञ्च्यृतश्च। १। २। २४।

सेट् क्त्वा किद्वा। वचित्वा-वञ्चित्वा। लुचित्वा-लुञ्चित्वा। ऋतित्वा अर्तित्वा।

तृषिमृषिकृशेः काश्यपस्य। १। २। २५।

एभ्यः सेट् क्त्वा किद्वा। तृषित्वा-तर्षित्वा। मृषित्वा-मर्षित्वा। कृशित्वा-कर्शित्वा। रलो व्युपधादिति (७२००पृ०) वा कित्त्वम्। द्युतित्वा-द्योतित्वा। लिखित्वा-लेखित्वा। रलः किम्? सेवित्वा। व्युपधात् किम्? वर्तित्वा। हलादेः किम्? एषित्वा। सेट् किम्? भुक्त्वा। वसतिक्षुधोरिट् (७३५२पृ०)। उषित्वा-वसित्वा। क्षुधित्वा क्षोधित्वा। अञ्चेः पूजायामिति (७३५२पृ०) नित्यमिट्। अञ्चित्वा। गतौ तु। अक्त्वेत्यपि। लुभित्वा-लोभित्वा। लुभोऽविमोहने(७३५२पृ०)इतीट्। विमोहने तु। लुब्ध्वा

जृव्रश्च्योः क्त्वि। ७। २। ५५।

आभ्यां परस्य क्त्वा इट् स्यात्। जरित्वा-जरीत्वा। व्रश्चित्वा।

उदितो वा। ७। २। ५६।

उदितः परस्य क्त्वा इड् वा। शमित्वा। अनुनासिकस्य क्विझलोः क्ङितीति (७२२५पृ०) दीर्घः। शान्त्वा। द्यूत्वा-देवित्वा।

क्रमश्च क्त्वि। ६। ४। १८।

क्रमउपधाया वा दीर्घः स्यात् झलादौ क्त्वि परे । क्रान्त्वा-क्रन्त्वा । झलि किम् ? क्रमित्वा । पूङश्चेति (७२५।३ष्ठ०) वेट् । पवित्वा-पूत्वा ।

## जान्तनशां विभाषा । ६ । ४ । ३२ ।

जान्तानान्नशेश्च नलोपो वा स्यात् क्त्वि परे । भक्त्वा-भङ्क्त्वा । रक्त्वा-रङ्क्त्वा । मस्जिनशोरिति (७१४०ष्ठ०)नुम् । तस्य पक्षे लोपः नष्ट्वा-नंष्ट्वा । रधादिभ्यश्च(७१४०ष्ठ०)इतीट्पक्षे नशित्वा । झलादाविति वाच्यम् ॥ । नेह अञ्जित्वा । ऊदित्त्वादिट्पक्षे । अक्त्वा-अङ्क्त्वा । जनसनेति(७१२२ष्ठ०)आत्त्वम् । खात्वा-खनित्वा । द्यतिस्यतीत्त्वम्(७२५८ष्ठ०) । दित्वा । सित्वा । मित्वा । स्थित्वा । दधातेर्हिः (७२६०ष्ठ०) । हित्वा ।

## जहातेश्च क्त्वि । ७ । ४ । ४३ ।

हित्वा । हाङस्तु । हात्वा । अदो जग्धिः(७२६१ष्ठ०) । जग्ध्वा ।

## समासेऽनञ्पूर्व्वे क्त्वो ल्यप् । ७ । १ । ३७ ।

अव्ययपूर्व्वपदे अनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम् ? । अकृत्वा । पर्य्युदासाश्रयणान्नेह(३८) । परमकृत्वा ।

## पत्वतुकोरसिद्धः । ६ । १ । ८६ ।

(३८) नञा पर्य्युदासात् नञ्सदृशमव्ययमेवोपपदं लभ्यते इत्याशयेन अव्यये उपपदे इति व्याख्यातं प्रसज्यप्रतिषेधाश्रये तु अनव्ययस्यापि प्रहणापत्तेः तथाच परमकृत्वेत्यत्र ल्यप् स्यादिति भावः ।

षत्वे तुकि च कर्त्तव्ये एकादेशशास्त्रमसिद्धं स्यात्। कोऽसि-चत्। इह षत्वन्न (२८)। अधीत्य। प्रेत्य। ह्रस्वस्येति (उ२०५पृ०) तुक्।

वा ल्यपि। ६। ४। ३८।

अनुदात्तोपदेशानां वनतितनोत्यादीनामनुनासिकलोपो वा स्यात् ल्यपि। व्यवस्थितविभाषेयम्। तेन मान्तानिटां वा, नान्तानिटां वनादीनाञ्च नित्यम्। आगत्य-आगम्य। प्रण-त्य-प्रणम्य। प्रहत्य। प्रमत्य। प्रवत्य। वितत्य। अदो जग्धिः (उ२६१पृ०)। अन्तरङ्गानपि विधीन्वहिरङ्गोऽपि ल्यब्बाधते जग्धिविधौ ल्यब्ग्रहणात्। तेन ह्वित्वदत्त्वात्त्वेत्त्वदीर्घत्वमू-ङिटो ल्यपि न। विधाय। प्रदाय। प्रखन्य। प्रस्थाय। प्रक्रम्य। आपृच्छ्य। प्रदीव्य।

न ल्यपि। ६। ४। ६६।

ल्यपि परे घुमास्थादेरी(११८पृ०)त्वन्न। धेट्-प्रधाय। प्रमाय। प्रगाय। प्रपाय। प्रहाय। प्रसाय। मीनातिमीनोतीति (उ१३४पृ०) आत्त्वम्। प्रमाय। निमाय। उपदाय। विभाषा लीयतेः (उ१३५पृ०)। विलाय-विलीय। णिलोपः। उत्तार्य्य।

ल्यपि लघुपूर्व्वात्। ६। ४। ५६।

---

(२८) को असिचदिति स्थिते एङः पदान्तादतीति (५०पृ०) पूर्व्वरूपैका-देशे कृते तस्य अन्तादिवच्चेति (४६पृ०) परादित्वेन सात्पदाद्योरिति (७२०पृ०) निषेधाप्रवृत्तेः इणः परत्वेन षत्वप्रसङ्गः, एकादेशशास्त्रेण षिद्धत्वे कृते अकारेण व्यवधानादिणः परत्वाभावान्न षत्वमिति भावः।

लघुपूर्व्वात् परस्य णेरयादेशः स्यात् ल्यपि। विगणय्य। प्रणमय्य। प्रवेभिदय्य। लघुपूर्व्वात् किम्? सम्प्रधार्य्य।

**विभाषापः। ६। ४। ५७।**

आप्नोतेर्णेरयादेशो वा स्यात् ल्यपि। प्रापय्य-प्राप्य।

**क्षियः। ६। ४। ५८।**

क्षियो ल्यपि दीर्घः स्यात्। प्रक्षीय।

**ल्यपि च। ६। १। ४१।**

वेञो ल्यपि सम्प्रसारणन्न स्यात्। प्रवाय।

**ज्यश्च। ६। १। ४२।**

प्रज्याय।

**व्यश्च। ६। १। ४३।**

उपव्याय।

**विभाषा परेः। ६। १। ४४।**

परेर्व्येञो वा सम्प्रसारणं स्यात् ल्यपि। तुकम्बाधित्वा परत्वात् हल इति (७।१६६४०) दीर्घः। परिवीय-परिव्याय। कथं मुखं व्यादाय स्वपिति, नेत्रे निमील्य हसतीति? व्यादानसम्मीलनोत्तरकालेऽपि स्वापहासयोरनुवृत्तेः, तदंशाविवक्षया भविष्यति।

**आभीक्ष्ण्ये णमुल् च। ३। ४। २२।**

पौनःपुन्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च। द्वित्वम्। स्मारंस्मारं नमति शिवम्। स्मृत्वास्मृत्वा। पायंपायम्। भोजंभोजम्। श्रावंश्रावम्। चिण्णमुलोरिति(७२७१पृ०)णमुल्परे णौ वा दीर्घः। गामंगामम्-गमंगमम्। विभाषा चिण्णमुलोरिति (२७१४०)नुम् वा। लम्भंलम्भम्-लाभंलाभम्। व्यवस्थितविभाषया उपसृष्टस्य नित्यं नुम्। प्रलम्भंप्रलम्भम्। जाग्रोविचिण्णिति (७१२४पृ०) गुणः। जागरं-जागरम्। ण्यन्तस्याप्येवम्(४०)।

## न यद्यनाकाङ्क्षे। ३। ४। २३।

यच्छब्दे उपपदे पूर्वकाले यत्प्राप्तन्तन्न यत्र पूर्वोत्तरे क्रिये तद्वाक्यमपरन्नाकाङ्क्षते चेत्। यदयम्भुङ्क्ते ततः पचति। इह क्त्वा णमुलौ न। अनाकाङ्क्षे किम्? यदयं भुक्त्वा व्रजति ततोऽधीते।

## विभाषाग्रेप्रथमपूर्व्वेषु (४१)। ३। ४। २४।

आभीक्ष्ण्ये इति नानुवर्त्तते। एषूपपदेषु समानकर्त्तृकयोः पूर्वकाले क्त्वाणमुलौ वा स्तः। अग्रेभोजं(४२) व्रजति। अग्रेभुक्त्वा। प्रथमं भोजम् प्रथमं भुक्त्वा। पूर्वं भोजम् (४३) पूर्वम्भुक्त्वा। पक्षे लडादयः। अग्रे भुङ्क्ते ततो व्रजति।

(४०) प्राञ्चस्तु ण्यन्तजागर्त्तेश्चिण्णमुलोर्वा वृद्धिरित्याहुस्तच्चापाणिनीयम्।

(४१) प्रथमपूर्वपदसाहचर्य्यात् कालवाच्येवाग्रेशब्दो ग्राह्यः स च सप्तम्यन्तानुकरणम्।

(४२) अमैवाव्ययेनेति (३७८पृ०) नियमात् व्यस्तमेवेदं नात्रोपपदसमासः।

(४३) भोक्त्रपेक्षया पूर्वत्वं पूर्व्वादिपदैरभिधीयते क्त्वाप्रत्ययेन तु व्रजनादिक्रियापेक्षयेति न वैयर्थ्यम्।

आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन नित्यमेव विधिः। अग्रे भोजम्भोजं व्रजति। भुक्त्वाभुक्त्वा।

**कर्मण्याक्रोशे कृञः खमुञ्। ३। ४। २५।**

कर्मण्युपपदे आक्रोशे गम्ये। चौरङ्कारमाक्रोशति। करोतिरुच्चारणे चौरशब्दमुच्चार्य्येत्यर्थः।

**स्वादुमि णमुल्। ३। ४। २६।**

स्वाद्वर्थेषु कृञो णमुल् स्यादेककर्तृकयोः पूर्वकाले। पूर्वपदस्य मान्तत्वन्निपात्यते। अस्वाद्वीं(४४) स्वाद्वीं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते। सम्पन्नङ्कारम्। लवणङ्कारम्। सम्पन्नलवणशब्दौ स्वादुपर्य्यायौ। वासरूपेण क्त्वापि। स्वादुं कृत्वा भुङ्क्ते।

**अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्। ३। ४। २७।**

एषु कृञो णमुल् स्यात् सिद्धः अप्रयोगोऽस्य एवंभूतश्चेत् कृञ् व्यर्थत्वात्प्रयोगानर्हे इत्यर्थः। अन्यथाकारम्, एवंकारम्, कथंकारम्, इत्थंकारम् भुङ्क्ते इत्थं भुङ्क्तइत्यर्थः (४५)। सिद्धेति किम् शिरोऽन्यथा कृत्वा (४६) भुङ्क्ते।

(४४) अर्थग्रहणपरत्वेऽपि स्वादाविन्युक्तैव सिद्धावपि स्त्रियां पुंवद्भावमान्तत्वनिपातनार्थतया स्वादुमीतिग्रहणमित्याशयेनाहास्वाद्वीमिति।

(४५) इह शाब्दबोधे विशेषेऽपि फलितार्थकथनपरतया कारमिति णमुलन्तं निष्फलमनतिप्रयोजनत्वात्।

(४६) शिरोऽन्यथा कृत्वौदनादिकं भुङ्क्ते इत्यर्थलाभाय करोतेः प्रयोगः

**यथातथयोरसूयाप्रतिवचने। ३। ४। २८।**

कृञ् सिद्धाप्रयोगइत्येव असूयया प्रतिवचने। यथाकार(४७)-महं भोक्ष्ये। तथाकारं भोक्ष्ये किन्तवानेन ?।

**कर्म्मणि दृशिविदोः साकल्ये। ३। ४। २९।**

कर्म्मण्युपपदे णमुल् स्यात्। कन्यादर्शं (४८) वरयति सर्व्वाः कन्या इत्यर्थः। ब्राह्मणवेदं भोजयति। यं यं ब्राह्मणञ्जानाति लभते विचारयति वा तं तं सर्व्वं भोजयतीत्यर्थः।

**यावति विन्दजीवोः। ३। ४। ३०।**

यावद्वेदं भुङ्क्ते यावल्लभते तावदित्यर्थः। यावज्जीवमधीते।

**चर्म्मोदरयोः पूरेः (४९)। ३। ४। ३१।**

कर्म्मणीत्येव। चर्म्मपूरं स्तृणाति। उदरपूरं भुङ्क्ते।

**वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्। ३। ४। ३२।**

आवश्यकस्तदभावे तु भुजिक्रियागत एव प्रकारो गम्येत न तु शिरोऽन्यथाकरणमतः कृञः प्रयोगस्यावश्यकतास्तीति णमुलन्तः कृञत्र प्रयुज्यते इति भावः।

(४७) प्रष्टुमनर्हः सन् यदि पृच्छति तदेवमुत्तरं यथाकारमित्यादि।

(४८) कन्यादर्शमित्यत्र दर्शनविषयाणां सर्वासां कन्यानां वाक्यार्थेऽन्वयात्साकल्यं गम्यते।

(४९) इह पूर्व्वकाले इति न संबध्यते पूरणस्यैव स्तरणभोजनोत्तरकालिकत्वात् अतश्चर्म्मपूरणादिविशिष्टा स्तरणभोजनादिक्रियेति बोधः।

कर्म्मण्युपपदे पूरेर्णमुल् स्यादूकारलोपश्च वा समुदायेन वर्ष-प्रमाणे गम्ये। गोष्पदपूरं वृष्टो देवः गोष्पदप्रं वृष्टो देवः। अस्येति किम्? उपपदस्य मा भूत्। मूषिकाबिलप्रम्।

**चेले क्नोपेः। ३। ४। ३३।**

चेलार्थेषु कर्मसूपपदेषु क्नोपेर्णमुल् स्याद्वर्षप्रमाणे। चेल(५०) क्नोपं वृष्टो देवः। वस्त्रक्नोपम्। वसनक्नोपम्।

**निमूलसमूलयोः कषः। ३। ४। ३४।**

कर्मणीत्येव कषादिष्वनुप्रयोगं वक्ष्यति (७४७२पृ०)। अत्र प्रक-रणे पूर्व्वकाल इति न संबध्यते। निमूलकाषं कषति। समूल-काषं कषति। निमूलं समूलं (५१) कषतीत्यर्थः। एकस्यापि धात्वर्थस्य निमूलादिविशेषणसम्बन्धाद्भेदः। तेन सामान्य-विशेषभावेन विशेष्यविशेषणभावः (५२)।

**शुष्कचूर्णरूक्षेषु पिषः। ३। ४। ३५।**

एषु कर्मसु पिषेर्णमुल्। शुष्कपेषं पिनष्टि। शुष्कं पिनष्टी-त्यर्थः। चूर्णपेषम्। रूक्षपेषम्।

**समूलाकृतजीवेषु हनकृञ्ग्रहः। ३। ४। ३६।**

---

(५०) क्नयन्तात् क्नोपेः प्रत्ययस्तथा च यथा वर्षणेन चेलानि क्नोप्यन्ते शब्दा-यन्ते तथा वृष्ट इत्यर्थः।

(५१) निर्गतं मूलं यस्य निमूलं मूलेन सह समूलं तत्कषणाभिन्नं कषणमिति बोधः।

(५२) आम्नोऽश्व इति वत् सामान्यस्य विशेष्यत्वं विशेषस्य विशेषणत्वम्।

कर्मणीत्येव। समूलघातं हन्ति। अकृतकारं करोति। जीवग्राहं गृह्णाति। जीवतीति जीवः इगुपधलक्षणः(७११८पृ०) कः। जीवन्तं गृह्णातीत्यर्थः।

**करणे हनः। ३। ४। ३७।**

पादघातं हन्ति पादेन हन्तीत्यर्थः। यथाविध्यनुप्रयोगार्थः सन् नित्यसमासार्थोऽयं योगः। भिन्नधातुसम्बन्धे तु हिंसार्थानाञ्चेति (७४७२पृ०) वक्ष्यते।

**स्नेहने पिषः। ३। ४। ३८।**

स्निह्यते येन तस्मिन् करणे उपपदे पिषेर्णमुल्। उदपेषं पिनष्टि उदकेन पिनष्टीत्यर्थः।

**हस्ते वर्त्तिग्रहोः। ३। ४। ३९।**

हस्तार्थे करणे। हस्तवर्त्तं वर्त्तयति। करवर्त्तम्। हस्ते-नाङ्गुलिकां करोतीत्यर्थः। हस्तग्राहं गृह्णाति। करग्राहम्। पाणिग्राहम्।

**स्वे पुषः। ३। ४। ४०।**

करणइत्येव स्वे इत्यर्थग्रहणान्तेन स्वरूपे पर्य्याये विशेषे च णमुल्। स्वपोषं पुष्णाति। धनपोषम्। गोपोषम्।

**अधिकरणे बन्धः। ३। ४। ४१।**

चक्रबन्धं बध्नाति चक्रे बध्नातीत्यर्थः।

संज्ञायाम्। ३। ४। ४२।

बध्नातेर्णमुल् संज्ञायाम्। क्रौञ्चबन्धं बद्धः। मयूरिकाबन्धम् अट्टालिकाबन्धम्। बन्धविशेषाणां संज्ञा एताः।

कर्त्रोर्जीवपुरुषयोर्नशिवहोः। ३। ४। ४३।

जीवनाशं नश्यति। जीवो नश्यतीत्यर्थः। पुरुषवाहं वहति। पुरुषो वहतीत्यर्थः।

ऊर्द्ध्वे शुषिपूरोः। ३। ४। ४४।

ऊर्द्ध्वे कर्त्तरि। ऊर्द्ध्वशोषं शुष्यति वृक्षादिरूर्द्ध्व एव तिष्ठन् शुष्यतीत्यर्थः। ऊर्द्ध्वपूरं पूर्य्यते। ऊर्द्ध्वमुख एव घटादिः वर्षोदकादिना पूर्णो भवतीत्यर्थः।

उपमाने कर्मणि च। ३। ४। ४५।

चात् कर्त्तरि। घृतनिधायं निहितञ्जलम् घृतमिव सुरक्षितमित्यर्थः। अजनाशं नष्टः। अज इव नष्ट इत्यर्थः।

कषादिषु यथाविध्यनुप्रयोगः। ३। ४। ४६।

यस्माण्णमुलुक्तः सएवानुप्रयोक्तव्य इत्यर्थः। तथैवोदाहृतम्।

उपदंशस्तृतीयायाम्। ३। ४। ४७।

इतःप्रभृति पूर्वकाल इति सम्बध्यते। तृतीयाप्रभृतीन्यन्यतरस्यामिति (७१८-सू०) वा समासः। मूलकोपदंशं भुङ्क्ते(५३)।

(५३) मूलकेन भुङ्क्ते किं कृत्वा उपदश्यार्थान्मूलकमिति संबध्यते

पदंशम्। दश्यमानस्य मूलकस्य भुजिं प्रति करणत्वात् तृतीया। यद्यप्युपदंशिना सह न शाब्दः सम्बन्धः तथाप्यार्थोऽस्त्येव कर्म्मत्वात् एतावतैव (५४) सामर्थ्येन प्रत्ययः समासश्च तृतीयायामितिवचन (५५) सामर्थ्यात्।

## हिंसार्थानाञ्च समानकर्मकाणाम्। ३। ४। ४८।

तृतीयान्ते उपपदेऽनुप्रयोगधातुना समानकर्म्मकाद्धिंसार्थात् णमुल् स्यात्। दण्डोपघातं गाः कालयति दण्डेनोपघातम्। दण्डताडम्। समानकर्मकाणामिति किम्? दण्डेन चोरमाहत्य गाः कालयति।

## सप्तम्याञ्चोपपीडरुधकर्षः। ३। ४। ४९।

उपपूर्वेभ्यः पीडादिभ्यः (५६) सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल् स्यात्। पार्श्वोपपीडं शेते पार्श्वाभ्यामुपपीडम्। व्रजोपरोधं गाः स्थापयति। व्रजेनोपरोधं व्रजे उपरोधं वा। पाण्युपकर्षं धानाः संगृह्णाति। पाणावुपकर्षम् पाणिनोपकर्षम्।

(५४) एतावतैवेति शाब्दान्वयाभावेऽप्यार्थिकान्वयमात्रेणेत्यर्थः।

(५५) यदि तृतीयान्तेन शाब्दान्वये सत्येव प्रत्ययः स्यात्तदा करणे हन (३४७१ पृ०) इतिवत् उपदंशः करणे इत्येव सूत्रयेत् ततश्च क्रियान्तरं प्रति करणत्वं मूलकेनेत्यस्येति भावः। मनो०

(५६) सूत्रे कर्ष इति शपा निर्देशात् तौदादिकस्य निरासः पञ्चम्यर्थेऽत्र प्रथमा।

**समासत्तौ। ३। ४। ५०।**

तृतीयासप्तम्योर्धातोर्णमुल् स्यात् सन्निकर्षे गम्यमाने। केशग्राहं (५७) युध्यन्ते केशेषु गृहीत्वा। हस्तग्राहम् हस्तेन गृहीत्वा।

**प्रमाणे च। ३। ४। ५१।**

तृतीयासप्तम्योरित्येव। द्व्यङ्गुलोत्कर्षं खण्डिकां (५८) छिनत्ति द्व्यङ्गुलेन द्व्यङ्गुले वोत्कर्षम्।

**अपादाने परीप्सायाम्। ३। ४। ५२।**

परीप्सा त्वरा। शय्योत्थायं धावति।

**द्वितीयायाञ्च। ३। ४। ५३।**

परीप्सायामित्येव। यष्टिग्राहं युध्यन्ते (५९) लोष्टग्राहम्।

**अपगुरो णमुलि। ६। १। ५३।**

गुरी उद्यमने इत्यस्यैचो वा आत्स्याण्णमुलि। अस्यपगोरं युध्यन्ते अस्यपगारम् (६०)।

---

(५७) सन्निकर्षे एव केशादिग्रहणसंभवात् सन्निकर्षोगम्यते इति बोध्यम्।

(५८) ह्रस्वः खण्डः खण्डिका ह्रस्वार्थे कः स्वार्थिकप्रत्ययस्य लिङ्गातिक्रमस्यापि क्वचिद्दिष्टत्वात् स्त्रीत्वम्।

(५९) अत्र युद्धाय त्वरा गम्यते युद्धार्थं यष्ट्यादिकमेव गृहीत्वा प्रवर्त्तन्ते नायुधमपेक्षन्ते इति भावः।

(६०) असिमपगुर्य्य उद्यम्येत्यर्थः।

स्वाङ्गेऽध्रुवे। ३। ४। ५४।

द्वितीयायामित्येव। अध्रुवे स्वाङ्गे द्वितीयान्ते धातोर्णमुल्। भ्रूविक्षेपं कथयति भ्रुवं विक्षेपम्। अध्रुवे किम्? शिर उत्क्षिप्य। येन विना न जीवनन्तद्‌ध्रुवम्।

परिक्लिश्यमाने च। ३। ४। ५५।

सर्व्वतो विबाध्यमाने स्वाङ्गे द्वितीयान्ते णमुल् स्यात्। उरः-प्रतिपेषं युध्यन्ते कृत्स्नमुरः पीड़यन्त इत्यर्थः। "उरोविदारं प्रतिचस्करे नखैः"। ध्रुवार्थमिदम्।

विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः। ३। ४। ५६।

द्वितीयायामित्येव। द्वितीयान्ते उपपदे विशादिभ्यो णमुल् स्याद्व्याप्यमाने आसेव्यमाने चार्थे गम्ये। गेहादिद्रव्याणां विशादिक्रियाभिः साकल्येन सम्बन्धो व्याप्तिः। क्रियायाः पौनःपुन्यमासेवा। नित्यवीप्सयोरिति (७२५६०) द्वित्वं तु न भवति समासेनैव स्वभावतस्तयोरुक्तत्वात्। यद्यप्याभीक्ष्ण्ये णमुलुक्त एव तथापि उपपदसंज्ञार्थ-(६१)-मासेवायामिह पुनर्विधिः। गेहानुप्रवेशमास्ते गेहंगेहमनुप्रवेशम्। गेहमनुप्रवेशमनुप्रवेशम्। एवं गेहानुप्रपातम्। गेहानुप्रपादम्। गेहा-

६१) विशिपतीति स्थले द्वितीयायामित्यस्यानुवर्त्तनं तदन्तस्योपपदसंज्ञार्थमिति बोध्यम्।

नुस्कारम् । असमासे तु गेहस्य णमुलन्तस्य च पर्य्यायेण द्वित्वम् ।

**अस्यतितृषोः क्रियान्तरे कालेषु । ३ । ४ । ५७ ।**

क्रियामन्तरयति व्यवधत्त इति क्रियान्तरः तस्मिन् धात्वर्थे वर्त्तमानादस्यतेस्तृष्यतेश्च कालवाचिषु द्वितीयान्तेषु उपपदेषु णमुल स्यात् । द्व्यहात्यासं गाः पाययति द्व्यहमत्यासम् । द्व्यहतर्षम् । द्व्यहन्तर्षम् । अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः ।

**नाम्न्यादिशिग्रहोः । ३ । ४ । ५८ ।**

द्वितीयायामित्येव । नामादेशमाचष्टे । नामग्राहमाह्वयति ।

**अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ । ३ । ४ । ५९ ।**

अयथाभिप्रेताख्यानन्नाम अप्रियस्योच्चैः, प्रियस्य च नीचैः कथनम् । उच्चैःकृत्य उच्चैःकृत्वा उच्चैःकारमप्रियमाचष्टे । नीचैःकृत्वा नीचैःकारं नीचैःकृत्य प्रियं ब्रूते ।

**तिर्य्यच्यपवर्गे । ३ । ४ । ६० ।**

तिर्य्यक्शब्दे उपपदे कृञः क्त्वाणमुलौ स्तः समाप्तौ गम्या

याम्। तिर्यक्कृत्य गतः तिर्यक्कारं समाप्य गत इत्यर्थः। अपवर्गे किम्? तिर्यक्कृत्वा काष्ठं गतः।

## स्वाङ्गे तस्प्रत्यये कृभ्वोः। ३। ४। ६१।

मुखतःकृत्य गतः मुखतःकृत्वा मुखतःकारम्। मुखतोभूय मुखतोभूत्वा मुखतोभावम्।

## नाधार्थप्रत्यये च्व्यर्थे। ३। ४। ६२।

नाधार्थ(६२)प्रत्ययान्ते च्व्यर्थविषये उपपदे कृभुवोः क्त्वाणमुलौ स्तः। अनाना नाना कृत्वा नानाकृत्य नानाकारम्। विनाकृत्य विनाकृत्वा विनाकारम्। नानाभूय नानाभूत्वा नानाभावम्। अनेकं द्रव्यमेकं भूत्वा एकधाभूय एकधा भूत्वा एकधाभावम्। एकधाकृत्य एकधाकृत्वा एकधाकारम्। प्रत्ययग्रहणं किं हिरुक् कृत्वा पृथग्भूत्वा।

## तूष्णीमि भुवः। ३। ४। ६३।

तूष्णींशब्दे भुवः क्त्वाणमुलौ स्तः। तूष्णींभूय तूष्णींभूत्वा तूष्णींभावम्।

## अन्वच्यानुलोम्ये। ३। ४। ६४।

अन्वक्शब्दे उपपदे भुवः क्त्वाणमुलौ स्तः आनुकूल्ये गम्यमाने। अन्वग्भूय आस्ते। अन्वग्भूत्वा अन्वग्भावम्।

(६२) नाधौ विनञ्भ्यामिति(६६४पृ०)विहितौ नानाञौ धार्था धमुञादयः।

अग्रतः पार्श्वतः पृष्ठतोवाऽनुकूलो भूत्वा आस्तइत्यर्थः। आनुलोम्ये किम्? अन्वग्भूत्वा तिष्ठति पृष्ठतो भूत्वेत्यर्थः।

इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम्।
विस्तरस्तु यथाशास्त्रन्दर्शितः शब्दकौस्तुभे॥
भट्टोजिदीक्षितकृतिः सैषा सिद्धान्तकौमुदी।
प्रीत्यै भूयाद्भगवतोर्भवानीविश्वनाथयोः॥

श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्द्धं

समाप्तम्।

मनोरमादिमूलेनोद्भासिता सरलाभिधा।
सिद्धान्तकौमुदीव्याख्या शेषार्द्धं पूर्त्तिमागता।
लौकिकानां प्रयोगाणां व्याख्यार्थोऽत्र निरूपितः।
प्रमोदाय विदां भूयात् परमात्मप्रसादनः॥

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्येण मनोरमादिसारसंकलनया
समाहृतायां सरलाभिधायां सिद्धान्तकौमुदीव्याख्याया-
मुत्तरार्द्धं समाप्तिमगमत्।

शाके पञ्चद्विपनगधरासम्मिते चैत्रमासे
तारानाथद्विजरचितया व्याख्यया मुद्रितोऽयम्।
तेनैवाक्षिप्रहनिधरासम्मितेऽब्देऽपि भूयो
मुद्रायन्त्रोपरिघटनया संस्कृतो माघमासे॥

---

# सिद्धान्तकौमुदी।

## वैदिकप्रक्रिया।

### छन्दसि पुनर्वस्वोरेकवचनम्।१।२।६१।

द्वयोरेकवचनं वा स्यात्। पुनर्वसुर्नक्षत्रम् पुनर्वसू वा। लोके तु द्विवचनमेव।

### विशाखयोश्च।१।२।६२।

प्राग्वत्। विशाखा नक्षत्रम् विशाखे वा।

### षष्ठीयुक्तश्छन्दसि वा।१।४।९।

षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसंज्ञो वा स्यात्। "क्षेत्रस्य पतिना वयम्"। इह वेति योगं विभज्य छन्दसीत्यनुवर्त्तते। तेन सर्व्वे विधयश्छन्दसि वैकल्पिकाः। बहुलञ्छन्दसीत्यादिः (७४८३पृ०) अस्यैव प्रपञ्चः। यचि भम् (१०५पृ०)। नभोगिरोमनुषां वत्युपसंख्यानम् *। नभसा तुल्यन्नभस्वत्। भत्वात् रुत्वाभावः। अङ्गिरस्वत्। "मनुष्वद(१)ग्ने !"। जनेरुसीति

(१) मनुषा तुल्यं मनुष्वदिति भत्वादादेशप्रत्यययोरिति (९५पृ०) षत्वं पदत्वे रुत्वं स्यात्तत्तु षत्वमपदान्तस्येति (९४पृ०) वचनात्।

(उ४०२सू०) विहित उसिप्रत्ययो मनेरपि बाहुलकात् । वृषन्वस्वश्वयोः* । वृष वर्षकं वसु यस्य सः वृषण्वसुः । वृषा अश्वो यस्य वृषणश्वः । इहान्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्राप्तो भत्वाद्वार्यते । अतएव परान्तस्येति (६१सू०) णत्वनिषेधोऽपि न । अल्लोपोऽन इति(१०५सू०)अल्लोपो न, अनङ्गत्वात् ।

**अयस्मयादीनि‡ च्छन्दसि । १ । ४ । २० ।**

एतानि छन्दसि साधूनि । भपदसंज्ञाधिकाराद्यथायोगं संज्ञाद्वयं बोध्यम् । तथा च वार्त्तिकम् । उभयसंज्ञान्यपीति वक्तव्यमिति* । "स सुष्टुभास ऋक्वता गणेन" । पदत्वात् कुत्वम् भत्वाज्जश्त्वाभावः । जश्त्वविधानार्थाया: पदसंज्ञाया भत्वसामर्थ्येन बाधात् । "नैनं हिन्वन्त्यपि वाजिनेषु" (२) । अत्र पदत्वात् जश्त्वम् । भत्वात् कुत्वाभावः ।

**ते प्राग्धातोः । १ । ४ । ८० ।**

**छन्दसि परेऽपि । १ । ४ । ८१ ।**

**व्यवहिताश्च (३) । १ । ४ । ८२ ।**

"हरिभ्यां याह्योक आ" । "आ मन्द्रैरिन्द्र! हरिभिर्याहि" ।

---

‡ अयस्मयादिः आकृतिगणः यथाप्रयोगम् ज्ञेयः ।

(२) वाचामिनाः प्रभवस्तेषु वाजिनेष्वप्येनं विद्वांसं न हिन्वन्ति न गच्छन्ति न विदन्तीत्यर्थः ।

(३) ते गत्युपसर्गसंज्ञकाश्छन्दसि परेऽपि व्यवहिताश्च प्रयोक्तव्या इति सूत्रत्रयार्थः ।

इन्धिभवतिभ्याञ्च। १। २। ६।

आभ्यां परो लिट् कित्। "समीधे दस्युहन्तमः"। "पुत्र ईधे अथर्वणः"। बभूव। इदं प्रत्याख्यातम् इन्धेश्छन्दोविषयत्वाद्भुवोवुकोनित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यमिति।

इति प्रथमोऽध्यायः।

---

तृतीया(४) च होश्छन्दसि। २। ३। ३।

जुहोतेः कर्मणि तृतीया स्याद्द्वितीया च। "यवाग्वाग्निहोत्रं जुहोति"। अग्निहोत्रशब्दोऽत्र हविषि वर्त्तते "यस्याग्निहोत्रमधिश्रितममेध्यमापद्येते" त्यादिप्रयोगदर्शनात् अग्नये हूयत इति व्युत्पत्तेश्च। यवाग्वाख्यं (५) हविर्देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः।

द्वितीया ब्राह्मणे। २। ३। ६०।

---

(४) कर्मणि द्वितीयेत्यतः (२५०पृ०)कर्मणीत्यनुवर्त्तते चेन द्वितीया समुच्चीयते।

(५) यवाग्वाख्यमिति भिन्नविभक्त्याक्रान्तत्वेऽपि भिन्नार्थकविभक्त्यनाक्रान्तत्वात् नामार्थयोरभेदान्वयः मन्यार्थकर्मणि द्वितीयाचतुर्थ्योर्भिन्नविभक्तिकत्वेऽपि त्वां तृणाय न मन्ये इत्यादावभेदान्वयदर्शनात्।

ब्राह्मणे (६) विषये प्रयोगे दिवस्तदर्थस्य कर्म्मणि द्वितीया स्यात्। षष्ठ्यपवादः। "गामस्य तदहः सभायां दीव्येयुः"।

**चतुर्थ्यर्थे बहुलं छन्दसि। २। ३। ६२।**

षष्ठी स्यात्। "पुरुषमृगश्चन्द्रमसे"। "गोधा कालका दार्वाघाटास्ते वनस्पतीनाम्" वनस्पतिभ्य इत्यर्थः। षष्ठ्यर्थे चतुर्थीति वाच्यम् *। "या खर्वेण पिबति तस्यै खर्वः"।

**यजेश्च करणे। २। ३। ६३।**

इह छन्दसि बहुलं षष्ठी। घृतस्य घृतेन वा यजते।

**बहुलञ्छन्दसि। २। ४। ३९।**

अदो घस्लादेशः स्यात्। घस्तान्नूनम्। लुङि मन्त्रे घसेति (उ४८२सू०) च्लेर्लुक्। अडभावः। "सग्धिश्च मे" (७)।

**हेमन्तशिशिरावहोरात्रे च छन्दसि। २। ४। २८।**

द्वन्द्वः पूर्व्ववल्लिङ्गः। हेमन्तश्च शिशिरश्च हेमन्तशिशिरौ। अहोरात्रे। अद्रिप्रभृतिभ्यः शपः (उ१०६सू०)।

(६) ब्राह्मणो मन्त्रेतरवेदभागः। विभाषोपसर्गे (२६६सू०) इति विभाषया प्राप्तावपि नित्यमुपसर्गार्थोऽयमारम्भः।

(७) अदेः क्तिनि घस्लादेशे घसभसोर्हलि च (उ५१४सू०) इत्युपधालोपे झलो झलीति (उ४०सू०) सलोपे झषस्तथोरिति(उ४०सू०)धत्वे घस्य जश्त्वे ग्धिरिति सिद्धं ततः समानस्य छन्दस्यमूर्द्धप्रभृतीत्यनेन (४७२सू०) सादेशः।

**बहुलञ्छन्दसि। २। ४। ७३।**

"वृत्रं हनति वृत्रहा"। "अहिः शयत उपपृक् पृथिव्याः"। अत्र लुक् न। अदादिभिन्नेऽपि क्वचिल्लुक्। "त्राध्वं नो देवाः"। जुहोत्यादिभ्यः (७१२८पृ०) श्लुः।

**बहुलञ्छन्दसि। २। ४। ७६।**

"दाति प्रियाणि चिद्वसु"। अन्यत्रापि "पूर्णां विवष्टि"।

**मन्त्रे घस ह्वर णश वृ दहाद्वृच् कृ गमिजनिभ्यो लेः। २। ४। ८०।**

लिरिति च्लेः प्राचां संज्ञा एभ्यो लेर्लुक् स्यान्मन्त्रे। "अक्षन्नमी मदन्त हि"। घस्लादेशस्य गमहनेति(७६१पृ०) उपधालोपे शासिवसीति(७२०६पृ०) षः। "मा ह्वर्मित्रस्य"(८)। "धूर्तिः प्रणङ्मर्त्यस्य"। नशेर्वेति(१८५पृ०) कुत्वम्। "सुरुचो वेन आवः"। "मा न आधक्"। आदित्याकारान्तानां ग्रहणम्। 'आप्रा द्यावापृथिवी' परागभारभृद्यथा'। "अक्रन्नुषासः"। 'त्वे रयिं जागृवांसोऽनुग्मन्'। मन्त्रग्रहणं ब्राह्मणस्याप्युपलक्षणम्। "अज्ञत (९) वा अस्य दन्ताः"। विभाषानुवृत्तेर्नेह। "न ता अग्ृभ्णन्नजनिष्ट हि सः"।

इति द्वितीयोऽध्यायः।

(८) माङि ह्वरतेर्लुङि च्लेर्लुकि सार्वधातुकगुणे रपरत्वे हल्ङ्यादि-(१११पृ०स्थ०) लोपे रूपसिद्धिः।

(९) अज्ञत अजनिषतेति लोके।

**अभ्युत्सादयांप्रजनयाञ्चिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि। ३। १। ४२।**

एते निपात्यन्ते आद्येषु चतुर्षु (१०) लुङि आम् अकरित्यनुप्रयोगश्च। अभ्युत्सादयामकः। अभ्युदसीषददिति लोके। प्रजनयामकः। प्राजीजनदित्यर्थः। चिकयामकः। अचैषीदित्यर्थे चिनोतेराम् द्विर्वचनं कुत्वं च। रमयामकः। अरीरमत्। पावयांक्रियात्। पाव्यादिति लोके। विदामक्रन् (११) अवेदिषुः।

**गुपे(१२) श्छन्दसि। ३। १। ५०।**

च्लेश्चङ् वा। "इमाद्जूगुपतं युवाम्" अगौप्तमित्यर्थः।

**नो (१३) नयतिध्वनयत्येलयत्यर्दयतिभ्यः। ३। १। ५१।**

---

(१०) एते छन्दसि वा निपात्यन्ते तत्र षदिजनिरमिभ्योणयन्तेभ्य एवाम् चिनोतेस्तु शुद्धादिति विशेषः।

(११) विदेर्लुङ्याम् गुणाभावो लुङन्तकरोतेरनुप्रयोगश्च तत्र मन्त्रे घसेत्यादिना (७४८२४०)च्लेर्लुकि गुणाभावः।

१२) आयप्रत्ययाभावपक्षे एवेदं प्रवर्त्तते गुपेरिति निरायप्रत्ययान्ततया निर्देशात्। मनो०

(१३) नयत्यादिभ्यः च्लेश्चङ् नेत्यर्थः प्राञ्चस्तु भाषायामपि विभाषयेदं प्रवर्त्तते इत्याहुः।

च्लेरङ् न। "मा त्वायतो जरितुः काममूनयीः" (१४)। "मा त्वाग्निर्ध्वनयीत्"।

**कृमृदृरुहिभ्यश्छन्दसि। ३। १। ५६।**

च्लेरङ् वा। "इदन्तेभ्योऽकरन्नमः"। अमरत् (१५)। अदरत्। "यत्सानोः सानुमारुहत्"।

**छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्य्यस्तर्य्याध्वर्य्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि। ३। १। १२३।**

एते निपात्यन्ते। कृन्ततेर्निस्पूर्व्वात् क्यपि प्राप्ते ण्यत्, आद्यन्तयोर्विपर्य्यासः निसः षत्वञ्च। "निष्टर्क्यंश्चिन्वीत पशुकामः"। देवशब्दे उपपदे ह्वयतेर्जुहोतेर्वा क्यप् दीर्घश्च। "स्पर्द्धन्ते वा उ देवहूये"। प्र उत् आभ्यान्नयतेः क्यप्। प्रणीयः। उन्नीयः। उत्पूर्व्वाच्छिषेः क्यप्। उच्छिष्यः। मृङ् स्तृ ध्वृ एभ्यो यत्। मर्य्यः। स्तर्य्या। स्त्रियामेवायम्। ध्वर्य्यः। खनेर्य्यण्यतौ। खन्यः खान्यः। यजेर्य्यः। "शुन्धध्वन्दैव्याय कर्म्मणे देवयज्यायै"। आङ्पूर्व्वात् पृच्छेः क्यप्। "आपृच्छ्यं धरुणं वाज्यर्षति"। सीव्यतेः क्यप् षत्वं च। प्रतिषीव्यः। ब्रह्मणि वदेर्ण्यत् ब्रह्म

(१४) त्वायतस्त्वामिच्छतः जरितुः स्तोतुर्मम काममभिलाषं मा ऊनयीः ऊनं मा कार्षीरित्यर्थः।

(१५) अमरदिति पदव्यत्ययेन परस्मैपदमिति बोध्यम्।

वाद्यम् । लोके तु वदः सुपि क्यप् चेति (उ२०४५०) क्यब्यतौ । भवतेः स्तौतेश्च ण्यत् । भाव्यः । स्ताव्यः । उपपूर्व्वाच्चिनोतेर्ण्यत् आयादेशश्च पृडे उत्तरपदे । उपचाय्यपृडम् (१६) । हिरण्य इति वक्तव्यम् * । उपचेयपृडमेवान्यत् । मृड सुखने पृड चेत्यस्मादिगुपधलक्षणः (उ३१८५०) कः ।

## छन्दसि वनसनरक्षिमथाम् । ३ । २ । २७ ।

एभ्यः कर्म्मण्युपपदे इन् स्यात् । "ब्रह्मवनिं त्वा क्षत्रवनिम् उत नो गोषणिन्धियम्" । "ये पथां पथिरक्षयः" । "चतुरक्षौ पथिरक्षी" । "हविर्म्मथीनामभि" ।

## छन्दसि सहः । ३ । २ । ६३ ।

ण्विः स्यात् । पृतनाषाट् ।

## वहश्च । ३ । २ । ६४ ।

प्राग्वत् । दित्यवाट् । योगविभाग उत्तरार्थः ।

## कव्यपुरीषपुरीष्येषु ञ्युट् । ३ । २ । ६५ ।

एषु वहेर्ञ्युट् स्याच्छन्दसि । कव्यवाहनः । पुरीषवाहनः । पुरीष्यवाहनः ।

## हव्येऽनन्तःपादम् । ३ । २ । ६६ ।

"अग्निर्यक्ष्म हव्यवाहनः" । "अग्निश्च हव्यवाहनः । पादमध्ये तु वहश्चेति ण्विरेव" । "हव्यवाडग्निरजरः पिता नः" ।

(१६) उपचाय्यं तत् पृडं सुखञ्चेति कर्म्मधारयः ।

**जनसनखनक्रमगमो विट्। ३। २। ६७।**

विड्वनोः(७।३।८४सू०)इत्यात्त्वम्। अब्जाः। गोजाः। "गोषा इन्द्रो नृषा असि"। सनोतेरन इति(८।३।७सू०)षत्वम्। "इयं शुष्मेभिर्बिसखाइवारुजत्"। 'आ दधिक्राः शवसा पञ्च कृष्टीः'। अग्रेगाः।

**मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् (१७) । ३। २। ७१।**

श्वेतवाहादीनां डस्पदस्येति वक्तव्यम्*। यत्र पदत्वं भावि तत्र ण्विनोऽपवादो डस् वक्तव्य इत्यर्थः। श्वेतवाः। श्वेतवाहौ। श्वेतवाहः। उक्थानि उक्थैर्वा शंसति उक्थशा यजमानः। उक्थशासौ इक्थशासः। पुरो दाश्यते दीयते पुरोडाः।

**अवे यजः। ३। २। ७२।**

अवयाः। अवयाजौ। अवयाजः।

**अवयाः श्वेतवाः पुरोडाश्च। ८। २। ६७।**

एते सम्बुद्धौ कृतदीर्घा,निपात्यन्ते। चादुक्थशाः।

**विजुपे छन्दसि। ३। २। ७३।**

उपे उपपदे यजेर्विच्। उपयट्।

---

(१७) श्वेतादिषूपपदेषु वहादिभ्यो ण्विन् तत्रायं विशेषः श्वेतशब्दे कर्तृवाचिन्युपपदे वहेः कर्मणि, उक्थशब्दे कर्मणि करणे चोपपदे, शंसतेः कर्त्तरि प्रत्ययो नलोपश्च, पुरस्युपपदे दाशेः कर्मणि ण्विन्प्रत्ययो धातोरादेर्डत्वञ्चेति भेदः। मनो०।

आतो मनिन्क्वनिब्वनिपश्च। ३। २। ७४।

सुप्युपसर्गे चोपपदे आदन्तेभ्यो धातुभ्यश्छन्दसि विषये मनिनादयस्त्रयः प्रत्यया स्युः। चाद्विच्। सुदामा। सुधीवा। सुपीवा। भूरिदावा। घृतपावा। विच्। कीलालपाः।

बहुलञ्छन्दसि। ३। २। ८८।।

उपपदान्तरेऽपि हन्तेर्बहुलं क्विप् स्यात्। मातृहा। पितृहा। छन्दसि लिट् (७३६४सू०) भूतसामान्ये। "अहं द्यावापृथिवी आततान"। क्वसुश्च (३६४सू०) छन्दसि लिटः कानच्क्वसू वास्तः। "चक्राणा वृष्णिः" (१८)। छन्दसि परेच्छायामपि क्यच् वक्तव्यः"। "यो नो अग्ने अररिवान् अघायुः"।

क्याच्छन्दसि। ३। २। १७०।

उप्रत्ययः स्यात्। अघायुः (१९)। एरच् (७४४२सू०) इत्यधिकारे। जवसवौ

---

(१८) सुप आत्मनः क्यच् (७२२०सू०) इत्यत्रात्मेति विशेषणात् परेच्छायामप्राप्ते वचनम् अररिवानिति रातेः क्वसौ ररिवान् पश्चात् नञ्समासः।

(१९) परस्याघमिच्छतीति क्यचि आकारादेशे प्रत्ययान्तत्वात् अ प्रत्ययादिति (७४५१सू०) इति अप्रत्यये प्राप्ते क्याच्छन्दसीति विशेषविधानादुप्रत्ययः।

(२०) छन्दसि वाच्यौ *। "जवे याभिर्यूनः"। "ऊर्वोस्तु मे जवः"। "देवस्य सवितुः सवे"।

**मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः। ३। ३। ९६।**

वृषादिभ्यः(२१) क्तिन् स्यात् सचोदात्तः। "वृष्टिन्दिवः"। "सुम्नमिष्टये पच पक्तीरुत"। "इयन्ते न व्यसी मतिः"। वित्तिः। भूतिः। "अग्न आयाहि वीतये"। "राती स्यामो-ऽभयासः"।

**छन्दसि लुङ्लङ्लिटः। ३। ४। ६।**

धात्वर्थानां सम्बन्धे सर्व्वकालेष्वेते वा स्युः। पक्षे यथास्वं प्रत्ययाः। लुङि। देवो 'देवेभिरागमत्"। लोडर्थे लुङ्। "इदन्तेभ्योऽकर(२२)न्नमः"। लङ्। "अग्निमद्य होतारमवृ-णीतायं यजमानः"। लिट्। अद्य ममार। अद्य म्रियत इत्यर्थः।

**लिङर्थे लेट्। ३। ४। ७।**

विध्यादौ हेतुमद्भावादौ च धातोर्लेट् स्याच्छन्दसि।

**सिब्बहुलं लेटि। ३। १। ३४।**

**इतश्च लोपः परस्मैपदेषु। ३। ४। ९७।**

लेटस्तिङामितो लोपो वा स्यात् परस्मैपदेषु।

(२०) ऋदोरबिति (उ४४२पृ०)प्राप्ते जुसुवोरब्विधानं स्वरार्थम् रूपाभेदात्।

(२१) वीरा इत्यत्र पञ्चम्यर्थे प्रथमेत्याशयेन व्याचष्टे वृषादिभ्य इति।

(२२) कृञ्देत्यादिना च्ले (उ४४५पृ०) रङि ऋदृशोऽङीति (उ१०४पृ०) गुणे रपरत्वम्।

## लेटोऽडाटौ। ३। ४। ६४।

लेटः अट् आट् एतावागमौ स्तस्तौ च(२३) पितौ। सिब्बहुलं णिद्वक्तव्यः *। वृद्धिः। 'प्रण आयूंषि तारिषत्'(२४)। 'सुपेशस स्करति जोषिषद्धि' (२५)। 'आसाविषत्(२६)अर्शसानाय। सिपइलोपस्य चाभावे'। 'पताति (२७) दिद्युत्'। 'प्रियस्सूर्य्ये प्रियोऽग्नाभवाति'।

## स उत्तमस्य। ३। ४। ६८।

लेडुत्तमसकारस्य वा लोपः स्यात्। करवाव (२८) करवावः। टेरेत्वम् (७२२पृ०सू०)।

## आत ऐ। ३। ४। ६५।

लेट आकारस्य ऐः स्यात्। 'सुतेभिः सुप्रयसा मादयैते'(२६)। तामित्याकारस्य ऐकारः। विधिसामर्थ्यादाट ऐत्वन्न अन्यथा हि ऐटमेव विदध्यात्। 'यो यजाति(३०) यजात' इति।

---

(२३) आडुत्तमस्येति (७१५पृ०) सूत्रान्मण्डूकप्लुत्या पिच्चेत्यनुवर्त्याह तौ च पिताविति

(२४) तारिषदिति तृधातोस्तिपइकारलोपे सिप इटि वृद्धौ अटि सिद्धम्।

(२५) जोषिषदिति जुषधातोर्व्यत्ययेन परस्मैपदे पूर्ववत्कार्य्यं गुणोऽत्र विशेषः।

(२६) आसाविषदिति आङ्पूर्वकात् सुधातोः प्राग्वत् वृद्धिरत्र विशेषः।

(२७) पतातीत्यत्र सिपोऽभावे इकारलोपाभावे च आडागमे सिद्धम्।

(२८) करवावेति छन्दस्युभयथा(४६३पृ०)इत्युक्तेः सार्व्वधातुकत्वात् विकरण उः आर्द्धोऽङित्वात् विकरणस्य गुणः ङित्वाभावाच्च करोतेर्नोत्वम्।

(२६) मादयतेर्ण्यन्ताल्लेट् आत ऐ इति तामित्याकारस्य ऐत्वे रूपसिद्धिः।

(३०) आट ऐत्वं नेत्युक्तं तस्य फलमाह यजातीति यजधातोस्तिप्याटि सिद्धम्

वैतोऽन्यत्र। ३। ४। ९६।

लेट एकारस्य ऐः स्याद्वा आतऐ इत्यस्य विषयं विना(२१)। 'पशूनामीशै'। 'ग्रहा गृह्यान्तै'। अन्यत्र किम् "सुप्रयसा मादयते"।

उपसंवादाशङ्कयोश्च। ३। ४। ८।

पणबन्धे(२२) आशङ्कायाञ्च लेट् स्यात्। 'अहमेव पशूनामीशै'। 'नेज्जिह्मायन्तो (२३) नरकम्पताम'। हलः श्नः शानज्झौ(७।१६५९०)।

छन्दसि शायजपि। ३। १। ८४।

अपिशब्दाच्छानच्। हृग्रहोर्भ श्छन्दसीति* हस्य भः। 'गृभाय जिह्वाया मधु'। 'बधान देव! सवितः'!। अनिदितामिति (१७८९०) बध्नातेर्नलोपः। 'गृभ्णामि ते'। 'मध्वा जभार'।

व्यत्ययो बहुलम्। ३। १। ८५।

विकरणानां बहुलं व्यत्ययः स्यात् छन्दसि। "आण्डाशुष्णस्य भेदति"। भिनत्तीति प्राप्ते। "जरसा मरते पतिः"। म्रियत

(२१) अन्यत्रपदं व्याचष्टे विषयं विनेति सन्निधानात्तस्यैव भेदप्रतियोगित्वौचित्यात्।

(२२) यदि भवानिदं कुर्यात्तर्हि इदमहं दास्यामीति समयकरणं-पणबन्धः, आशङ्का सम्भावना। अहमेवेति त्रिपुरविजयाय देवैः प्रार्थितस्य रुद्रस्येदं वचनम्। पशवोऽत्र संसारिणः। मनो०

(२३) न इदिति च्छेदः इच्छब्द आशङ्काद्योतकः जिह्माचरणे नरकपातः सम्भाव्यते स मा भूदित्यर्थः। मनो०

इति प्राप्ते। 'इन्द्रोवस्तेन नेषतु'। नयतेर्लोट् शप्सिपौ द्वौ विकरणौ। 'इन्द्रेण युजा तरुषेम(२४)वृत्रम्'। तरेमेत्यर्थः। तरतेर्विध्यादौ लिङ् उः सिप् शप् चेति त्रयो विकरणाः।
"सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङाञ्च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन"।
'धुरि दक्षिणायाः। दक्षिणस्यामिति प्राप्ते'। 'चषालं ये अश्वयूपाय तक्षति'। तक्षन्तीति प्राप्ते। उपग्रहः परस्मैपदात्मनेपदे। 'ब्रह्मचारिणमिच्छते'। इच्छतीति प्राप्ते। 'प्रतीपमन्य ऊर्मिर्युध्यति"। युध्यत इति प्राप्ते। 'मधोस्तृप्ता इवासते'। मधुन इति प्राप्ते। नरः पुरुषः। 'अधासवीरैर्दशभिर्वियूयाः'। वियूयादिति प्राप्ते। कालः कालवाची प्रत्ययः। 'श्वोऽग्नीनाधास्यमानेन'। लुटोविषये लृट्। 'तमसोगाअदुक्षत्'। अधुक्षदिति प्राप्ते। 'मित्रवयञ्च सूरयः'। मितावयमिति प्राप्ते। स्वरव्यत्ययस्तु वक्ष्यते। कर्तृशब्दः कारकमात्रपरः तथा च तद्वाचिनां कृत्तद्धितानां व्यत्ययः। अन्नादाय। अणिविषये अच्। अवग्रहे(२५)विशेषः। यङो यशब्दादारभ्य लिङ्याशिष्यङिति ङकारेण प्रत्याहारः। तेषां व्यत्ययो भेदतीत्यादिरुक्त एव।

लिङ्याशिष्यङ्। ३। १। ८६।

(२४) उप्रत्ययान्तस्य सिपं प्रत्यनङ्गत्वात् न गुणः सिबन्तस्य शपि लघूपध गुणः प्राप्तोऽपि बाहुलकान्न भवतीति बोध्यम्। ममो०

(२५) कर्म्मण्यणि अचि च कृते रूपभेदाभावेऽपि अवग्रहोविग्रहस्तस्य भेदः कर्म्मण्यणि कृते उपपदसमासः अचि तु अन्नस्याद इति कर्म्मषष्ठीति भेद इतितत्कृतः स्वरविशेषः।

आशीर्लिङि परे धातोरङ् स्याच्छन्दसि। वचऊम्(११७पृ०)। 'मन्त्रं वोचेमाग्नये'। दृशेरग्वक्तव्यः *। 'पितरञ्च दृशेयम्मातरञ्च'। अङि तु ऋदृशोऽङीति (७१०४पृ०) गुणः स्यात्।

## छन्दस्युभयथा। ३। ४। ११७।

धात्वधिकारे उक्तप्रत्ययः सार्वधातुकार्द्धधातुकोभयसंज्ञः स्यात्। 'वर्द्धन्तु त्वा सुष्टुतयः'। वर्द्धयन्त्वित्यर्थः। आर्द्धधातुकत्वाण्णिलोपः। विशृण्विरे। सार्व्वधातुकत्वात् श्नुः श्नभावश्च। हुश्नुवोरिति (७६८पृ०)।

## आदृगमहनजनः किकिनौ लिट् च। ३। २। १७१।

आदन्तादृवर्णान्ताद्गमादेश्च किकिनौ स्तस्तौ च लिड्वत्। पपिः सोमम्। ददिर्गाः। बभ्रिर्वज्रम्। जग्मिर्युवा। 'जघ्निर्वृत्रममित्रयम्'। जज्ञिः। लिड्वद्भावादेव सिद्धे ऋच्छत्यृतामिति(७९७पृ०)गुणबाधनार्थं कित्त्वम्। बहुलं छन्दसि(७५२१पृ०) इत्युत्त्वम्। ततुरिः (३६)। जगुरिः।

## तुमर्थे (३७) सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः। ३। ४। ९।

(३६) तत्वे आदिति मुखसुखार्थोदकारो न तु तकारस्तेन तात्परत्वाभावाद्दीर्घादपि किकिनावित्याशयेनाह ततुरिरिति।

(३७) तुमनोऽर्थस्तुमर्थो भाव एव अव्ययकृतोभावे इत्युक्तेः स च साध्यरूपः प्रकृत्यर्थे तुमादय इति प्रागुक्तेः।

से । 'वक्षे रायः' । सेन् । तावामेषे । असे । 'शरदोजीवसे धाः' । असेनित्याद्युदात्तः । क्से । प्रेषे । कसेन् । 'गवामिव श्रियसे' । अध्यै अध्यैन् । 'जठरम्पृणाध्यै' । पचे आद्युदात्तः । कध्यै कध्यैन् । आहुवध्यै । पचे नित्स्वरः । शध्यै । 'राधसः सह मादयध्यै' । शध्यैन् । 'वायवे पिवध्यै (३८) । तवै । द्वातवाइति । तवेङ् । सूतवे । तवेन् । कर्त्तवे ।

## प्रयैरोहिष्यै अव्यथिष्यै । ३ । ४ । १० ।

एते तुमर्थे निपात्यन्ते । प्रयातुं रोढुम् अव्यथितुमित्यर्थः ।

## दृशे विख्ये च (३९) । ३ । ४ । ११ ।

द्रष्टुं विख्यातुमित्यर्थः ।

## शकि णमुलकमुलौ । ३ । ४ । १२ ।

शक्नोतावुपपदे तुमर्थे एतौ स्तः । 'विभागं नाशकत्' । 'अपलुपं नाशकत्' । विभक्तुमपलोप्तुमित्यर्थः ।

## ईश्वरे तोसुन्कसुनौ । ३ । ४ । १३ ।

ईश्वरो 'विचरितोः' । 'ईश्वरो विलिखः' (४०) । विचरितुं विलेखितुमित्यर्थः ।

---

(३८) पिवध्यै इत्यत्र यक्प्रसङ्गे शप् पिवादेशश्च बाहुलकात् ।

(३९) एतौ दृशेर्विपूर्वात् ख्यातेश्च तुमर्थे केप्रत्ययान्ततया निपातितौ ।

(४०) क्त्वातोसुन्कसुनः(२।४।४०)इत्यव्ययत्वाद्विभक्तेर्लुकि लुमत्त्वादसन्त्वेऽपि न दीर्घः ।

### कृत्यार्थे तवैकेन्केन्यत्वनः। ३। ४। १४।

'न म्लेच्छितवै'। 'अवगाहे'। दिदृक्षेण्यः। "सूर्यस्य कर्त्वम्"।

### अवचक्षे च। ३। ४। १५।

'रिपुणा नावचक्षे' अवख्यातव्यमित्यर्थः।

### भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्। ३। ४। १६।

'आसंस्थातोः (४१) सीदन्ति'। आसमाप्तेः सीदन्तीत्यर्थः। उदेतोः। अपकर्तोः। प्रवदितोः। प्रचरितोः। होतोः। आतमितोः। 'काममाविजनितोः सम्भवाम:'।

### सृपितृदोः कसुन्। ३। ४। १७।

भावलक्षणे इत्येव। 'पुरा क्रूरस्य विसृपो विरप्शिन्'। 'पुरा जत्रुभ्य आतृदः'।

इति तृतीयोऽध्यायः।

---

### रात्रेश्चाऽजसौ(४२)। ४। १। ३१।

रात्रिशब्दान्ङीप् स्यात् अजस्विषये छन्दसि। 'रात्री

---

(४१) संस्थादीनामवधित्वेन भावलक्षणत्वम्।

(४२) न जसिः अजसिरिकार उच्चारणार्थः।

स्य व्यदायती'। लोके तु क्वदिकारादिति ङीष्यन्तोदात्तः।

**नित्यञ्छन्दसि। ४। १। ४६।**

बह्वादिभ्यश्छन्दसि विषये नित्यं ङीष्। "बह्वीषु हित्वा"। नित्यग्रहणमुत्तरार्थम्।

**भुवश्च। ४। १। ४७।**

ङीष् स्यात् छन्दसि। विभ्वी। प्रभ्वी। विप्रसंभ्य इति (२७८) डु प्रत्ययान्तं सूत्रेऽनुक्रियते उतइत्यनुवृत्तेः(४३)। उवङादेशस्तु सौतः। मुद्गलाच्छन्दसि लिच्च * (४४)। ङीषोलित्त्वमानुक् चागमः। लित्स्वरः। 'रथीरभून्मुद्गलानी'।

**दीर्घजिह्वी च छन्दसि। ४। १। ५९।**

संयोगोपधत्वादप्राप्तो ङीब्विधीयते। 'असुरी वै दीर्घजिह्वी देवानां यज्ञवाट्'।

**कद्रुकमण्डल्वोश्छन्दसि। ४। १। ७१।**

ऊङ् स्यात्। 'कद्रूश्च वै कमण्डलूः'। गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम् *। गुग्गुलूः। मधूः। जतूः। पतयालूः। अव्ययात्त्यप् (५५७पृ०)। आविष्ट्यस्योपसंख्यानञ्छन्दसि *। 'आविष्ट्यो वर्द्धते'।

(४३) वोतोगुणवचनात् (२२९पृ०) इत्यत उकारान्तस्यैवानुवर्त्तनादित्यर्थः।

(४४) इन्द्रवरुणेति (२३१पृ०)सूत्रस्य वार्त्तिकमिदमतस्तत्सूत्रान्ङीष् आनुक् चानुवर्त्तते इत्याशयेनाहानुक् चागमइति।

**छन्दसि ठञ्। ४। ३। १९।**

वर्षाभ्यः। ठकोऽपवादः। स्वरे भेदः। वार्षिकम्।

**वसन्ताच्च। ४। ३। २०।**

ठञ् स्यात् छन्दसि। वासन्तिकम्।

**हेमन्ताच्च। ४। ३। २१।**

छन्दसि ठञ्। हैमन्तिकम्। योगविभाग उत्तरार्थः।

**शौनकादि (३५) भ्यश्छन्दसि। ४। ३। १०६।**

णिनिः प्रोक्ते। छाणोरपवादः। शौनकेन प्रोक्तमधीयते शौनकिनः। वाजसनेयिनः। छन्दसि किम् शौनकीया शिक्षा।

**द्व्यचश्छन्दसि। ४। ३। १५०।**

विकारे वा मयट् स्यात्। शरमयं वर्हिः। "यस्य पर्णमयी जुहूः"

**नोत्वद्वर्ध्रविल्वात्। ४। ३। १५१।**

उत्वान् उकारवान्। मौञ्जं शिक्यम्। वर्ध्रं चर्म तस्य विकारो वार्ध्री रज्जुः। वैल्वो यूपः। सभाया यः (६२४पृ०)।

**ढश्छन्दसि। ४। ४। १०६।**

सभेयो युवा।

**भवे छन्दसि। ४। ४। ११०।**

(३५) एतल्लुस्तकपूर्वार्द्धे ५८१ पृष्ठे शौनकादिगणो द्रष्टव्यः।

सप्तम्यन्ताद्भवार्थे यत् ।। "मेध्याय च नमः विद्युत्याय च" । यथा-यथं शैषिकाणामण्वादीनाञ्च घादीनामपवादोऽयं यत् । पक्षे तेऽपि भवन्ति सर्वविधीनाञ्छन्दसि वैकल्पिकत्वात् । तद्यथा । मुञ्जवान्नाम पर्वतः तत्र भवः मौञ्जवतः । "सोमस्येव मौञ्जवतस्य भक्षः" । आचतुर्थसमाप्तेश्छन्दोऽधिकारः ।

पाथोनदीभ्यां ड्यण् । ४ । ४ । १११ ।

"तमुत्वा पाथ्यो वृषा" । "चनो दधीत नाद्यो गिरो मे । पाथसि भवः पाथ्यः । नद्याम्भवो नाद्यः ।

वेशन्तहिमवद्भ्यामण् । ४ । ४ । ११२ ।

भवे । "वैशन्तीभ्यः स्वाहा" । "हैमवतीभ्यः स्वाहा" ।

स्रोतसो विभाषा ड्यड्ड्यौ । ४ । ४ । ११३ ।

पक्षे यत् । ड्यड्ड्ययोस्तु स्वरे भेदः । स्रोतसि भवः स्रोत्यः-स्रोतस्यः ।

सगर्भसयूथसनुताद्यत् । ४ । ४ । ११४ ।

अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । "यो नः सनुत्यः उत-वा जिघत्नुः" । नुतिर्नुतम् । नपुंसके भावे क्तः (७२६२४०) । सगर्भादयस्त्रयोऽपि कर्म्मधारयाः समानस्य छन्दसीति (४७२४०) सः । ततोभवार्थे यत् ।

तुग्राद्घन् । ४ । ४ । ११५ ।

भवेऽर्थे। पक्षे यदपि। "आवः समं वृषभं तुग्र्यास्विति बहृचाः। तुग्रियास्विति शाखान्तरे। घनाकाशयज्ञवरिष्ठेषु तुग्रशब्द इति वृत्तिः।

अग्राद्यत्। ४। ४। ११६।

घच्छौ च। ४। ४। ११७।

चाद्यत्। अग्रेभवोऽग्र्यः-अग्रियः-अग्रीयः।

समुद्राभ्राद्घः। ४। ४। ११८।

"समुद्रिया अप्सरसो मनीषिणम्"। "नानदतोऽभ्रियस्येव! घोषाः"।

बर्हिषि दत्तम्। ४। ४। ११९।

प्राग्घिताद्यदित्येव(६२०४०)। "बर्हिष्येषु निधिषु प्रियेषु"।

दूतस्य भागकर्म्मणी। ४। ४। १२०।

भागोंऽशः। दूत्यम्।

रक्षोयातूनां हननी (४६)। ४। ४। १२१।

"या ते अग्ने! रक्षस्या तनूः"।

रेवतीजगतीहविष्याभ्यः प्रशस्ये। ४। ४। १२२।

(४६) हन्यतेऽनयेति व्युत्पत्त्या करणे ल्युट्। हननकरणमर्थः यातूनामिति बहुवचननिर्द्देशात् यत्प्रत्ययेन बहूनां रक्षसां हननप्रतीतिरिति बोध्यम्।

प्रशंसने यत्स्यात् । रेवत्यादीनामप्रशंसनं रेवत्यम् । जगत्यम् । हविष्यम् ।

असुरस्य स्वम् । ४ । ४ । १२३ ।

"असुर्य्यन्देवेभिर्धायि विश्वम्" ।

मायायामण् । ४ । ४ । १२४ ।

आसुरी माया ।

तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः । ४ । ४ । १२५ ।

वर्चस्वानुपधानो मन्त्र आसामिष्टकानां वर्चस्या । ऋतव्याः ।

अश्विमानण् । ४ । ४ । १२६ ।

"आश्विनीरुपदधाति" ।

वयस्यासु मूर्ध्नो मतुप् । ४ । ४ । १२७ ।

तद्वानासामिति सूत्रं सर्व्वमनुवर्त्तते । मतोरिति पदमावर्त्य पञ्चम्यन्तं बोध्यम् । मतुबन्तो यो मूर्द्धशब्दस्ततो मतुप्स्यात् प्रथमस्य मतोर्लुक् च । वयश्शब्दवन्मन्त्रोपधेयास्विष्टकासु । यस्मिन् मन्त्रे मूर्द्धवयः शब्दौ स्तस्तेनोपधेयासु । "मूर्द्धन्वतीरुप" "दधातीति प्रयोगः ।

मत्वर्थे मासतन्वोः । ४ । ४ । १२८ ।

नभोऽस्मिन् तदस्मिन्नस्तीति नभस्योमासः। ओजस्या तनूः।

मघोर्ञ् च।४।४।१२९।

माधवः-मधव्यः *।

ओजसोऽहनि यत्खौ।४।४।१३०।

ओजस्यमहः ओजसीनं वा।

वेशोयशआदेर्भगाद्यल्।४।४।१३१।

वेशोबलं तदेव भगः। वेशोभग्यः। यशोभग्यः।

ख च।४।४।१३२।

वेशोभगीनः। यशोभगीनः। योगविभाग उत्तरार्थः क्रमनिरासार्थश्च।

पूर्वैः कृतमिनियौ च।४।४।१३३।

"गम्भीरेभिः पथिभिः पूर्विणेभि"।'एतेपन्थाः सवितः पूर्व्यासः'

अद्भिः संस्कृतम्।४।४।१३४।

"यस्येदमप्यं हविः"।

सहस्रेण सम्मितौ घः।४।४।१३५।

"सहस्रियासोऽपाम्नोर्मयः"। सहस्रेण तुल्या इत्यर्थः।

मतौ च।४।४।१३६।

---

* मघोरिति (४, ४, १२९) सूत्रेण पक्षे यत्।

सहस्रशब्दान्मत्वर्थे घः स्यात्। सहस्रमस्यास्तीति सहस्रियः।

**सोममर्हति यः। ४। ४। १३७।**

सोम्यो (४७) ब्राह्मणः यज्ञार्ह इत्यर्थः।

**मये च। ४। ४। १३८।**

सोमशब्दाद्यः स्यान्मयडर्थे। सोम्यं मधु। सोममय(४)मित्यर्थः।

**मधोः। ४। ४। १३९।**

मधुशब्दान्मयडर्थे यत् स्यात्। मधव्यः मधुमय इत्यर्थः।

**वसोः समूहे च। ४। ४। १४०।**

चान्मयडर्थे यत्। वसव्यः। अक्षरसमूहे छन्दसउपसंख्यानम्*। छन्दःशब्दादक्षरसमूहे वर्त्तमानात् स्वार्थे यदित्यर्थः। "आश्रावयेति चतुरक्षरम् अस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः एष वै सप्तदशाक्षरश्छन्दस्यः"।

**नक्षत्राद् घः। ४। ४। १४१।**

स्वार्थे। "नक्षत्रियेभ्यः स्वाहा"।

(४७) लोके शरादिषु पाठेन(५९९४०)मयट्। सोमइव सोम्यइति तु स्वार्थे यति बोध्यम्।

(४८) आगतविकारावयवप्रकृताः मयडर्थास्तेष्वर्थेष्वित्यर्थः सौम्येति वृद्धिपाठस्तु स्वार्थे ष्यञेति बोध्यम्।

सर्व्वदेवात्तातिल्। ४। ४। १४२।

स्वार्थे। "सविता न सुवतु सर्व्वतातिम्"। "प्रदक्षिणि देवतातिरुराणः"।

शिवशमरिष्टस्य करे। ४। ४। १४३।

करोतीति करः। पचाद्यच्। शिवं करोतीति शिवतातिः। "याभिः शन्ताती भरथोददाशुषे"। 'अथो अरिष्टतातये' (४८)

भावे च। ४। ४। १४४।

शिवादिभ्यो भावे तातिः स्याच्छन्दसि। शिवस्य भावः शिवतातिः। शन्तातिः। अरिष्टतातिः *।

इति चतुर्थोऽध्यायः।

---

सप्तनोऽञ्छन्दसि। ५। १। ६१।

तदस्य परिमाणमिति (६२८पृ०) वर्ग इति (६४०पृ०) च। "सप्त साप्तानि असृजत्"। सप्त वर्गानित्यर्थः। शन्शतोर्डिनिश्छन्दसि *। तदस्य परिमाणमित्यर्थे वाच्यः। पञ्चदशिनोऽर्द्धमासाः; त्रिंशिनोमासाः। विंशतेश्चेति वाच्यम् *। विंशिनोऽङ्गिरसः।

(४८) भाषायां शंतातिप्रभृतीनां प्रयोगोनास्त्येव अतएव वीरचरिते अरिष्टतातिमित्यस्य सिद्धयेऽस्माभिरन्यामेव गतिमुररीकृत्य व्याख्यातम् तत्र मत्कृततदीयव्याख्याने द्रष्टव्यम्।

युष्मदस्मदोः साहश्ये वतुब्वाच्यः * । "त्वावतः (५०) पुरूवसोः" । त्वावानन्यः । "यज्ञं विप्रस्य मावतः" । दण्डादिभ्यो यत् (६४१पृ०) ।

छन्दसि च । ५ । १ । ६७ ।

प्रातिपदिकमात्रात्तदर्हतीत्यर्थे यत् स्याच्छन्दसि । "सादन्यम् विदथ्यम्" ।

वत्सरान्ताच्छन्दसि । ५ । १ । ९१ ।

निर्वृत्तादिष्वर्थेषु । इद्वत्सरीयः (५१) ।

सम्परिपूर्वात् ख च । ५ । १ । ९२ ।

चाच्छः । संवत्सरीणः । संवत्सरीयः । परिवत्सरीणः-परिवत्सरीयः ।

छन्दसि घस् । ५ । १ । १०६ ।

ऋतुशब्दात्तदस्य प्राप्तमित्यर्थे । "भाग ऋत्वियः" ।

उपसर्गाच्छन्दसि धात्वर्थे । ५ । १ । ११८ ।

धात्वर्थविशिष्टे साधने वर्त्तमानादुपसर्गादुत्तरे स्वार्थे वतिः स्यात् । यदुद्वतः । निवतः । उद्गतान्निगतानित्यर्थः ।

थट् च छन्दसि । ५ । २ । ५० ।

---

(५०) त्वमिवेति त्वावान् प्रत्ययोत्तरपदयोश्चेति (५६८पृ०) त्वादेशे आ सर्वनाम्नः (१८४पृ०) इत्यात्त्वम् ।

(५१) इदादयः वर्षविशेषाः वराहसंहितायां परिगणितास्ते च तत्रैव द्रष्टव्याः ।

नान्तादसंख्यादेः परस्य डटः थट् स्यान्मट् च। पञ्चथम्-पञ्चमम्।

छन्दसि परिपन्थिपरिपरिणौ पर्य्यवस्थातरि।

५।२।८९।

पर्य्यवस्थाता शत्रुः। "अपत्यं परिपन्थिनम् विदन्"। "मा त्वा परिपरिणौ विदन्"।

बहुलञ्छन्दसि। ५।२।१२२।

मत्वर्थे विनिः स्यात्। "अग्निस्ते ओजस्वी"। छन्दोविन्प्रकरणे अष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम्*। इति दीर्घः। "मंहिष्ठमुभयाविनम्"। "शुनमोष्ट्राव्यचरत्"। छन्दसीवनिपौ च वक्तव्यौ*। ई। "रथीरभूत्"। "सुमङ्गलीरियं वधूः"। "मघवानमीमहे"।

तयोर्दार्हिलौ च छन्दसि। ५।३।२०।

इदन्तदोर्य्यथासंख्यं स्तः। "इदा हि व उपस्तुतिम्"। तर्हि।

था हेतौ च छन्दसि। ५।३।२६।

किमस्था स्याद्धेतौ प्रकारे च। "कथा ग्रामं न पृच्छसि"। "कथा दाशेम"।

पश्च पश्चा च छन्दसि। ५।३।३३।

अवरस्य अस्तात्यर्थे निपातौ। "पश्च हि सः"। "नो ते पश्चा"।

तुञ्छन्दसि। ५।३।५९।

तजन्तात् तृन्नन्ताच्च इष्ठन्नीयसुनौ स्तः । "आसुतिं करिष्ठः" "दोहीयसी धेनुः"

प्रत्नपूर्वविश्वेमात् थाल् छन्दसि । ५ । ३ । १११।

इवार्थे । "तं प्रत्नथा पूर्वथा विश्वथेमथा" ।

अमु च छन्दसि । ५ । ४ । १२ ।

किमेत्तिङव्ययघादित्येव । चादाम् । "प्रतरं नय प्रतराम्" ।

वृकज्येष्ठाभ्यान्तिल्तातिलौ च छन्दसि । ५ । ४ । ४१ ।

स्वार्थे । "यो नो दूरे वो वृकतिः" । "ज्येष्ठतातिं बर्हिषदम्" ।

अनसन्तान्नपुंसकाच्छन्दसि । ५ । ४ । १०३ ।

तत्पुरुषाट्टच् स्यात् समासान्तः । "ब्रह्मसामं भवति" । "देवच्छन्दसानि" ।

बहुप्रजाश्छन्दसि । ५ । ४ । १२३ ।

"बहुप्रजा निर्ऋतिमाविवेश" ।

छन्दसि च । ५ । ४ । १४२ ।

दन्तस्य दत् स्याद्बहुव्रीहौ । "उभयतोदतः प्रति गृह्णाति" ।

ऋतश्छन्दसि । ५ । ४ । १५८ ।

ऋदन्ताद्बहुव्रीहेर्न कप् । हता माता यस्य हतमाता ।

इति पञ्चमोऽध्यायः ।

एकाचो द्वे (५८८)। छन्दसि वेति वक्तव्यम् *। "यो जागार" "दाति प्रियाणि"।

## तुजादीनान्दीर्घोऽभ्यासस्य। ६। १। ७।

तुजादिराकृतिगणः। "प्रभरा तूतुजानः"। "सूर्य्यं मामहानम्"। "दाधारयः पृथिवीम्"। "स तूताव"।

## बहुलञ्छन्दसि। ६। १। ३४।

ह्वः सम्प्रसारणं स्यात्। "इन्द्रमाहुवे ऊतये"। ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि *। ऋक्शब्दे परे त्रेः सम्प्रसारणमुत्तरपदादेर्लोपश्चेति वक्तव्यम्। तृचं सूक्तम्। छन्दसि किम्? त्र्यृचानि। रयेर्मतौ बहुलम् *। रेवान्। "रयिमान् पुष्टिवर्द्धनः"।

## चायः की। ६। १। ३५।

"नात्यग्निर्न च निचिक्युरन्यम्"। लिड्यसि रूपम्। बहुलग्रहणानुवृत्तेर्नेह। "अग्निं ज्योतिर्निचाय्य"।

## अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशीराशीर्त्ताः। ६। १। ३६।

एते छन्दसि निपात्यन्ते। "इन्द्रश्च विष्णो यदपस्पृधेथाम्"। "अर्कमानृचुः"। "वस्रन्यानृहुः"। अर्च्चेर्हश्च लिट्यसि। चिच्युषे। च्युङो लिटि थासि। "यस्तित्याज"। त्यजेर्णलि। "श्रातास-

इन्द्रसोमाः"। "श्रिता नो ग्रहाः"। श्रीञ पाके निष्ठायाम्। "नाशीरं दुदुह्रे"। "मध्यत आशीर्त्तः"। श्रीञ एव क्विपि निष्ठायाञ्च।

खिदेश्छन्दसि। ६। १। ५२।

खिद दैन्ये। अस्यैच आत् स्यात्। चिखाद। चिखेदेत्यर्थः।

शीर्षंश्छन्दसि। ६। १। ६०।

शिरःशब्दस्य शीर्षन् स्यात्। "शीर्ष्णो जगतः"।

वा छन्दसि। ६। १। १०६।

दीर्घाज्जसि इचि च पूर्वसवर्णदीर्घो वा स्यात्। वाराही वाराह्यौ। "मानुषीरीलते विशः"। उत्तरसूत्रद्वयेऽपीदं(५२) वाक्यभेदेन संबध्यते। तेनाम्पि पूर्वत्वं वा स्यात्। शमीञ्च शम्यञ्च। सूर्म्यं सूर्मिं च। सम्प्रसारणाच्चेति (१४८९०) पूर्व्वरूपमपि वा। इज्यमानः यज्यमानः।

शेश्छन्दसि बहुलम्। ६। १। ७०।

लोपः स्यात्। "या ते गात्राणाम्"। "ता पिण्डानम्। एमन्नादिषु छन्दसि पररूपं वक्तव्यम्" *। "अपां त्वेमन्"। "अपां त्वोद्मन्"।

भय्यप्रवय्ये च छन्दसि। ६। १। ८३।

---

(५२)अमि पूर्व्व(१०९०)इति सम्प्रसारणाच्चेति(१४८९०)अधिमसूत्रद्वये इत्यर्थः।

त्रिभेत्यस्मादिति भय्यः। वेतेः प्रवय्या इति स्त्रियामेव निपातनम्। प्रवेयमित्यन्यत्र। छन्दसि किम्? भेयम्। प्रवेयम्। ह्रदय्या उपसंख्यानम् *। ह्रदे भवा ह्रदय्या आपः। भवे छन्दसि (४।४।११०) यत्।

## प्रकृत्यान्तःपादमव्यपरे। ६। १। ११५।

ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यात् अतिपरे न तु वकार यकारेऽति। "उपप्रयन्तो अध्वरम्"। "सुजाते अश्वसूनृते। अन्तःपादं किम्? एतास एतेऽर्चन्ति"। अव्यपरे किम्? "तेऽवदन्। तेऽयजन्"।

## अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च। ६। १। ११६।

एषु व्यपरेऽप्यति एङ् प्रकृत्या। "वसुभिर्नो अव्यात्"। "मित्रमहो अवद्यात्"। "मा शिवासो अवक्रमुः"। "ते नो अव्रताः"। "शतधारो अयं मणिः"। "ते नो अवन्तु"। "कुशिकासो अवस्यवः।" यद्यपि बह्वृचैः "तेनोऽवन्तु रथतूः सोऽयमागात्" "तेऽरुणेभिः" इत्यादौ प्रकृतिभावो न क्रियते तथापि बाहुलकात्" समाधेयम्। प्रातिशाख्ये तु वाचनिकएवायमर्थः।

## यजुष्युरः। ६। १। ११७।

उरःशब्द एङन्तोऽति प्रकृत्या यजुषि। "उरो अन्तरिक्षम्"। यजुषि पादाभावादनन्तःपादार्थं वचनम्।

### आपोजुषाणोवृष्णोवर्षिष्ठेअम्बे-अम्बाले-अम्बिकेपूर्वे। ६।१।११८।

यजुषि अति प्रकृत्या। "आपो अस्मान्मातरः"। "जुषाणो अग्नि राज्यस्य"। "वृष्णो अंशुभ्याम्"। "वर्षिष्ठे अधिनाके"। "अम्बे अम्बाले अम्बिके"। अस्मादेव वचनादम्बार्थेति (११७५०) ह्रस्वो न।

### अङ्ग इत्यादौ च। ६।१।११९।

अङ्गशब्दे य एङ् तदादौ च अकारे य एङ्पूर्वःसोऽति प्रकृत्या यजुषि। "प्राणो अङ्गे अङ्गेअदीध्यत्"। "अङ्गे अङ्गे अशोचिषम्"।

### अनुदात्ते च कुधपरे। ६।१।१२०।

कवर्गधकारपरे अनुदात्तेऽति परे एङ् प्रकृत्या यजुषि।"अयं सोअग्निः"। 'अयं सो अध्वरः"। अनुदात्ते किम्? "अध्वोऽग्रे रुद्रे"। अग्रशब्द आद्युदात्तः। कुधपरे किम्? "सोऽयमग्निमन्तः"।

### अवपथासि च। ६।१२१।

अनुदात्ते अकारादौ अवपथाशशब्दे परे यजुषि एङ् प्रकृत्या। "त्रीरुद्रेभ्यो अवपथाः"। वपेस्थासि लङि तिङ्ङतिङ(७६१२५०) इत्यनुदात्तत्वम्। अनुदात्ते किम्? "यद्रुद्रेभ्योऽवपथाः।" निपातैर्यद्यदीति (७६१२५०) निघातो न।

### आङोऽनुनासिकश्छन्दसि। ६।१।१२६।

आङोऽचि परेऽनुनासिकः स्यात् स च प्रकृत्या। "अभ्र आँ

अपः"। "गभीर आँ उग्रपुत्रे"। ईषाअक्षादीनाञ्छन्दसि प्रकृतिभावो वक्तव्यः *। "ईषा अक्षो हिरण्ययः"। 'ज्याइ-यम्"। "पूषा अविः"।

**स्यश्छन्दसि बहुलम्। ६। १। १३३।**

स्यइत्यस्य सोर्लोपः स्याद्बलि। "एष स्य भानुः"।

**ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे। ३। १। १५१।**

ह्रस्वात्परस्य चन्द्रशब्दस्योत्तरपदस्य सुडागमः स्यान्मन्त्रे। "हरिश्चन्द्रो मरुद्गणः"। सुश्चन्द्रस्य।

**पितरामातरा च छन्दसि। ६। ३। ३३।**

द्वन्द्वे निपातः। "आ मा गन्तां पितरामातरा च"। चाद्विपरीतमपि। "न मातरापितरा नूचि दिष्टौ"। समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु(६१२ पृ०)। समानस्य सः स्यान्मूर्द्धादिभिन्ने उत्तरपदे सगर्भ्यः। छन्दसि स्त्रियां बहुलम् *। विष्वगदेवयोरद्र्यादेशः। (१७८पृ०स्र०) "विश्वाची च घृताची च"। "देवद्रीचीन्नयत देवयन्तः"। "सा कद्रीची"।

**सध मादस्थयोश्छन्दसि। ६। ३। ९६।**

सहस्य सधादेशः स्यात्। "इन्द्र त्वास्मिन् सध मादे"। "सोमः सध स्थत्"।

**पथि च छन्दसि। ६। ३। १०८।**

पथिशब्दे उत्तरपदे कोः कव का च। कवपथः। कापथः। कुपथः।

साढ्यै साढ्वा साढेति निगमे । ६ । ३ । ११३ ।

सहेः क्त्वाप्रत्यये आद्यं द्वयं तृणि तृतीयं निपात्यते । "मरुद्भि रुग्रः पृतनासु साढ्यै" । अचोर्मध्यस्थस्य डस्य लः ढस्य ळ्हश्च प्रातिशाख्ये विहितः । आह हि
"द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकारः । ळ्हकारतामेति स एव चास्य ढकारः सन्नूष्मणा सम्प्रयुक्तः" इति ।

छन्दसि च । ६ । ३ । १२६

अष्टन आत्त्वं स्यादुत्तरपदे । अष्टापदी ।

मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ । ६ । ३ । १३१ ।

दीर्घः स्यान्मन्त्रे । अश्वावती । सोमावती । "इन्द्रियवान्मदिन्तमः" । "विश्वकर्मणा विश्वदेव्यावता" ।

ओषधेश्च विभक्तावप्रथमायाम् । ६ । ३ । १३२ ।

दीर्घः स्यान्मन्त्रे । "यदोषधीभ्यः" । "अदधा ओषधीषु" ।

ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ।६।३।१३३।

दीर्घः स्यात् । "आ तू न इन्द्र" । "नू नर्त्तः" । 'उत वा घा स्यालात्' । "मक्षू गोमन्तमीमहे । "भरता जातवेदसम्" । तङिति थादेशस्य ङित्त्वपक्षे ग्रहणम् । तेनेह न । "शृणोत ग्रावाणः" । "कूमनाः" । 'अत्रा ते भद्रा' 'यत्रा नश्चक्रा ।' "उरुष्याणः" ।

इकः सुञि । ६ । ३ । १३४ ।

ऋचि दीर्घ इत्येव। "अभीषु णः सखीनाम्"। सुञ इति। (७५२७पृ०)षः। नश्च धातुस्थोरुषुभ्य इति(७५२८पृ०)णः।

द्व्यचोऽतस्तिङः। ६। ३। १३५।

मन्त्रे दीर्घः। "विद्माहि"। "चक्रा जरसम्"।

निपातस्य च। ६। ३। १३६।

"एवाहि ते"।

छन्दस्युभयथा। ६। ४। ५।

नामि दीर्घो वा। "धाता तिसृणामिति" बह्वृचाः। तैत्तिरीयास्तु ह्रस्वमेव पठन्ति।

वा षपूर्वस्य निगमे। ६। ४। ९।

षपूर्वस्यान उपधाया वा दीर्घोऽसम्बुद्धौ सर्वनामस्थाने परे। ऋभुक्षणम्। निगमे किम्? तक्षा। ऋभुक्षाणम्। तक्षाणौ।

जनिता मन्त्रे। ६। ४। ५३।

इडादौ तृचि णिलोपो निपात्यते। "यो नः पिता जनिता"।

शमिता यज्ञे। ६। ४। ५४।

शमयितेत्यर्थः।

युप्लुवोर्दीर्घश्छन्दसि। ६। ४। ५८।

ल्यपीत्यनुवर्त्तते। वियूय। विप्लूय। छन्दसीति किम्? आयुत्य आप्लुत्य। आङ्जादीनाम् (७२७पृ०)।

**छन्दस्यपि दृश्यते। ६। ४। ७३।**

अनजादीनामित्यर्थः। आनट्(५३)। आवः। न माङ्-योगे (७२०५०)।

**बहुलञ्छन्दस्यमाङ्योगेऽपि। ६। ४। ७५।**

'जनिष्ठा उग्रः सहसेतुराय'। "मा वः क्षेत्रे परबीजान्यवाप्सुः"।

**द्वयोरे। ६। ४। ७६।**

"प्रथमं गर्भं दध्र आपः"। रेभावस्याभीयत्वेनासिद्धत्वादातोलोपः। अत रेशब्दस्येटि कृते पुनरपि रेभावः। तदर्थं सूत्रे द्विवचनान्तन्निर्द्दिष्टम् द्वयोरिति।

**छन्दस्युभयथा। ६। ४। ८६।**

भूसुधियोर्य्यण् स्यादियङुवङौ च। "वनेषु चित्रं विभ्वम्" विभुवं वा। "सुध्यो हव्यमग्ने:" सुधियो वा। तन्वादीनां छन्दसि बहुलम् *। "तन्वं पुषेम" तनुवं वा। त्र्यम्बकम्-त्रियम्बकम् वा

**तनिपत्योश्छन्दसि। ६। ४। ९९।**

एतयोरुपधालोपः क्ङिति प्रत्यये। "वित्निरे कवयः"। "शकुनाइव पप्तिम"। भाषायां वितेनिरे। पेतिम।

**घसिभसोर्हलि च। ६। ४। १००।**

"सग्धिश्च मे"। "बब्धां(५४) ते हरीधानाः"। झलभ्यो हेर्धिः (७१४६६०)

---

(५३) आनडिति आवरिति नशिदृजोर्लुङि मन्त्रे घसेत्यादिना(७४८३५०) श्लेर्लुक् गुणश्च

(५४) भसेर्लोटि ताम् श्लुः, परं नित्यत्वाद्युपधालोपं बाधित्वा बाहुलकात् प्राक् द्वित्वम् तत उपधालोपसलोपजश्त्वानि।

### श्रुशृणुपॄकृवृभ्यश्छन्दसि। ६। ४। १०२।

"श्रुधी हवम्"। "शृणुधी गिरः"। "रायस्पूर्धि"। "उरणस्कृधि"। "अपावृधि"।

### वा छन्दसि। ३। ४। ८८।

हिरपिद्दा।

### अङितश्च। ६। ४। १०३।

हेर्धिः स्यात्। रारन्धि। रमेर्व्यत्ययेन परस्मैपदम् शपः श्लुरभ्यासदीर्घश्च। "अस्मे प्रयन्धि"। "युयोधि जातवेदः"। यमेः शपो लुक्। यौतेः शपः श्लुः। अङितः किम्? प्रणीहि।

### मन्त्रेष्वाङ्यादेरात्मनः। ६। ४। १४१।

आत्मन्शब्दस्यादेर्लोपः स्याद्दाङि। "त्मना देवेषु"।

### विभाषर्जोश्छन्दसि। ६। ४। १६२।

ऋजुशब्दस्य ऋतः स्थाने रः स्याद्वा इष्ठेमेयस्सु। "त्वं रजिष्ठमनुनेषि" ऋजिष्ठं वा।

### ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि। ६। ४। १७५।

ऋतौ भवं ऋत्व्यम्। वास्तुनि भवं वास्त्व्यम्-वास्त्वञ्च। मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते। "माध्वीर्नः स-

न्वोषधी"। हिरण्यशब्दाद्विहितस्य मयटो मशब्दस्य लोपो निपात्यते। "हिरण्ययेन सविता रथेना"।

इति षष्ठोऽध्यायः।

---

शीङो रुट् (७।१।६)।

बहुलं छन्दसि। ७। १। ८।

रुडागमः स्यात्। लोपस्त आत्मनेपदेष्विति (७।१।४१) पक्षे तलोपः। 'धेनवो दुह्रे"। लोपाभावे "घृतं दुहृते"। अदृश्रम-स्र (५५)। अतो भिस ऐस् (७।१।९)।

बहुलं छन्दसि। ७। १। १०।

"अग्निर्देवेभिः"।

नेतराच्छन्दसि। ७। १। २६।

स्वमोरद्ड् न। "वार्त्रघ्नमितरम्"। छन्दसि किम्? इतरत्काष्ठम्। समासेऽनञ्पूर्वे क्त्वो ल्यप् (७।१।३७)

क्त्वापि छन्दसि। ७। १। ३८।

यजमानं परिधापयित्वा।

---

(५५) दृशेर्लुङि व्यत्ययेन प्रथमपुरुषबहुवचनस्थाने उत्तमपुरुषैकवचनं मिप् रुडागमे अदृश्रमिति।

सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ।७।१।३९।

"ऋजवः सन्तु पन्थाः"। पन्थान इति प्राप्ते सुः। "परमे व्योमन्"। व्योमनि इति प्राप्ते ङेर्लुक्। धीती। मती। सुष्टुती। धीत्या मत्या सुष्टुत्येति प्राप्ते पूर्वसवर्णदीर्घः। "या सुरथा रथीतमा दिविस्पृशा अश्विना"। यौ सुरथौ दिविस्पृशावित्यादिप्राप्ते आ। "नताद्ब्राह्मणम्"। नतमिति प्राप्ते आत्। "न युष्मे वाजबन्धवः"। "अस्मे इन्द्रा बृहस्पती"। युष्मासु अस्मभ्यमिति प्राप्ते शे। उरुया। धृष्णुया। उरुणा धृष्णुनेति प्राप्ते या। "नाभा पृथिव्याः"। नाभाविति प्राप्ते डा। "ता अनुष्ठ्योच्यावयतात्" (५६)। अनुष्ठानमनुष्ठा व्यवस्थावदङ् आङो ड्या। साधुया। साध्विति प्राप्ते याच्। "वसन्ता यजेत" वसन्ते इति प्राप्ते आल्। इयाडियाजीकाराणामुपसंख्यानम् *। उर्विया। दार्विया। उरुणा दारुणेति प्राप्ते इया। सुक्षेत्रिया। सुक्षेत्रिणेति प्राप्ते डियाच्। "दृतिं न शुष्कं सरसी शयानम्" ङेरीकार इत्याहुः। तत्राद्युदात्ते पदे प्राप्ते व्यत्ययेनान्तोदात्तता। वस्तुतस्तु ङीबन्तात् ङेर्लुक्। ईकारादेशस्य तूदाहरणान्तरं मृग्यम्। आङ्याजयारामुपसंख्यानम् *।"प्र बाहवा सिसृतम्"। बाहुनेति प्राप्ते आङादेशः। घेर्ङितीति(१८६५०) गुणः। स्वप्नया।

(५६) अनुष्ठया उ भोः च्यावयतात् पृथक्करोतित्यर्थः अनुपूर्वात्तिष्ठतेरङ् आङः (टाइत्यस्य) स्थाने ड्यादेशे टिलोपे अनुष्ठ्या इति सिद्धम्।

स्वप्नेनेति प्राप्ते अयाच् "स नः सिन्धुमिव नावया"। नावेति प्राप्ते अयाट्। रितस्वरः (७५६४पृ०)।

**अमो मश्।७।१।४०।**

मिबादेशस्यामो मश् स्यात्। अकार उच्चारणार्थः। शित्वात् सर्व्वादेशः। अस्तिसिचइति(७२०पृ०)ईट्। "वधीं वृत्रम्"। अवधिष्मिति प्राप्ते।

**लोपस्त आत्मनेपदेषु।७।१।४१।**

छन्दसि। "देवा अदुह्र"। अदुहतेति प्राप्ते "दक्षिणतःशये"। शेते इति प्राप्ते। आत्मनेइति किम्? "उत्सन्दुहन्ति"।

**ध्वमो ध्वात्।७।१।४२।**

"अन्तरेवोष्माणं वारयध्वात्"। वारयध्वमिति प्राप्ते।

**यजध्वैनमिति च।७।१।४३।**

एनमित्यस्मिन् परे ध्वमोऽन्तलोपो निपात्यते। "यजध्वैनं प्रियमेधाः"। वकारस्य यकारो निपात्यत इति वृत्तिकारोक्तिः प्रमादिकी।

**तस्य तात्।७।१।४४।**

लोटो मध्यमपुरुषबहुवचनस्य स्थाने तात्स्यात्। "गात्रमस्य नूनं कृणुतात्"। कृणुतेति प्राप्ते। "सूर्य्यञ्चक्षुर्गमयतात्"। गमयतेति प्राप्ते।

## तप्तनप्तनथनाश्च। ७। १। ४५।

तस्येत्येव। "शृणोत ग्रावाणः"। शृणुतेति प्राप्ते तप्। सुनो तन "पचतन ब्रह्मवाहसे"। "दधातन द्रविणञ्चित्रमस्मै"। तनप्। "मरुतस्तज्जुजुष्टनः"। जुषध्वमिति प्राप्ते व्यत्ययेन परस्मैपदम् सुश्च। "विश्वे देवासो मरुतो यतिष्ठन"। यत्-संख्याकाः स्थेत्यर्थः। यच्छब्दाच्छान्दसो डतिः। अस्तेस्तस्य थनादेशः।

## इदन्तो मसि। ७। १। ४६।

मसीत्यविभक्तिको निर्देशः। इकारउच्चारणार्थः। मसित्य-यमिकाररूपचरमावयवविशिष्टः स्यात्। मसइगागमः स्या-दिति यावत्। "नमोभरन्त इमसि"। "त्वमस्माकन्तव स्मसि"। इमाइति स्म इति च प्राप्ते।

## क्त्वो यक्। ७। १। ४७।

"दिवं सुपर्णो गत्वाय"।

## इष्ट्वीनमिति च। ७। १। ४८।

क्त्वाप्रत्ययस्य ईनम् अन्तादेशो निपात्यते। "इष्ट्वीनं देवान्"। इष्ट्वा इति प्राप्ते।

## स्नात्व्यादयश्च। ७। १। ४९।

आदिशब्दः प्रकारार्थः। आकारस्य ईकारो निपात्यते।

"स्विन्नः स्नात्वी मलादिव"। "पीत्वी सोमस्य वावृधे"। स्नात्वा पीत्वेति प्राप्ते।

आज्जसेरसुक्। ७। १। ५०।

अवर्णान्तादङ्गात्परस्य जसोऽसुक् स्यात्। देवासः। ब्राह्मणासः।

श्रीग्रामण्योश्छन्दसि। ७। १। ५६।

आमो नुट्। "श्रीणामुदारो धरुणो रयीणाम्"। "सूतग्रामणीनाम्"।

गोः पादान्ते। ७। १। ५७।

"विद्मा हि त्वा गोपतिं शूरगोनाम्"। पदान्ते किम्? "गवां शता पृक्षयामेषु"। पादान्तेऽपि क्वचिन्न छन्दसि सर्व्वेषां वैकल्पिकत्वात्। "विराजं गोपतिं गवाम्"।

छन्दस्यपि दृश्यते। ७। १। ७६।

अस्थ्यादीनामनङ्। "इन्द्रो दधीचोऽस्थभिः"।

ई च द्विवचने। ७। १। ७७।

अस्थ्यादीनामित्येव। "अक्षीभ्यान्ते नासिकाभ्याम्"।

दृक्स्ववस्स्वतवसाञ्छन्दसि। ७। १। ८३।

एषां नुम् स्यात् सौ। "कीदृङ्ङिन्द्रः" स्ववान्। स्वतावान्। उदोष्ठ्यपूर्व्वस्य (७।१।१०२)।

बहुलञ्छन्दसि (५७)। ७। १। १०३।

ततुरिः।

हु ह्वरेश्छन्दसि। ७। २। ३१।

ह्वरेर्निष्ठायां हु आदेशः स्यात्। "अहुतमसि हविर्धानम्"।

अपरिह्वृताश्च। ७। २। ३२।

पूर्वेण प्राप्तस्यादेशस्याभावो निपात्यते। "अपरिह्वृताः सनुयाम वाजम्"।

सोमे ह्वरितः। ७। २। ३३।

इडागुणौ निपात्येते। "मा नः सोमो ह्वरितः"।

ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च। ७। २। ३४।

अष्टादश निपात्यन्ते। तत्र ग्रसु स्कम्भु स्तम्भु एषामुदित्त्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इण् निपात्यते। "युवं शचीभिर्ग्रसितामसुञ्चतम्"। "विष्कभिते अजरे"। "येन स्व स्तभितम्"। "सत्येनोत्तभिता भूमिः"। स्तभितेत्येव सिद्धे उत्पूर्वस्य पुनर्निपातनमन्योपसर्गपूर्वस्य मा भूदिति। चते याचने कस गतौ आभ्यां क्तस्येडभावः। "चत्ता इतश्चत्तामुतः"।

(५७) कृतोऽनोऽप्यपूर्वस्यापि वेदे बहुलमुक्तम्।

"त्रिधा हस्तावमश्विना विकस्तम्"। "उत्तानाया हृदयं यद्विकस्तम्"। निपातनबहुत्वापेक्षं सूत्रे बहुवचनं विकस्ता इति तेनैकवचनान्तोऽपि प्रयोगः साधुरेव। शसु शंसु शासु एभ्यस्तृच इडभावः। "एकस्त्वष्टुरश्वस्याविशस्ता"। "ग्राव ग्राभ उत शंस्ता"।"प्रशास्ता पोता"। तरतेर्वृङ्वृञोश्च तृचि उट् ऊट् एतावागमौ निपात्येते। "वरुतारं रथानाम्" तरुतारम्-वरुतारम्-वरूतारम्। "वरूत्रीभिः सुशरणो नो अस्तु"। अत्र ङीबन्तनिपातनं प्रपञ्चार्थम्। वरूतृशब्दोहि निपातितः ततो ङीपोगतार्थत्वात्। उज्ज्वलादिभ्यश्चतुर्भ्यः शप इकारादेशो निपात्यते। ज्वल दीप्तौ क्षर संचलने टुवम उद्गिरणे अम गत्यादिषु। इह क्षरितीत्यस्यानन्तरं क्षमितीत्यपि केचित् पठन्ति। तत्र क्षमूष सहने इति धातुर्बोध्यः। भाषायान्तु ग्रस्तस्कभ्यस्तब्धोत्तब्धचतिततविकसिताः। विशसिता शंसिता शासिता। तरीता--तरिता। वरीता--वरिता। उज्ज्वलति। क्षरति पाठान्तरे। क्षमति। वमति अमति।

## बभूथाऽऽततन्थ जगृम्भ ववर्थेति निगमे।७।२।६४।

"विद्मातमुत्सं यत आबभूथ"। "येनान्तरिक्षमुर्व्वाततन्थ"। "जगृभ्मा ते दक्षिणमिन्द्रहस्तम्"।"त्वं ज्योतिषा वितमो ववर्थ"। भाषायां तु। बभूविथ। आतेनिथ। जगृहिम। ववरिथेति।

## सनिंससनिवांसम्। ७। २। ६९।

सनिमित्येतत् पूर्व्वात् सनतेः सनोतेर्वा क्वसोरिट्। एत्त्वाभ्यासलोपाभावश्च निपात्यते। पावकादीनाञ्छन्दसि प्र-

त्ययस्थात् कादित्त्वन्नेति वाच्यम् *। "हिरण्यवर्णाः शुचयः पावकाः" (५८)।

## घोर्लोपो लेटि वा। ७। ३। ७०।

"दधद्रत्नानि दाशुषे"। "सोमो ददद्गन्धर्वाय"। "यदग्निरग्नये ददात्"।

## मीनातेर्निगमे। ७। ३। ८१।

शिति ह्रस्वः। "प्र-मिणन्ति व्रतानि"। लोके प्र-मीणाति। अस्तिसिचोऽपृक्ते (७२०पृ०)।

## बहुलञ्छन्दसि। ७। ३। ९७।

"सर्वमा(५९)इदम्"। ह्रस्वस्य गुणः(१०८पृ०)। जसि च(१०८पृ०)। जसादिषु छन्दसि वावचनम्प्राङ्णौ चङ्युपधायाः*। "अधा शतक्रत्वो यूयम्"। शतक्रतवः। "पश्वे नृभ्यो यथागवे"। पशवे। नाभ्यस्तस्याचीति (७१२पृ०) निषेधे बहुलञ्छन्दसीति वक्तव्यम्*। जुजोषत्।

## नित्यं छन्दसि। ७। ४। ८।

छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋन्नित्यम्॥ अवीवृधत्।

## न छन्दस्यपुत्रस्य। ७। ४। ३५।

(५८) लोके तु प्रत्ययस्थकात् पूर्वस्याकारस्येत्त्वं (२११पृ०सू०) तेन पाविका-इत्येव।

(५९) इदं सर्वम् आः आमोदित्यर्थः असेर्लङि ईडभावे रूपसिद्धिः।

पुत्रभिन्नस्यादन्तस्य क्यचि ईत्वदीर्घौ न। मित्रयुः। क्याच्छन्दसीति(७४८८सू०)उः। अपुत्रस्य किम्? "पुत्रीयन्तः सुदानवः" अपुत्रादीनामिति वाच्यम्॥। "जनीयन्तोऽन्वग्रवः"। जनमिच्छन्त इत्यर्थः।

## दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति। ७। ४। ३६।

एते क्यचि निपात्यन्ते। भाषायान्तु उप्रत्ययाभावात् दुष्टीयति। द्रविणीयति। वृषीयति रिष्टीयति।

## अश्वाघस्यात्। ७। ४। ३७।

अश्व अघ एतयोः क्यचि आत्स्याच्छन्दसि। "अश्वायन्तो मघवन्"। "मा त्वा वृका अघायवः"। न च्छन्दसीति(७५२३सू०) निषेधो न ईत्वमात्रस्य, किन्तु दीर्घस्यापीति। तत्रेदमेव सूत्रं ज्ञापकम्।

## देवसुम्नयोर्यजुषि काठके। ७। ४। ३८।

अनयोः क्यचि आत्स्याद्यजुषि कठशाखायाम्। "देवायन्तो यजमानाः"। "सुम्नायान्तो हवामहे"। इह यजुःशब्दो न मन्त्रमात्रपरः किन्तु वेदोपलक्षकः तेन ऋगात्मकेऽपि मन्त्रे यजुर्वेदस्थे भवति। किञ्च। ऋग्वेदेऽपि भवति स चेन्मन्त्रो यजुषि कठशाखायां दृष्टः। यजुषीति किम्? "देवाञ्जिगाति सुम्नयुः"। बह्वृचानामप्यस्ति कठशाखा ततोभवति प्रत्युदाहरणमिति हरदत्तः।

## कव्यध्वरपृतनस्यर्चि लोपः । ७ । ४ । ३९ ।

"सपूर्व्वया निविदा कव्यतायोः"।"अध्वर्युं वा मधुपाणिम्"। दमयन्तं पृतन्युम् । दधातेर्हिः (७२६०पृ०) जहातेश्च क्त्वि (७४६४पृ०) ।

## विभाषा छन्दसि । ७ । ४ । ४४ ।

हित्वा शरीरम् हीत्वा वा ।

## सुधितवसुधितनेमधितधिष्वधिषीय च । ७ । ४ । ४५ ।

सु-वसु-नेम-एतत्पूर्वस्य दधातेः क्ते प्रत्यये इत्त्वन्निपात्यते। "गर्भं माता सुधितं वक्षणासु"। "वसुधितमग्नौ"। "नेमधिता न पौंस्या"। क्तिन्यपि दृश्यते"।'उत श्वेतं वसुधितिन्निरेके'।"धिष्व वज्रं दक्षिण इन्द्र हस्ते"। धत्स्वेति प्राप्ते। "सुरेता रेतो धिषीय"। आशीर्लिङ् इट् इटोऽत् धासीयेति प्राप्ते। अपो भि (१८२पृ०)। मासश्छन्दसीति वक्तव्यम्"। "माद्भिः शरद्भिः"। स्ववःस्वतवसोरुषसश्चेष्यते। स्ववद्भिः। अवतेरसुन्। शोभनमवो येषान्ते स्ववसः। तु इति सौत्रोधातुस्तस्मादसुन्। स्वन्तवो येषान्ते। स्वतवद्भिः। "समुषद्भिरजायथाः"। मिथुनेऽसिः (७४२०पृ०)। वसेः किच्चेत्यसिप्रत्ययइति हरदत्तः। पञ्चपादीरीत्या तु उषः किदिति (७४२०पृ०) प्रागेवाख्यातम्। न कवतेर्यङि (७२८पृ०)।

## कृपेश्छन्दसि । ७ । ४ । ६४ ।

यङि अभ्यासस्य चुत्वन्न। करीकृप्यते।

दाधर्त्तिदर्द्धर्त्तिदर्द्धषिबोभूतुतेतिक्तेऽलर्ष्याऽऽपनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च। ७। ४। ६५।

एतेऽष्टादश निपात्यन्ते। आद्यास्त्रयः धृञोधारयतेर्व्वा। भवतेर्य्यङ्लुगन्तस्य गुणाभावः। तेन भाषायां गुणोलभ्यते। तिजेर्य्यङ्लुगन्तात्तङ्। इयर्त्तेर्लटि हलादिशेषापवादेन रेफस्य लत्वम्, इत्त्वाभावश्च निपात्यते। "अलर्षि युध्मं खजकृत् पुरन्दर"।। सिपा निर्द्देशो न तन्त्रम्। "अलर्त्ति दक्ष उत"। फणतेराङ्पूर्व्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीगागमो निपात्यते। "अन्वापनीफणत्"। स्यन्देः संपूर्व्वस्य यङ्लुकि शतरि अभ्यासस्य निक्। धातुसकारस्य षत्वम्। करोतेर्य्यङ्लुगन्तस्याभ्यासस्य चुत्वाभावः। करिक्रत्। क्रन्देर्लुङि च्लेरङ् द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च। "कनिक्रदज्जनुषम्"। अक्रन्दीदित्यर्थः। बिभर्त्तेः शतरि अभ्यासस्य जश्त्वाभावः रिगागमश्च। "यो भरिभ्रदोषधीषु"। ध्वरतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य विगागमः धातोर्ऋकारलोपश्च। "दविध्वतो रश्मयः सूर्य्यस्य"। द्युतेरभ्यासस्य सम्प्रसारणाभावोऽत्त्वं विगागमश्च। "दविद्युतद्दीद्यत् शोशुचानः"। तरतेःशतरि श्लौ अभ्यासस्य रिगागमः। "सद्योजातरित्रतः"। सृपेः शतरि श्लौ द्वितीयैकवचने रीगागमोऽभ्यासस्य। वृजेः शतरि श्लावभ्यासस्य रीक्। मृजेर्लिटि णल् अभ्यासस्य रुक् धातोश्च युक्। गमेराङ्पूर्वस्य लटि

स्तावभ्यासस्य चुत्वाभावो नीगागमश्च। "वञ्चन्ती वेदागनीगन्ति कर्म्म"।

सस्वेति निगमे। ७। ४। ७४।

सूतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चात्वन्निपात्यते। "ऋषिः सस्व स्थविरम्"। सुषुवेइति भाषायाम्।

बहुलं छन्दसि। ७। ४। ७८।

अभ्यासस्य इकारः स्याच्छन्दसि। "पूर्णां विवष्टि"। वशेरेतद्रूपम्

इति सप्तमोऽध्यायः।

---

प्रसमुपोदः पादपूरणे। ८। १। ६।

एषां द्वे स्तः पादपूरणे। "प्रप्रायमग्नि"। "संसमिद्युवसे"। "उपोप मे परामृश"। "किन्नोदुदु हर्षसे"।

छन्दसीरः। ८। २। १५।

इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्म्मस्य वः स्यात्। "हरिवते हर्य्यश्वाय"। गीर्व्वान्।

अनो नुट्। ८। २। १६।

अन्नन्तान्मतोर्नुट् स्यात् "अक्षण्वन्तः कर्णवन्तः"। "अस्थन्वन्त यदनस्था"।

**नाद्घस्य। ८। २। १७।**

नान्तात् परस्य घस्य नुट्। "सुपथिन्तरः"। भूरिदावन्स्तुड्वाच्यः *। "भूरिदावत्तरोजनः"। ईद्रथिनः *। "रथीतरः। "रथीतमं रथीनाम"।

**नसत्तनिषत्तानुत्तप्रतूर्त्तसूर्त्तगूर्त्तानि छन्दसि। ८। २। ६१।**

सदेर्नञ्पूर्व्वान्निपूर्व्वाच्च निष्ठाया नत्वाभावो निपात्यते। "नसत्तमञ्जसा"। "निषत्तमस्य चरतः"। असन्नन्निषण्णमिति प्राप्ते। उन्देर्नञ्पूर्व्वस्यानुत्तम्। प्रतूर्त्तमिति त्वरतेः तुर्वीत्यस्य वा। सूर्त्तमिति सृ इत्यस्य। गूर्त्तमिति गुरी इत्यस्य।

**अम्नरूधरवरित्युभयथा छन्दसि। ८।२। ७०।**

रुर्वा रेफो वा। अम्न(६०) एव-अम्नरेव। ऊध एव-ऊधरेव। अवएव-अवरेव।

**भुवश्च महाव्याहृतेः। ८। २। ७१।**

भुव इति-भुवरिति।

**ओमभ्यादाने। ८। २। ८७।**

ओँ शब्दस्य प्लुतः स्यात् आरम्भे। "ओम् ३ अग्निमीले पुरोहितम्"। अभ्यादाने किम्? "ओमित्येकाक्षरम्"।

---

(६०) अम्नस् शब्द ईषदर्थे ससजुषोरिति (७७सू०) रुत्वप्राप्ते रुत्वार्थं निपातनम्।

**ये यज्ञकर्म्मणि। ८। २। ८८।**

ये ३ यजामहे । यज्ञेति किम्? "ये जजामहे ३"।

**प्रणवष्टेः। ८। २। ८९।**

यज्ञकर्म्मणि टेरोमित्यादेशः स्यात्। "अपां रेतांसि जिन्वतोम्" ३। टेः किम्? हलन्ते अन्त्यस्य मा भूत्।

**याज्यान्तः। ८। २। ९०।**

ये याज्यान्ता (६१) मन्त्रास्तेषामन्त्यस्य टेः प्लुतो यज्ञकर्म्मणि। 'जिह्वामग्ने! चकृषे हव्यवाह' ३। अन्तः किम्?। याज्यानामृचां वाक्यसमुदायरूपाणां प्रतिवाक्यं टेः स्यात्। सर्व्वान्तस्य चेष्यते।

**ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः।८।२।९१।**

एषामादेः प्लुतो यज्ञकर्म्मणि। "अग्नयेऽनुब्रू ३ हि"। "अग्नये गोमयानि प्रे ३ ष्य"। "अस्तु श्रौ ३ षट्"। "सोमस्याग्ने वीही वौ ३ षट्"। "अग्निमा ३ वह"।

**अग्नीत्प्रेषणे परस्य च। ८। २। ९२।**

अग्नीधः प्रेषणे आदेः प्लुतस्तस्मात् परस्य च। "ओ ३ श्रा ३ वह"। नेह। 'अग्नीदग्नीन् विहर"। "वर्हिस्तृणीहि"।

**विभाषा पृष्टप्रतिवचने हेः। ८। २। ९३।**

प्लुतः। अकार्षीः कटम् अकार्षं हि ३ अकार्षं हि। पृष्टेति किम्? कटं करिष्यति हि ३। हेः किम्? करोमि ननु।

---

(६१) याज्यानुवाककाण्डमिति समाख्याते प्रकरणे ये मन्त्रास्तेषाम् इत्यर्थः।

## निगृह्यानुयोगे च(६२)। ८। २। ९४।

अत्र यद्वाक्यन्तस्य टेः प्लुतो वा। अद्यामावास्येत्यात्थ ३। अमावास्येत्येवंवादिनं युक्त्या स्वमतात्प्रच्याव्य एवमनुयुज्यते।

## आम्रेडितम्भर्त्सने। ८। २। ९५।

दस्योदस्यो! ३ घातयिष्यामि त्वाम्। आम्रेडितग्रहणं द्विरुक्तोपलक्षणम् (६३)। चौर३चौर!।

## अङ्गयुक्तन्तिङाकाङ्क्षम्। ८। २। ९६।

अङ्गेत्यनेन युक्तन्तिङन्तं प्लवते। अङ्ग कूज ३ इदानीं ज्ञास्यसि जाल्म!। तिङ् किम्? अङ्ग देवदत्त? मिथ्या वदसि। आकाङ्क्षं किम्? अङ्ग पच। नैतदपरमाकाङ्क्षति। भर्त्सन इत्येव। अङ्गाधीष्व भक्तन्तव दास्यामि।

## विचार्य्यमाणानाम्। ८। २। ९७।

वाक्यानां टेः प्लुतः। होतव्यं दीक्षितस्य गृह ३ इ (६४)। न होतव्य ३ मिति। होतव्यं न होतव्यमिति विचार्य्यते। प्रमाणैर्वस्तुतत्त्वपरीक्षणं विचारः।

(६२) स्वमतात् प्रच्यावनं निग्रहस्तस्यैव निर्युक्तिकत्वप्रतिपादनमनुयोगः। निगृह्येति ल्यबन्तम् अद्यामावास्येति केनचित् प्रतिज्ञाते युक्तिभिस्तं निगृह्य साभ्यसूयमनुयुङ्क्ते अद्यामावास्येत्यात्थेत्युदाहरणम्।

(६३) द्विरुक्तसमुदायमध्येऽवयवभागस्यापि भवतीत्यर्थः।

(६४) सप्तम्येकवचनान्तस्य गृहे इत्यस्य प्लुतत्वे प्रकृतिवद्भावेन, इत्यस्य पृथक्त्वम्।

### पूर्वन्तु भाषायाम्। ८। २। ९८।

विचार्य्यमाणानां पूर्वमेव प्लवते। अहिर्नु ३ रज्जुर्नु। प्रयोगापेक्षत्वं पूर्वत्वम्। इह भाषाग्रहणात् पूर्व्वयोगश्छन्दसीति-ज्ञायते।

### प्रतिश्रवणे च। ८। २। ९९।

वाक्यस्य टेः प्लुतोऽभ्युपगमे प्रतिज्ञाने श्रवणाभिमुख्ये च। गां मे देहि भोः ३ हन्त ते ददामि ३। नित्यः शब्दो भवितुमर्हति ३। दत्त किमात्थ ३।

### अनुदात्तं प्रश्नान्ताभिपूजितयोः। ८। २। १००।

अनुदात्तः प्लुतः स्यात्। दूराद्धूतादिषु सिद्धस्य प्लुतस्यानुदात्तत्वमात्रमनेन विधीयते। अग्निभूत ३ इ!। पट ३ उ!। अग्निभूते! पटो! एतयोः प्रश्नान्ते टेरनुदात्तः प्लुतः। शोभनः खल्वसि माणवक ३!।

### चिदिति चोपमार्थे प्रयुज्यमाने। ८। २। १०१।

वाक्यस्य टेरनुदात्तः प्लुतः। अग्निचिद्भाया ३ त्। अग्निचिदिव भायात्। उपमार्थे किम्? कथञ्चिदाहुः। प्रयुज्यमाने किम्? अग्निर्माणवको भायात् (९५)।

### उपरिस्विदासीदिति च। ८। २। १०२।

टेः प्लुतोऽनुदात्तः स्यात्। उपरि स्विदासी ३ त्। अधः-

---

(९५) अग्निरिव माणवक इत्यर्थः। इहोपमार्थस्य गम्यत्वेऽपि चिच्छब्दाप्रयोगान्न प्लुतत्वम्।

खिदासी ३ दित्यत्र तु विचार्य्यमाणानाम् (५।१।०८।) इत्युदात्तः प्लुतः ।

स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु ।८।२।१०३।

स्वरितः प्लुतः स्यादाम्रेडिते परेऽसूयादौ गम्ये। असूयायाम्- अभिरूपक ३ अभिरूपक ? रिक्तन्ते आभिरूप्यम् । सम्मतौ- अभिरूपक ३ अभिरूपक ! शोभनोऽसि । कोपे-अविनीतक ३ अविनीतक ! इदानीं ज्ञास्यसि जाल्म !। कुत्सने- शाक्तीक ३ शाक्तीक ! रिक्ता ते शक्तिः ।

क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ।८।२।१०४।

आकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यात् आचार (६६) भेदे आशिषि प्रैषेषु गम्यमानेषु । स्वयं ह रथेन याति ३ उपाध्यायं पदातिं गमयति । प्रार्थनायाम् । पुत्रांश्च लप्सीष्ट ३ धनञ्च तात !। व्यापारणे कटं कुरु ३ ग्रामं गच्छ । आकाङ्क्षं किम् ? दीर्घायुरसि अग्नीदग्नीन्विहर ।

अनन्त्यस्यापि प्रश्नाख्यानयोः ।८।२।१०५।

अनन्त्यस्यान्त्यस्यापि पदस्य टेः स्वरितः प्लुत एतयोः । प्रश्ने- अगमः ३ पूर्व्वा ३ न् ग्रामा ३ न् । सर्व्वपदानामयम् । आख्याने अगम३ः पूर्व्वा ३ न् ग्रामा ३ न् ।

प्लुतावैच इदुतौ ।८।२।१०६।

(६६) क्रियापदं व्याचष्टे आचारभेदे इति आचारलङ्घने इत्यर्थः ।

दूराद्धूतादिषु प्लुतो विहितस्तत्रैव ऐचः प्लुतप्रसङ्गे तदवयवा-विदुतौ भवेते। ऐ ४ तिकायन!। औ ४ पगव!। चतु-र्मात्रावत ऐचौ सम्पद्येते।

## एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ।८।२।१०७।

अप्रगृह्यस्य एचोऽदूराद्धूते प्लुतविषये पूर्वस्यार्द्धस्याकारः प्लुतः स्यादुत्तरस्य त्वर्द्धस्य इदुतौ स्तः। प्रश्नान्ताभिपूजितविचार्य्यमाणप्रत्यभिवादयाज्यान्तेष्वेव *। प्रश्नान्ते-अगमः ३ पूर्व्वां ३ न् ग्रामा ३ न् अग्निभूत३इ!। अभिपूजिते-भद्रं करोषि पट३उ!। विचार्य्यमाणे--होतव्यन्दीक्षितस्य गृह३इ। प्रत्यभिवादे आयुष्मानेधि अग्निभूत३इ!। याज्यान्ते-स्तोमैर्विधेमाग्नय ३ इ। परिगणनं किम्? विष्णुभूते! ३ घातयिष्यामि त्वाम्। अदूराद्धूत इति न वक्तव्यम्। पदान्तग्रहणन्तु कर्त्तव्यम्। इह मा भूत्। भद्रं करोषि गौ ३ रिति अप्रगृह्यस्य किम्? शोभने माले ३!। आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः *। अग्न ३ इ! पत्नीव।

## तयोर्य्वावचि संहितायाम्।८।२।१०८।

इदुतोर्यकारवकारौ स्तोऽचि संहितायाम्। अग्न ३! याशा। पट! ३ वाशा। अग्न!३ यिन्द्रम्। पट! ३ वुदकम्। अचि किम्? अग्न ३ इ!। संहितायां किम्? अग्न ३ इ! इन्द्रः। संहितायामित्याध्यायसमाप्तेरधिकारः। इदुतोरसिद्धत्वाद-

यमारम्भः। सवर्णदीर्घस्य शाकलस्य वा निवृत्त्यर्थम् यव-योरसिद्धत्वात्। उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (३५४१सू०) इत्यस्य बाधनार्थो वा।

## मतुवसो रु संबुद्धौ छन्दसि। ८। ३। १।

रु इत्यविभक्तिको निर्देशः। मत्वन्तस्य वस्वन्तस्य च रुः स्यात् अलोऽन्त्यस्येति (२९सू०) परिभाषया नकारस्य। "इन्द्र मरुत्व! इह पाहि सोमम्"। "हरिवो (६७) मे दिनं त्वा"। छन्दसीरइति (३५२७सू०) वत्वम्।

## दाश्वान्साह्वान्मीढ्वांश्च। ६। १। १२।

एते क्वस्वन्ता निपात्यन्ते। "मीढ्वस्तोकाय तनयाय"। वनउप संख्यानम्॰। क्वनिब्वनिपोः सामान्यग्रहणम्। अनुबन्ध परिभाषा तु नोपतिष्ठते अनुबन्धस्येहानिर्देशात्। "यस्त्वा यतं वसुना प्रातरित्वः"। इणः क्वनिप्।

## उभयथर्क्षु। ८। ३। ८।

अम्परे छवि नकारस्य रुर्वा। पस्पूँस्तांश्चक्रे-पस्पून्ताश्चक्रे।

## दीर्घादटि समानपदे। ८। ३। ९।

दीर्घान्नकारस्य रुर्वा स्यादटि तौ चेन्नाटौ एकपदस्थौ स्याताम्। "देवा अच्छा सुमती"। "महाइन्द्रो य ओजसा"। उभयथेत्यनुवृत्तेर्नेह। "आदित्यान् याचिषामहे"।

(६७) हरयो विद्यन्ते यस्येति विग्रहे छन्दसीरइतीवर्णान्तस्य मतुपो वत्वे संबुद्धेरेकवचने हरिवन्निति स्थितेऽनेन रुत्वम्।

आतोऽटि नित्यम्। ८। ३। ३।

अटि परतः रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः। महाँ इन्द्रः। तैत्तरीयास्तु अनुस्वारमधीयते। तत्र छान्दसो व्यत्यय इति प्राञ्चः। एवञ्च सूत्रस्य फलं चिन्त्यम्।

स्वतवान् पायौ। ८। ३। ११।

रुर्वा। "भुवस्तस्य स्वतवाः पायुरग्ने"।

छन्दसि वाऽप्राम्रेडितयोः। ८। ३। ४९।

विसर्गस्य सो वा स्यात् कुप्वोः प्रशब्दमाम्रेडितञ्च वर्ज्जयित्वा। "अग्ने त्रातऋतस्कविः"। "गिरिर्न्न विश्वतस्पृथुः"। नेह (६८) "वसुनः पूर्व्यःपतिः"। अप्रेत्यादि किम्? "अग्निः प्रविद्वान् पुरुषःपुरुषः"।

कःकरत्करतिकृधिकृतेष्वनदितेः। ८। ३। ५०।

विसर्गस्य सः स्यात्। "प्रदिवो अयस्कः"। "यथा नोवस्यसस्करत्"। "सुपेशसस्करति"। "उरु णस्कृधि"। "सोमन्न चारुम्मघवत्सु नस्कृतम्"। अनदितेरिति किम्? "यथानो अदितिः करत्।

पञ्चम्याः पराध्यर्थे। ८। ३। ५१।

पञ्चमीविसर्गस्य सः स्यादुपरिभावार्थे परिशब्दे परतः। "दिवस्परि प्रथमं जज्ञे"। अध्यर्थे किम्? "दिवस्पृथिव्याः पर्य्योजः"।

(६८) वाशब्दस्य व्यवस्थावाचितया क्वचिन्नेत्याह नेहेति।

पातौ च बहुलम् । ८ । ३ । ५२ ।

पञ्चम्यादृत्येव । "सूर्य्यो नो दिवस्पातु" ।

षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ।८।३।५३।

"वाचस्पतिं विश्वकर्म्माणम्"। "दिवस्पुत्राय सूर्य्याय" । "दिवस्पृष्टं भन्दमानः"। "तमसस्पारमस्य"। "परिवीत इडस्पदे" । दिवस्पयो दिधिषाणाः । "रायस्पोषं यजमाने नु" ।

इडाया वा । ८ । ३ । ५४ ।

पतिपुत्रादिषु परेषु । इडायास्पुत्रः—इडायाःपुत्रः । इडायास्पदे- इडायाःपदे । निसस्तपतावनासेवने(७।०२५०)। निसः सकारस्य मूर्द्धन्यः स्यात् ।"निष्टप्तं रक्षः" "निष्टप्ता अरातयः" । अनासेवने किम् ? निस्तपति । पुनः पुनस्तपतीत्यर्थः ।

युष्मत्तत्ततक्षुष्वन्तःपादम् । ८ । ३ । १०३ ।

पादमध्यस्थस्य सस्य मूर्द्धन्यःस्यात् तकारादिष्वेषु परेषु । युष्मदादेशाः त्वंत्वातेतवाः ।"त्रिभिष्ट्वन्देव ! सवितः" ।। तेभिष्ट्व "आभिष्टे"। "अपस्वग्ने सधिष्टव"। "अग्निष्टद्विश्वम्"। "द्यावापृथिवी निष्टतक्षुः । अन्तःपादं किम् ? "तदग्निस्तदर्य्यमा" । "यन्म आत्मनोनिन्दाभूदग्निस्तत् पुनराह जातवेदा विचर्षणिः अत्राग्निरिति पूर्व्वपादस्यान्तो नतु मध्यः ।

यजुष्येकेषाम् । ८ । ३ । १०४ ।

युष्मत्तत्ततक्षुषु परतः सस्य मूर्द्धन्यो वा । "अर्च्चिर्भिष्ट्वम्" अ-

ग्निष्टेऽग्रम्"। "अर्चिभिष्टतच्च,,। पचे अर्चिभिस्त्वमित्यादि।

स्तुतस्तोमयोश्छन्दसि। ८। ३। १०५।

नृभिष्टुतस्य-नृभिस्तुतस्य। गोष्टोमम्-गोस्तोमम्। पूर्वपदादित्येव सिद्धे प्रपञ्चार्थमिदम्।

पूर्व्वपदात्। ८। ३। १०६।

पूर्वपदस्थान्निमित्तात् परस्य षो वा। "यदिन्द्राग्नी ! दिविष्ठः युवां हि स्थः स्वर्पती,,।

सुञः। ८। ३। १०७।

पूर्वपदस्थान्निमित्तात् परस्य सुञो निपातस्य सस्य षः। "ऊर्द्ध ऊ-षु णः"। "अभी षु णः,,।

सनोतेरनः। ८। ३। १०८।

"गोषा इन्द्रोन्टषा असि"। अनः किम् ? गोसनिः।

सहेः पृतनर्त्ताभ्याञ्च। ८। ३। १०९।

पृतनाषाहम्। ऋताषाहम्। चात्। ऋतीषाहम्।

निव्यभिभ्योऽड्व्यवाये वा छन्दसि।८।३।११९।

सस्य मूर्द्धन्यः। न्यषीदत्-न्यसीदत्। व्यषीदत्-व्यसीदत्। अभ्यष्टौत्-अभ्यस्तौत्।

छन्दस्यृदवग्रहात्। ८। ४। २६।

ऋकारान्तादवग्रहात् (६९) परस्य नस्य णः । नृमणाः पितृयाणम् ।

## नश्च धातुस्थोरुषुभ्यः (७०) । ८ । ४ । २७ ।

धातुस्थात् । "अग्ने रक्षा (७१) णः" । "शिक्षा णोऽस्मिन्" । "उरु णस्कृधि" । अभी-षु णः । "मो षु णः" * ।

इत्यष्टमोऽध्यायः ।

इति वैदिकप्रक्रिया समाप्ता ।

---

अथ स्वरप्रकरणम् ।

## अनुदात्तं पदमेकवर्ज्जम् । ६ । १ । १५८ ।

परिभाषेयं स्वरविधिविषया । यस्मिन् पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्ज्जयित्वा शेषन्तत्पदमनुदात्ताच्कं स्यात् । गोपायतं नः । अत्र सनाद्यन्ता इति (७५७पृ०) धातुत्वे धातुस्वरेण (७५४४पृ०सू०)यकाराकार उदात्तः शिष्टमनुदात्तम् । सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वाच्यम् * । तेनोक्तोदाहरणे गुपेर्धातुस्वरः । आय-

---

(६९) समासे पदान्तोऽवग्रहः ।

(७०) धातुस्थनिमित्तात् उरुशब्दात् षुशब्दाच्च परस्य नस् इत्यस्य णत्वं स्यादित्यर्थः ।

(७१) रक्षा शिक्षा इति लोटो मध्यमपुरुषैकवचनं द्व्यचोऽतस्तिङ इति (७५१५पृ०) दीर्घः ।

प्रत्ययस्य स्वरस्य न शिष्यते। अन्यत्रेति किम्? "यज्ञं यज्ञमभिष्टये गृणीतः"। अत्र सति शिष्टोपि आद्युत्वस्य स्वरो न शिष्यते किन्तु तस्यैव।

## अनुदात्तस्य च यत्रोदात्तलोपः। ६।१।१६१।

यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात्। "देवीं वाचम्"। अत्र ङीबुदात्तः (१)।

## चौ। ६।१।२२२।

लुप्ताकारेऽञ्चतौ परे पूर्वस्यान्तोदात्तः स्यात्। उदात्तनिवृत्तिस्वरापवादः। "देवद्रीचीं नयत देवयन्तः"। अतद्धितइति वाच्यम्०। दाधीचः। माधूचः। प्रत्ययस्वरएवात्र।

## आमन्त्रितस्य च। ६।१।१९८।

आमन्त्रितविभक्त्यन्तस्यादिरुदात्तः स्यात्। अग्न! इन्द्र! वरुण! मित्रदेवाः!।

## आमन्त्रितस्य च। ८।१।१९।

पदात् परस्यापादादिस्थितस्यामन्त्रितस्य सर्वस्यानुदात्तः स्यात्। प्रागुक्तस्य षाष्ठस्यापवादोऽयमाष्टमिकः। "इमं मे गङ्गे! यमुने! सरस्वति!। अपादादौ किम्? "शुतुद्रि स्तोमम्"। आमन्त्रितं पूर्वमविद्यमानवत्(१७७पृ०)। अग्न! इन्द्र!। अ(२)

---

(१) अनुदात्तौ सुप्पितावित्युक्तेः(३५५९पृ०)ङीपोऽनुदात्तत्वेऽपि तस्मिन् परे देवेतिप्रत्ययस्वरस्य उदात्तस्य लोपान्ङीप उदात्तत्वम्।

(२) अत्र अग्न इन्द्र वरुणेत्यादौ प्रागुक्तोदाहरणे इत्यर्थः।

तेन्द्रादीनान्निघातोन पूर्व्वस्याविद्यमानत्वेन पदात् परत्वाभावात् । नामन्त्रिते समानाधिकरणे सामान्यवचनम्(१७६९०) । समाधिकरणे आमन्त्रिते परे विशेष्यं पूर्व्वमविद्यमानवन्न । अग्ने ! तेजस्विन् ! । अग्ने त्रातः ! । सामान्यवचनं किम् ? पर्य्यायेषु मा भूत । अग्नेय ! देवि ! सरस्वति ! ।

## सामान्यवचनं विभाषितं विशेषवचने । ८ । १ । ७४ ।

अत्र भाष्यकृता बहुवचनमिति पूरितम् । सामान्यवचनमिति च पूर्व्वसूत्रे योजितम् । आमन्त्रितान्ते विशेषणे परे पूर्वं बहुवचनान्तमविद्यमानवद्वा । "देवीः षडुर्व्वीरुरु णः कृणोत" । अत्र देवीनां विशेषणं षड़िति ।"देवाः शरण्याः" । इह द्वितीयस्य निघातो वैकल्पिकः ।

## सुबामन्त्रिते पराङ्गवत् स्वरे । २ । १ । २ ।

सुबन्तमामन्त्रिते परे परस्याङ्गवत्स्यात् स्वरे कर्त्तव्ये । "द्रवत्पाणी शुभस्पती" । शुभ इति शुभेः क्विबन्तात् षष्ठ्यन्तम् । तस्य परशरीरानुप्रवेशे षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । न चाष्टमिको निघातः शङ्क्यः पूर्वामन्त्रितस्याविद्यमानत्वेन पादादित्वात् । "यत्ते दिवो दुहितर्म्मर्त्तं भोजनम्" । इह हि दिवःशब्दस्याष्टमिको निघातः । "परशुना वृश्चन्" । षष्ठ्यामन्त्रितकारकवचनम् * । षष्ठ्यन्तमामन्त्रितान्तं प्रति यत्कारकन्तद्वाचकञ्चेति परिगणनं कर्त्तव्यमित्यर्थः । तेनेह न । "अयमग्ने ! जरिता" । 'एतेनाग्ने ! ब्रह्मणा' । समर्थानुवृत्त्या वा सिद्धम् ।

पूर्व्वाङ्गवच्चेति वक्तव्यम् ॰।"आ ते पितर्म्मरुताम्"। "प्रति त्वा दुहितर्द्दिवः"। अव्ययानान्न ॰। उच्चैरधीयान !। अव्ययीभावस्य त्विष्यते। उपाग्न्यधीयान !।

## उदात्तस्वरितयोर्य्यणः स्वरितोऽनुदात्तस्य। ८।२।४।

उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यात्। अभ्यभि हि। स्वरितस्य यणः। खलप्वाशा। अस्य स्वरितस्य त्रैपादिकत्वेनासिद्धत्वाच्छेषनिघातो न।

## एकादेश उदात्तेनोदात्तः। ८।२।५।

उदात्तेन सहैकादेश उदात्तः स्यात्।"क्व वोऽश्वाः"। "क्वावरम्मरुतः"।

## स्वरितो वाऽनुदात्ते पदादौ। ८।२।६।

अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात्। पक्षे पूर्व्वसूत्रेणोदात्तः।"वीदं ज्योतिर्हृदये"। "अस्य श्लोको दिवीयते"। व्यवस्थितविभाषात्वादिकारयोः स्वरितः दीर्घप्रवेशे तूदात्तः। किञ्च एङः पदान्तादिति (५२४०)पूर्व्वरूपे स्वरित एव। 'तेऽवदन्'।'सोऽयमागात्"। उक्तञ्च प्रातिशाख्ये। "इकारयोश्च(२) प्रश्लेषे चैप्राभिनिहृतेषु चेति"।

## उदात्तादनुदात्तस्य स्वरितः। ८।४।

(२) इकारयोरेकादेशे द्वयोरपि ह्रस्वयोरन्यतरदीर्घे तु नेत्यर्थः

उदात्तात्परस्यानुदात्तस्य स्वरितः स्यात् । "अग्निमीले" । अस्याप्यसिद्धत्वाच्छेषनिघातो न ।"तमीशानासः" ।

नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ।८।४।६७।

उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितो न स्यात् । गार्ग्यादिमते तु स्यादेव। "प्रयआवः" । "क्व वोऽश्वाः ३ "। "क्वा३भीशवः" ।

एकश्रुति दूरात्सम्बुद्धौ ।१।२।३३।

दूरात्सम्बोधने वाक्यमेकश्रुति स्यात्। त्रैस्वर्य्यापवादः । आगच्छ भो माणवक ! ।

यज्ञकर्म्मण्यजपन्यूङ्खसमासु ।१।२।३४।

यज्ञक्रियायां मन्त्रएकश्रुतिः स्याज्जपादीन्वर्ज्जयित्वा ।"अग्निर्मूर्द्धा दिवः ककुत्" । यज्ञेति किम् ? स्वाध्यायकाले त्रैस्वर्यमेव । अजपेति किम् ? "ममाग्ने ! वर्चोविहवेष्वस्तु"। जपो नाम उपांशुप्रयोगः यथा जले निमग्नस्य। न्यूङ्खा नाम षोड़श ओकाराः गीतिषु सामाख्याः ।

उच्चैस्तरां वा वषट्कारः।१।२।३५।

यज्ञकर्म्मणि वषट्शब्दउच्चैस्तरां वा स्यादेकश्रुतिर्वा ।

विभाषा छन्दसि ।१।२।३६।

छन्दसि विभाषा एकश्रुतिः स्यात्। व्यवस्थितविभाषेयम्। संहितायान्त्वैस्वर्यम् ब्राह्मणे एकश्रुतिर्बह्वृचानाम्। अन्येषामपि यथासम्प्रदायं व्यवस्था।

## न सुब्रह्मण्यायां स्वरितस्य तूदात्तः।१।२।३७।

सुब्रह्मण्याख्ये निगदे यज्ञकर्म्मणीति (७५४२पृ०) विभाषा छन्दसीति(७५४२०)च प्राप्ता एकश्रुतिर्न स्यात् स्वरितस्य चोदात्तश्च स्यात्। सुब्रह्मण्योऽयम्। सुब्रह्मणि साधुरिति यत्। नचैकादेश उदात्तेनोदात्तइति(७५४१पृ०)सिद्धे पुनरत्वेदमुदात्तविधानं व्यर्थमिति वाच्यं तत्रानुदात्त इत्यस्यानुवृत्तेः। असावित्यन्तः *। तस्मिन्नेव निगदे प्रथमान्तस्यान्त उदात्तः स्यात्। गार्ग्यो यजते। ञित्त्वात्प्राप्त आद्युदात्तोऽनेन बाध्यते। अमुष्येत्यन्तः *। षष्ठ्यन्तस्यापि प्राग्वत्। दाक्षेः पिता यजते। स्यान्तस्योपोत्तमञ्च *। चादन्तस्तेन द्वावुदात्तौ। गार्ग्यस्य पिता यजते। वा नामधेयस्य*। स्यान्तस्य नामधेयस्य उपोत्तममुदात्तं वा स्यात्। देवदत्तस्य पिता यजते।

## देवब्रह्मणोरनुदात्तः।१।२।३८।

अनयोः स्वरितस्यानुदात्तः स्यात्सुब्रह्मण्यायाम्। देवा ! ब्रह्माणः ! आगच्छत।

## स्वरितात्संहितायामनुदात्तानाम्।१।२।३९।

स्वरितात्परेषामनुदात्तानां संहितायामेकश्रुतिः स्यात्। "इमं मे गङ्गे! यमुने! सरस्वति"!।

उदात्तस्वरितपरस्य सन्नतरः। १। २। ४०।

उदात्तस्वरितौ परौ यस्मात्तस्यानुदात्तस्यानुदात्ततरः स्यात्। "सरस्वति! शुतुद्रि! व्यचच्चयत्स्वः। तस्य परमाम्रेडितम् (३६४)

अनुदात्तञ्च। ८। १। ३।

द्विरुक्तस्य पररूपमनुदात्तं स्यात्। "दिवेदिवे"।

इति साधारणस्वराः।

---

धातोः। ६। १। १६२।

अन्तोदात्तः स्यात्। "गोपायतन्नः"। "असि सत्यः"।

स्वपादिर्हिंसामच्यनिटि। ६। १। १८८।

स्वपादीनां हिंसेश्चानिट्यजादौ लसार्वधातुके परे आदिरुदात्तो वा स्यात्। स्वपादिरदाद्यन्तर्गणः (७।२२४पृष्ठादौ)। स्वपन्ति। श्वसन्ति। हिंसन्ति। पक्षे प्रत्ययस्वरेण मध्योदात्तता। ङित्येवेष्यते। नेह। स्वपानि। हिनसानि।

अभ्यस्तानामादिः। ६। १। १८९।

अनिट्यजादौ लसार्वधातुके परे अभ्यस्तानामादिरुदात्तः। "ये ददति प्रिया वसु"। "परत्वाच्चित्स्वरमयं बाधते"। "दधानाइन्द्रे"।

अनुदात्ते च। ६। १। १९०।

अविद्यमानोदात्ते लसार्व्वधातुके परेऽभ्यस्तानामादिरुदात्तः। "दधासि रत्नं द्रविणञ्च दाशुषे"।

भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्व्वं पिति। ६। १। १९२।

भीप्रभृतीनामभ्यस्तानां पिति लसार्व्वधातुके परे प्रत्ययात् पूर्वमुदात्तं स्यात्। "योऽग्निहोत्रं जुहोति"। "मम तु नः परिज्मा"। "ता यज्ञीरं दधनत्"। "जागर्षि त्वम्"।

लिति। ६। १। १९३।

प्रत्ययात् पूर्वमुदात्तम्। चिकीर्षकः।

आदिर्णमुल्यन्यतरस्याम्। ६। १। १९४।

अभ्यस्तानामादिरुदात्तो वा णमुलि परे। लोलूयंलोलूयम्। पक्षे लित्स्वरः।

अचः कर्त्तृयकि। ६। १। १९५।

उपदेशेऽजन्तानां कर्त्तृयकि परे आदिरुदात्तो वा। लूयते केदारः स्वयमेव।

चङ्यन्यतरस्याम्। ६। १। २१८।

चङन्ते धातावुपोत्तममुदात्तं वा। "मा हि चीकरताम्"। धा त्वकारउदात्तः। पक्षान्तरे चङुदात्तः।

इति धातुस्वराः।

कर्षात्वतो घञोऽन्त उदात्तः(१) । ६ । १ । १५९ ।

कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तः स्यात् । कर्ष इति शपा निर्देशात्तुदादेराद्युदात्त एव । कर्षः । पाकः ।

उञ्छादीनाञ्च । ६ । १ । १६० ।

अन्त उदात्तः स्यात् उञ्छादिषु (२) युगशब्दो घञन्तोऽगुणो निपात्यते कालविशेषे रथाद्यवयवे च "वैश्वानरः कुशिकेभि-र्युगेयुगे" । अन्यत्र "योगे योगे तव स्तरम्" । भक्षशब्दो घञ-न्तः । "गावः सोमस्य प्रथमस्य भक्षः" । उत्तमशश्वत्तमावपि । "उदुत्तमं वरुण !" "शश्वत्तममीळते" ।

चतुरः शसि । ६ । १ । १६७ ।

चतुरोऽन्त उदात्तः शसि परे । "चतुरः कल्पयन्तः" । अचि र (१२०४०)इति आदेशस्य पूर्वविधौ स्थानिवत्त्वान्नेह । चतस्रः पश्य । चतेरुरन् (उ४२०४०) । नित्त्वादाद्युदात्तता ।

झल्युपोत्तमम् । ६ । १ । १८० ।

(१) एतत्प्रकरणे प्रातिपदिकस्वरा उच्यन्ते ते च प्रायेण तत्तद्विहितप्रत्यय बलेनैव ज्ञेया उणादीनां व्युत्पत्तिपक्षे तत्तत्प्रत्ययैः, अव्युत्पत्तिपक्षे फिट्सूत्रैरिति (उ५५१सूत्रादौ) बोध्यम् ।

(२) उञ्छ म्लेच्छ जञ्ज जल्प जप बुध युग (गरो दूष्ये ग०) (वेदवेगवेष्टबन्धाः करणे ग०) (स्तुयुद्रुवश्छन्दसि ग०) (वर्त्तनिः स्तोत्रे ग०) (दरः श्वभ्रे ग०) (साम्ब तापौ भावगर्हायाम् ग०) (उत्तमशश्वत्तमौ सर्वत्र) भक्ष गम्भ भोग मन्थ उञ्छादि ।

षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यात्। "अध्वर्युभिः पञ्चभिः"। "नवभिर्वाजैर्नवती च"। "सप्तभ्योजायमानः"। "आदशभिर्विवस्वतः"। उपोत्तमं किम्? "आषड्भिर्हूयमानः"। "विश्वैर्देवैस्त्रिभिः"। झलि किम्? "नवानां नवतीनाम्"।

विभाषा भाषायाम्। ६। १। १८१।

उक्तविषये।

सर्व्वस्य सुपि। ६। १। १९१।

सुपि परे सर्वशब्दस्यादिरुदात्तः स्यात्। "सर्वे नन्दन्ति यशसा"।

ञ्नित्यादिर्नित्यम्। ६। १। १९७।

ञिदन्तस्य निदन्तस्य चादिरुदात्तः स्यात्। "यस्मिन् विश्वानि पौंस्या"। पुंसः कर्म्मणि ब्राह्मणादित्वात्(६५४सू०)ष्यञ्। "सुते दधिष्व नश्चनः"। चायतेरसुन्। चायेरन्ने ह्रस्वश्चेति (उ४२६सू०) चकारादसुनो नुडागमश्च।

पथिमथोः (३)सर्वनामस्थाने। ६। १। १९९।

आदिरुदात्तः स्यात्। अयं पन्थाः। सर्वनामस्थाने किम्? "ज्योतिष्मतः पथोरक्ष"। उदात्तनिवृत्तिस्वरेणान्तोदात्तं पदम्।

(३) पथिमथिशब्दावुणादीनिप्रत्ययान्तौ ततःप्रत्ययस्वरेणान्तोदात्तत्वे प्राप्ते-ऽयं विधिः।

**अन्तश्च तवै युगपत्।६।१।२००।**

तवैप्रत्ययान्तस्याद्यन्तौ युगपदुदात्तौ स्तः। "हर्षसे दातवा उ"।

**क्षयो निवासे।६।१।२०१।**

आद्युदात्तः स्यात्। "स्वे क्षये शुचिव्रत"। एरच्(७४४२सू०)। क्षः।

**जयः करणम्।६।१।२०२।**

करणवाची जयशब्द आद्युदात्तः स्यात्। जयत्यनेन जयोऽश्वः।

**वृषादी(४) नाम्न।६।१।२०३।**

आदिरुदात्तः। आकृतिगणोऽयम्। "वाजेभिर्वाजिनीवती"। "इन्द्रं वाणी"।

**संज्ञायामुपमानम्।६।१।२०४।**

उपमानशब्दः संज्ञायामाद्युदात्तः। चञ्चेव चञ्चा। कनोऽत्र(७१२६०सू०) लुप्। एतदेव ज्ञापयति क्वचित्स्वरविधौ प्रत्ययलक्षणं नेति। संज्ञायाम् किम्? अग्निर्माणवकः। उपमानं किम्? चैत्रः।

**निष्ठा च द्व्यजनात्।६।१।२०५।**

---

(४) वृष जन ज्वर ग्रह हय गय नय ताय तय चय अम वेद सूद अंश गुहा (शमरणौ संज्ञायां संमतौ भावकर्म्मणोः म०) मन्त्र शान्ति काम याम नारा धारा कारा वह कल्प पाद। वृषादिः आकृतिगणत्वात् अविहितलक्षणमाद्युदात्तत्वं वृषादिषु ज्ञेयम्।

निष्ठान्तस्य द्व्यचः संज्ञायामादिरुदात्तो नत्वाकारः। दत्तः। द्व्यच् किम्? चिन्तितः। अनात् किम्? घ्रातः। संज्ञाया मित्यनुवृत्तेर्नेह। कृतम्। हृतम्।

### शुष्कधृष्टौ। ६। १। २०६।

एतावाद्युदात्तौ स्तः। असंज्ञार्थमिदम्। "अतसन्न शुष्कम्"।

### आशितः (५)कर्त्ता। ६। १। २०७।

कर्तृवाची आशितशब्द आद्युदात्तः। "कृषन्नित् फाल आशितम्" (६)।

### रिक्ते विभाषा। ६। १। २०८।

रिक्तशब्दे आदिरुदात्तः। रिक्तः। संज्ञायान्तु निष्ठा च द्व्यज-नादिति (७५४८पृ०) नित्यमाद्युदात्तत्वं पूर्व्वविप्रतिषेधेन।

### जुष्टार्पिते च छन्दसि। ६। १। २०९।

आद्युदात्ते वा स्तः।

### नित्यं मन्त्रे। ६। १। २१०।

एतत्सूत्रं शक्यमकर्त्तुम्। "जुष्टोदमूनाः षलरश्चाङ्करर्पितम्" इत्यादेः पूर्व्वेणैव सिद्धेः छन्दसि पाठस्य व्यवस्थिततया

---

(५) अकर्म्मकादशेः कर्त्तरि क्त उपधादीर्घत्वानेनैव सूत्रेण निपात्यते इति भाष्ये स्थितम्। मनो०

(६) कृषन् कर्षं कुर्व्वन् फालः कर्षीवलमाशितं भोक्तारं करोतीत्यर्थः।

विपरीतापादनायोगात्। "अर्पिताः (७) षष्टिर्न चलाचलाः" इत्यत्रान्तोदात्तदर्शनाच्च।

**युष्मदस्मदोर्ङसि। ६। १। २११।**

आदिरुदात्तः स्यात्। "न हि षस्तव नो मम"।

**ङयि च। ६। १। २१२।**

"तुभ्यं हिन्वानः मह्यं वातः पवताम्"।

**यतोऽनावः। ६। १। २१३।**

यत्प्रत्ययान्तस्य द्व्यचः आदिरुदात्तो नावं विना। "युञ्जन्त्यस्य काम्या"। कमेर्णिङन्तादचो यत् (उ२००पृ०)।

**ईडवन्दवृशंसदुहां (८) ण्यतः। ६। १। २१४।**

एषां ण्यदन्तानामादिरुदात्तः। "ईड्योनूतनैरुत"। "आजुह्वान ईड्योवन्द्यश्च"। "श्रेष्ठन्नो धेहि वार्य्यम्"। "उक्थमिन्द्राय शंस्यम्"।

**विभाषा वेण्विन्धानयोः (९)। ६। १। २१५।**

आदिरुदात्तो वा। "इन्धानो अग्निम्"।

---

(७) न केवलं गतार्थत्वं सूत्रारम्भे दोषोऽप्यस्तीत्याह अर्पिताइति।

(८) पूर्वसूत्रे निरनुबन्धस्य यतो ग्रहणात् ण्यदन्तस्याप्रसक्तौ तित्स्वरे (उ५६२पृ०) प्राप्तेऽयमारम्भः।

(९) वेणुशब्दस्य, अजिवृरीभ्यो निच्चेति (उ४०४पृ०) णुप्रत्ययस्य निच्वोक्त्या निच्वे न(उ५४७पृ०सू०)नित्यमाद्युदात्ते प्राप्ते इन्धानशब्दस्य चानशन्ततया चित्त्वात् (उ५५९पृ०सू०) अन्तोदात्ते प्राप्ते इदं वचनम्।

त्यागरागहासकुहश्वठक्रथानाम्। ६। १। २१६।

आदिरुदात्तो वा। आद्यास्त्रयो घञन्ताः। त्रयः पचाद्यजन्ताः।

मतोः पूर्वमात् संज्ञायां स्त्रियाम्। ६।१। २१९।

मतोः पूर्वमाकार उदात्तः स्त्रीनाम्नि। उदुम्बरावती। शरावती।

अन्तोऽवत्याः। ६। १। २२०।

अवतीशब्दस्यान्त उदात्तः। वेत्रवती। ङीपः पित्त्वात् (उ५५८९०सू०) अनुदात्तत्वं प्राप्तम्।

ईवत्याः। ६। १। २२१।

ईवत्यन्तस्यापि प्राग्वत्। अहीवती। मुनीवती।

अथ फिट्सूत्राणि।

फिषोऽन्तउदात्तः १। प्रातिपदिकं फिट् तस्यान्तउदात्तः स्यात्। उच्चैः। पाटलापालङ्काम्बासागरार्थानाम् २। एतदर्थानामन्तउदात्तः। पाटला फलेरुहा सुरूपा पाकलेति पर्य्यायाः। लघावन्त इति (उ५५५पृ०) प्राप्ते। पालङ्कोव्याधिघातआरेवतआरग्वध इति पर्य्यायाः। अम्बार्थः माता। उनर्वन्नन्तानामाद्युदात्ते (उ५५५पृ०) प्राप्ते। सागरः समुद्रः। गेहार्थानामस्त्रियाम् ३। गेहम्। नब्विषयस्येति (उ५५४४पृ०) प्राप्ते। अस्त्रियां किम्? शाला, आद्युदात्तोऽयम् इहैव पर्य्युदासात् ज्ञापकात्। गुदस्य च ४। अन्त उदात्तः स्यान्न तु स्त्रियाम्। गुदम्। अस्त्रियां किम्? "आन्त्रेभ्यस्ते गुदाभ्यः"। स्वाङ्ग-

शिटामदन्तानामिति(७५५४सू०)अन्तरङ्गमाद्युदात्तत्वम्। ततष्टाप्। ध्यपूर्वस्य स्त्रीविषयस्य ५। धकारयकारपूर्वयोऽन्त्योऽच् स उदात्तः। अन्तर्धा। स्त्रीविषयवर्णेति(७५५५सू०)प्राप्ते। छाया। माया। जाया। यान्तस्यान्त्यात् पूर्वमिति(७५५७सू०) आद्युदात्तत्वे प्राप्ते। स्त्रीति किम्? वाक्यम् यत्अन्तत्वादाद्युदात्तत्वम्(७५५७सू०वा०)। विषयग्रहणं किम्? इभ्या क्षत्रिया। यतोऽनाव (७५५०सू०) इत्याद्युदात्तइभ्यशब्दः। क्षत्रियशब्दस्तु यान्तस्यान्त्यात्पूर्वमिति(७५५७सू०)मध्योदात्तः। खान्तस्याश्मादेः ६। नखम्। उखा। सुखम्। दुःखम्। नखस्य स्वाङ्गशिटामित्याद्युदात्ते(७५५४सू०)प्राप्ते। उखा नाम भाण्डविशेषस्तस्य कृत्रिमत्वात् खय्युवर्णं कृत्रिमाख्या चेत्(७५५५सू०)इत्युवर्णस्योदात्तत्वे प्राप्ते। सुखदुःखयोर्नब्विषयस्येति(७५५४सू०)प्राप्ते। अश्मादेः किम्? शिखा। मुखम्। मुखस्य स्वाङ्गशिटामितिनब्विषयस्येति (७५५४सू०) वा आद्युदात्तत्वम्। शिखायास्तु शीङो ह्रस्वश्चेति (७४२६सू०) उणादिषु यस्य निन्त्वोक्तेः अन्तरङ्गत्वाट्टापः प्रागेव स्वाङ्गशिटामिति (७५५४सू०) वा बोध्यम्। बंहिष्ठवत्सरतिशत्थान्तानाम् ७। एषामन्त उदात्तः स्यात्। अतिशयेन बहुलो बंहिष्ठः। नित्त्वादाद्युदात्ते(७५४७सू०)प्राप्ते। "बंहिष्ठैरश्वैः सुवृता रथेन"। "यद्वंहिष्ठन्नाति विधे" इत्यादौ व्यत्ययादाद्युदात्तः। संवत्सरः। अव्ययपूर्वपदप्रकृति (७४२७सू०) स्वरोऽत्र बाध्यते इत्याहुः। सप्ततिः। अशीतिः। लघावन्त इति(७५५५सू०)प्राप्ते। चत्वारिंशत्। इहापि प्राग्वत्। अभ्युत्था। नाप्रक्षथस्ययोः ८। अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यते इत्याहुः। थाथादिस्वरेण (७५९८सू०) गतार्थमेतत्।

दक्षिणस्य साधौ ६। अन्त उदात्तः स्यात्। साधुवाचित्वा-
भावे तु व्यवस्थायां सर्वनामतया स्वाङ्गशिटाम्(७५५४८०)इत्या-
द्युदात्तः। अर्थान्तरे तु लघावन्त(७५५५८०)इति गुरुरुदात्तः।
'दक्षिणः सरलोदारपरच्छन्दानुवर्त्तिष्विति' कोशः। स्वाङ्गा-
ख्यायामादिर्वा १०। इह दक्षिणस्याद्यन्तौ पर्य्यायेणोदात्तौ
स्तः। दक्षिणो बाहुः। आख्याग्रहणं किम्? । प्रत्यङ्मुखमा-
सीनस्य वामपाणिर्दक्षिणो भवति। छन्दसि च ११। अस्वा-
ङ्गार्थमिदम्। दक्षिणः। इह पर्य्यायेणाद्यन्तावुदात्तौ। कृष्ण-
स्यामृगाख्या चेत् १२। अन्तउदात्तः। वर्णानान्तणेत्याद्युदा-
त्ते(७५५५८०)प्राप्ते। अन्तोदात्तो विधीयते। कृष्णानां व्रीही-
णाम्। "कृष्णो नो नाव वृषभः"। मृगाख्यायान्तु "कृष्णकर्षिः।
शुक्लगौरयोरादिः १४। नित्यमुदात्तः स्यादित्येके। वेत्यनुव-
र्त्ततइति तु युक्तम्। 'सरो गौरो यथापि वा' इत्यत्रान्तोदात्तद-
र्शनात्। अङ्गुष्ठोदकवकवशानां छन्दस्यन्तः १५। अङ्गुष्ठस्य
स्वाङ्गानामकुर्व्वादीनामिति(७५५६८०)द्वितीयस्योदात्तत्वे प्राप्ते
ऽन्तउदात्तार्थ आरम्भः। वशाग्रहणं नियमार्थं छन्दस्येवेति
तेन लोके आद्युदात्ततैत्याहुः। पृष्ठस्य च १६। छन्दस्यन्त-
उदात्तः स्याद्वा भाषायाम्। पृष्ठम्। अर्जुनस्य तृणाख्या
चेत् १७। उनर्वन्नान्तानाम्(७५५५८०)इत्याद्युदात्तस्यापवादः।
अर्य्यस्य स्वाम्याख्या चेत्१८।यान्तस्यान्त्यात् पूर्व्वमिति(७५५७८०)
यतोऽनाव इति(७५५०८०)वाद्युदात्ते प्राप्ते वचनम्। आशाया-
अदिगाख्या चेत् १९। दिगाख्याव्यावृत्त्यर्थमिदम्। अतएव
ज्ञापकाद्दिक्पर्य्यायस्याद्युदात्तता। "इन्द्र आशाभ्यस्परि"।

नक्षत्राणामाब्विषयाणाम् २०। अन्त उदात्तः स्यात्। अश्लेषाऽनुराधादीनां लघावन्त इति(उ५५५४०)प्राप्ते। ज्येष्ठाश्रविष्ठाधनिष्ठानामिष्ठन्नन्तत्वेनाद्युदात्ते(उ५५७४०)प्राप्ते वचनम्। न कुपूर्वः कृत्तिकाख्या चेत् २१। अन्त उदात्तो न। कृत्तिका नक्षत्रम्। केचित्तु कुपूर्वाय आप् तद्विषयाणामिति व्याख्याय आर्यिका अङ्कुलिका इत्यत्राप्यन्तोदात्तता नेत्याहुः। घृतादीनाञ्च २२। अन्तउदात्तः। "घृतं मिमिक्षे"। आकृतिगणोऽयम्। ज्येष्ठकनिष्ठयोर्व्वयसि २३। अन्त उदात्तः स्यात्। "ज्येष्ठ आह चमसा"। "कनिष्ठ आह चतुरः"। वयसि किम्? ज्येष्ठः श्रेष्ठः। कनिष्ठोऽल्पिष्ठः। इह नित्वादाद्युदात्तः (उ५४७४०सू०) एव। विल्वतिष्ययोः स्वरितो वा २४। अनयोरन्तः स्वरितो वा स्यात्। पक्षे उदात्तः।

इति फिट्सूत्रेषु प्रथमः पादः।

---

अथादिः प्राक् शकटेः१। अधिकारोऽयम् शकटिशकव्योरिति (उ५५७४०)यावत्। ह्रस्वान्तस्य स्त्रीविषयस्य २। आदिरुदात्तः स्यात्। बलिः। तनुः। नब्विषयस्यानिसन्तस्य ३। "वनेन वयः"। इसन्तस्य तु सर्पिः। नप् नपुंसकम्। तृणधान्यानां च द्व्यषाम् ४। द्व्यचामित्यर्थः। कुशा। काशाः। माषाः। तिलाः। बह्वचान्तु गोधूमाः। नः संख्यायाः ५। पञ्च। चत्वः। स्वाङ्गशिटामदन्तानाम् ६। शिट् सर्व्वनाम। "क

र्णाभ्यां चुचुकाधि'। 'ओष्ठाविव मधु'। 'विश्वो विहायाः'। प्राणिनां कुपूर्वम् ७। कवर्गात् पूर्व आदिरुदात्तः। काकः। वृकः। 'शुकेषु मे'। प्राणिनां किम्? 'क्षीरसर्पिर्मधूदकम्'। खय्युवर्णं कृत्रिमाख्या चेत् ८। खयि परे उवर्णमुदात्तं स्यात्। कन्दुकः। उनर्वन्नन्तानाम् ९। उन-'वरुणं वोऽरिशादसम्'। ऋ—'स्वसारन्त्वा कृणवै'। वन्—'पीवानं मेषम्'। वर्णानान्तणतिनितान्तानाम् १०। आदिरुदात्तः। एतः हरिणः। शितिः। पृश्निः। हरित्। ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये ११। ऋद्वर्जं ह्रस्वान्तस्यादिभूतं ह्रस्वमुदात्तं स्यात्। मुनिः। अक्षस्यादेवनस्य १२। आदिरुदात्तः। "तस्य नाक्षः"। देवने तु। "अक्षैर्मा दीव्य"। अर्द्धस्यासमद्योतने १३। अर्द्धं ग्रामस्य। समेऽंशके तु अर्द्धं पिप्पल्याः। पीतद्वर्थानाम् १४। आदिरुदात्तः। पीतद्रुः। सरलः। ग्रामादीनाञ्च १५। ग्रामः। सोमः। यामः। लुबन्तस्योपमेयनामधेयस्य १६। चञ्चेव चञ्चा। स्फिगन्तस्येति पाठान्तरम्। स्फिगिति लुपः प्राचां संज्ञा। न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम् १७। एषामुपमेयनामादिरुदात्तो न। ताल इव तालः। मेरुरिव मेरुः। व्याघ्रः। सिंहः। महिषः। राजविशेषस्य यमन्वा चेत् १८। यमन्वा वृद्धम्*। आङ्ग उदाहरणम्। अङ्गाः प्रत्युदाहरणम्। लघावन्ते द्वयोश्च बह्वषो गुरुः १९। अन्ते लघौ द्वयोश्च लघ्वोः सतोर्बह्वचकस्य गुरुरुदात्तः। कल्याणः। कोलाहलः। स्त्रीविषयवर्णाक्षुपूर्वाणाम् २०। एषामक्षराणामाद्युदात्तः स्त्रीविषयः—मल्लिका।

* वृद्धिर्यस्या चामादेस्तद्वृद्धमिति १, १, ७३, उक्तसंज्ञम्।

वर्णः श्येनी। हरिणी। अम्बुशब्दात् पूर्वोऽस्य्येषान्ते अम्बुपूर्वाः। तरन्तुः। शकुनीनाञ्च लघु पूर्वम् २१। पूर्वं लघु उदात्तं स्यात्। कुक्कुटः। तित्तिरिः। नतु प्राण्याख्यायाम् २२। यथालक्षणं प्राप्तमुदात्तत्वन्न। वसन्तः। कृकलासः। धान्यानाञ्च वृद्धच्चान्तानाम् २३। आदिरुदात्तः। कान्तानाम्। श्यामाकाः। षान्तानाम्। राजमाषाः। जनपदशब्दानामुपान्तानाम् २४। । केकयः। ह्यादीनामसंयुक्तलान्तानामन्त्यः पूर्वं वा २५। ह्यियिति हलःसंज्ञा। पललम्। शललम्। ह्यादीनां किम्? एकलः। असंयुक्तेति किम्? मल्लः। इगन्तानाञ्च द्व्यषाम् २६। आदिरुदात्तः। कृषिः:

इति द्वितीयः पादः।

---

अथ द्वितीयं प्राणीषात् १। ईषान्तस्य हलादेरित्यतः(उ५५७सू०) प्राक् द्वितीयाधिकारः। त्र्यषां प्राङ्मकरात् २। मकरवरूढेत्यतः (उ५५७सू०) प्राक् त्र्यचामित्यधिकारः स्वाङ्गानामकुर्वादीनाम् ३। कवर्ग रेफवकारादीनि वर्ज्जयित्वा त्र्यचां स्वाङ्गानां द्वितीयमुदात्तम्। ललाटम्। कुर्व्वादीनान्तु कपोलः। रसना। वदनम्। मादीनाञ्च ४। मलयः। मकरः। शादीनां शाकानाम् ५। शीतन्या। शतपुष्पा। पान्तानां गुर्व्वादीनाम् ६। पादपः। आतपः। लघ्वादीनान्तु अनूपम्। द्व्यचां तु नीपम्। युतान्यण्यन्तानाम् ७। युतम्

अयुतम्। अनि। धमनिः। अरणिः। विपणिः। मकरव-रूढ़पारेवतवितस्तेक्ष्वार्ज्जिद्राक्षाकलोमाकाष्ठायुतष्ठाकाशीना-मादिर्वा ९। एषामादिर्द्वितीयो वोदात्तः। मकरः। वरूढ इत्यादि। छन्दसि च १०। अमकाराद्यर्थआरम्भः। लक्ष्यानु-सारादादिर्द्वितीयं वोदात्तं ज्ञेयम्। कर्द्दमादीनाञ्च११। आदिर्द्वितीयं वोदात्तम्। "सुगन्धितेजनस्य ते वा" १२। आदिर्द्वितीयन्तोशब्दश्चेति त्रयः पर्य्यायेणोदात्ताः। सुगन्धि-तेजनाः। नपः फलान्तानाम् १३। आदिर्द्वितीयञ्चोदात्तम्। राजादनफलम्। यान्तस्यान्त्यात् पुर्व्वम् १४। कुलायः। थान्तस्य च नालघुनी १५। नाशब्दो लघु च उदात्ते स्तः। सनाथा सभा। शिशुमारोदुम्बरबलीवर्द्दोष्ट्रारपुरूरवसाञ्च १६। अन्त्यात् पूर्वमुदात्तं द्वितीयं वा। साङ्काश्यकाम्पि-ल्यनासिक्यदार्वाघाटानाम् १७। द्वितीयमुदात्तं वा। ईषा-न्तस्य ह्यादेरादिर्वा १८। ह्लीषा। लाङ्गलीषा। उशीर-दाशेरकपालपलालशैवालश्यामाकशरीरशरावहृदयहिरण्या-रण्यापत्यदेवराणाम् १९। एषामादिरुदात्तः स्यात्। महि-ष्याषाढयोर्ज्जायेष्टकाख्या चेत् २०। आदिरुदात्तः। महिषी जाया। "आषाढा उपदधाति"।

इति तृतीयः पादः।

---

शकटिशकट्योरक्षरमक्षरं पर्य्यायेण १। उदात्तम्। शकटिः। शकटी। गोष्ठजस्य ब्राह्मणनामधेयस्य २। अक्षरमक्षरं

पर्य्यायेणोदात्तम् । गोष्ठजः ब्राह्मणः । अन्यत्र गोष्ठजः पशुः । कृदुत्तरपदप्रकृति (३ सू०) स्वरेणान्तोदात्तः । पारावतस्योपोत्तमवर्ज्जम् ३ । शेषं क्रमेणोदात्तम् । पारावतः । धूम्रजानुमुञ्जकेशकालबालस्थालीपाकानामधूजलस्थानाम् ४ । एषाञ्चतुर्णां धूप्रभृतींश्चतुरो वर्ज्जयित्वा शिष्टानि क्रमेणोदात्तानि । धूम्रजानुः । मुञ्जकेशः । कालबालः । स्थालीपाकः । कपिकेशहरिकेशयोश्छन्दसि ५ । कपिकेशः । हरिकेशः । न्यङ्स्वरौ स्वरितौ ६ । स्पष्टम् । न्यङुत्तानः । "व्यचव्ययत् स्वः" । न्यर्वुदव्यल्कशयोरादिः ७ । स्वरितः स्यात् । तिल्यशिक्यकाश्मर्य्यधान्यकन्याराजन्यामनुष्याणामन्तः ८ । स्वरितः स्यात् । तिलानां भवनं चेत्रं तिल्यम् । यतोऽनाव इति (३५५०सू०)प्राप्ते । बिल्व भक्ष्यवीर्य्याणि छन्दसि ९ । अन्तस्वरितानि । त्वत्त्वसमसिमेत्यनुच्चानि १० । "स्तरीरु त्वत्" । "उत त्वः पश्यन्" । "नभन्तामन्यके समे" । सिमस्मै । सिमस्याथर्वणेऽन्तउदात्तः ११ । आथर्वण इति प्रायिकम् । तत्र दृष्टस्येत्येवंपरं वा । तेन "वासस्तनुते सिमस्मै" इत्यृग्वेदेऽपि भवत्येव । निपाता आद्युदात्ताः १२ । स्वाहा । उपसर्गाश्चाभिवर्जम् १३ । एवादीनामन्तः १४ । एवमादीनामिति पाठान्तरम् । एव । एवम् । नूनम् । सह । "ते पुत्र ! सूरिभिः सह" । सहस्य स इति (४७१सू०) प्रकरणे सहशब्द आद्युदात्त इति तु प्राञ्चः । तच्चिन्त्यम् । वाचादीनामुभावुदात्तौ १५ । उभौ ग्रहणमनुदात्तं पदमेकवर्ज्जमित्यस्य (३५२८सू०) बाधाय । चादयोऽनुदात्ताः १६ । स्पष्टम् । यथेति पादान्ते १७ । "तन्नेमिमृभवो यथा" । पादान्ते किम् ? यथा नो

अदितिः करत्। प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः १८। पटुपटुः। शेषं सर्वमनुदात्तम् १६। शेषं नित्यादिद्विरुक्तस्य परमित्यर्थः। प्रप्रायम्। दिवे दिवे।

इति शान्तनवाचार्य्यप्रणीतेषु फिट्सूत्रेषु तुरीयः पादः।

## आद्युदात्तश्च। ३। १। ३।

प्रत्ययआद्युदात्तः स्यात्। अग्निः। कर्त्तव्यम्।

## अनुदात्तौ सुप्पितौ। ३। १। ४।

पूर्वस्यापवादः "यज्ञस्यानयो युच्छति"। शप्तिपोरनुदात्तत्वे स्वरितप्रचयौ (१)।

## चितः। ६। १। १६३।

अन्त उदात्तः स्यात्। चितः सप्रकृतेर्बह्वकजर्थम् *। चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तो वाच्यइत्यर्थः। 'नभन्तामन्यके समे"। "यके सरस्वति"। तकत्सुते"।

## तद्धितस्य। ६। १। १६४।

चितस्तद्धितस्यान्त उदात्तः। पूर्वेण सिद्धे ञित्स्वरबाधनार्थमिदम्। कौञ्जायनाः। कौञ्जयनाः।

---

(१) युछ प्रमादे इति धातोः धातोः (उ५ ४ ४ पृ०) इत्यन्तोदात्तः ततः परौ शप्तिपौ पित्त्वेनानुदात्तौ उदात्तादनुदात्तस्येति,(उ५ ४१ पृ०) स्वरितस्य स्वरितात् संहितायामनुदात्तानामिति, (उ५ ४२ पृ०) प्रचय इत्याशयेनाह स्वरितेति।

**कितः । ६ । १ । १६५ ।**

कितस्तद्धितस्यान्त उदात्तः । "यदाग्नेयः" ।

**तिसृभ्यो जसः । ६ । १ । १६६ ।**

अन्त उदात्तः । "तिस्रो द्यावा सवितुः" ।

**सावेकाचस्तृतीयादिर्विभक्तिः । ६ । १ । १६८ ।**

साविति सप्तमीबहुवचनम् । तत्र य एकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता । "वाचा विरूपः" । सौ किम् ? राजभ्यादौ एकाचोऽपि(२) राजशब्दात् परस्य मा भूत् । राज्ञोनुते । "विधत्ते राजनि त्वे" । तृतीयादि किम् ? न ददर्श वाचम्

**अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे । ६ । १ । १६९ ।**

नित्याधिकारविहितसमासादन्यत्र यदुत्तरपदमन्तोदात्तमेकाच् ततःपरा तृतीया विभक्तिरन्तोदात्ता वा स्यात् । परमवाचा ।

**अञ्चेश्छन्दस्यसर्वनामस्थानाम् । ६ । १ । १७० ।**

अञ्चेः परा विभक्तिरुदात्ता । "इन्द्रोदधीचः" । चाविति(३५३९०) पदान्तोदात्तत्वं प्राप्तम् । तृतीयादिरित्यनुवर्त्तमानेऽसर्वनामस्थानग्रहणं शस्परिग्रहार्थम् "प्रतीचो बाहून्" ।

(२) अत्रानेकाचकस्य राजशब्दस्य तृतीयाद्यचि परेऽल्लोपेनैकाचकत्वादस्य प्रसङ्गो मा भूदिति सावित्यस्य व्यावर्त्त्यमिति भावः ।

ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः। ६। १। १७१।

ऊठ्-इदं-पदादि-अप्-पुम् रै-दिव-इत्येभ्योऽसर्वनामस्थान विभक्तिरुदात्ता। ऊठ्-प्रष्ठौहः। प्रष्ठौहा। ऊठ्युपधाग्रहणं कर्त्तव्यम्। इह मा भूत्। अक्षद्युवा। अक्षद्युवे। इदम्—"एभिर्नृभिर्नृतमः"। अन्वादेशेन अन्तोदात्तात् (उ५६०पृ०सू०)इत्यनुवृत्तेः। न च तत्रान्तोदात्ततास्तीति वाच्यम् इदमोन्वादेशेऽशनुदात्तस्तृतीयादाविति (१५४पृ०) सूत्रेणानुदात्तस्य अशोविधानात्। "प्रतेव स्नू माभ्याङ्गा अनु"। पद्दन्नोमास्हृन्निश इति षट् पदादयः। "पद्भ्यां भूमिः"। "दद्भिर्न जिह्वा"। "जायते मासिमासि"। "मनश्चिन्मे हृद आ"। अप्-"अपां फेनेन"। पुम्—"आस्मा तव पुंसः" रै-"राया वयम्"। "रायोभर्त्ता"। दिव्—"दिवे दिवे"।

अष्टनो दीर्घात्। ६। १। १७२।

शसादिर्विभक्तिरुदात्ता। "अष्टाभिर्दशभिः"।

शतुरनुमो नद्यजादी। ६। १। १७३।

अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात् परा नदी अजादिश्च शसादिर्विभक्तिरुदात्ता स्यात्। "अच्छाद्रवं प्रथमा जानती गच्छते"। अन्तोदात्तात् किम्? दधती। अभ्यस्तानामादिः (उ५४४पृ०) इत्याद्युदात्तः। अनुमः किम्? तुदन्ती। एकादेशोऽत्र उदात्तः। अदुपदेशात् परत्वाच्छतुर्लसार्वधातुक इति (उ५६५पृ०) निघातः।

उदात्तयणो(६)हल्पूर्वात्। ६। १। १७४।

---

(६) उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति(उ५४१पृ०)माप्ते इदं सूत्रम्।

उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात् परा नदी शसादिर्विभक्तिश्च उदात्ता स्यात् । "चोदयित्री सूनृतानाम्" । "एषा नेत्री" । "ऋतं देवाय कृण्वते" । सवित्रे ।

नोङ्धात्वोः । ६ । १ । १७५ ।

अनयोर्यणः परे शसादय उदात्ता न स्युः । ब्रह्मबन्ध्वा(७) "सेत् पृश्निः सुभ्वे"(८) ।

ह्रस्वनुड्भ्यां मतुप् । ६ । १ । १७६ ।

ह्रस्वान्तादन्तोदात्तान्नुटश्च परे मतुबुदात्तः । "योऽब्धिमान् उदधिमान् इयर्त्ति" । नुटः-"अक्षण्वन्तः"(९) । "कर्णवन्तः सखायः" । अन्तोदात्तात् किम् ? । "मा त्वा विददिषुमान्" । स्वरविधौ व्यञ्जनमविद्यमानवदित्येतदत्र नेष्यते । "मरुत्वा-इन्द्रः" । "नियुत्वा वायवागहि" । रेशब्दाच्च * । "रेवान् इन्द्रवतः" ।

नामन्यतरस्याम् । ६ । १ । १७७ ।

मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात् परो नामुदात्तो वा । "चेतन्ती सुमतीनाम्" ।

---

(७) ब्रह्मबन्ध्वेत्यत्र ऊङ्प्रत्ययस्वरेणोदात्तस्तेन सहैकादेशोऽप्युदात्तः तस्मात् परस्योदात्तत्वे प्रतिषिद्धे उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति (उ५४१पृ०) विभक्तिः स्वरिता ।

(८) सुभूशब्दः क्विबन्तः पित्त्वेनानुदात्तः धातोरिति(उ५४४पृ०) प्रकृतिस्वरेणाप्यनुदात्तः ओःसुपीति (१२२पृ०) यणि स्वरितत्वं प्राग्वत् ।

(९) अक्षिशब्दान्मतुपि छन्दस्यपीति(उ५२०पृ०)अनङि अनो नुटोऽसिद्धत्वात् पूर्वं नलोपस्ततो भूतपूर्वगत्या अनन्ततया नुटि अदुपधत्वात् मस्य वत्वम् ।

ङ्याश्छन्दसि। ६।१।१७८।

ङ्याः परो नामुदात्तो वा। "देवसेनानामभिभञ्जतीनाम्"। वेत्युक्तेर्नेह। "जयतीनां मरुतो यन्तु"।

षट्त्रिचतुर्भ्यो हलादिः। ६।१।१७९।

एभ्यो हलादिर्विभक्तिरुदात्ता। "आ षड्भिर्हूयमानः"। "त्रिभिष्ट्वं देव"।।

न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः। ६।१।१८२।

एभ्यः प्रागुक्तन्न(१०)। "गवां शता गोभ्यो मातु"। "शुनश्चिच्छेपम्"। सौ प्रथमैकवचनेऽवर्णान्तात्। "तेभ्योद्युम्नम् तेषां याहि सुधी हवम्"।

दिवोझल्। ६।१।१८३।

दिवःपरा झलादिर्विभक्तिर्नोदात्ता। "द्युभिरक्तुभिः"। झलिति किम्? "उप त्वाग्ने दिवे दिवे"।

नृ चान्यतरस्याम्। ६।१।१८४।

नुः परा झलादिर्वोदात्ता। "नृभिर्येमानः"।

तित् स्वरितम्। ६।१।१८५।

निगदे व्याख्यातम्। "क्व नूनम्।

(१०) सावेकाचइत्यादिना (७५६-पृ०) प्राप्तः प्रतिषिध्यते।

**तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्विङोः। ६। १। १८६।**

अस्मात् परं लसार्वधातुकमनुदात्तं स्यात्। तासि-कर्त्ता। कर्त्तारौ। कर्त्तारः। प्रत्ययस्वरापवादोऽयम्। अनुदात्तात्— "यआस्ते"। ङितः—"अभिचष्टे अनृतेभिः"। अदुपदेशात् "पुरुभुजा चनस्यतम्"। चित्स्वरोऽप्यनेन बाध्यते। "वर्द्धमानम् स्वे दमे"। तास्यादिभ्यः किम्? "अभिद्दधे गृणीतः"। उपदेश ग्रहणात्। नेह। "हतोऽह्लाण्यर्य्या"। लग्रहणं किम्? "कतीह निघ्नाना"। सार्वेति किम्? शिश्ये। अह्विङोः किम्? ह्नुते। यदधीते। विन्दीधिखिदिभ्यो नेति वक्तव्यम्*। "इन्धे राजा"। एतच्चानुदात्तस्य च यत्रेति (३५,३८४०) सूत्रभाष्ये स्थितम्।

**आदिः सिचोऽन्यतरस्याम्। ६। १। १८७।**

सिजन्तस्यादिरुदात्तो वा "यासिष्टं वर्त्तिरश्विनौ"।

**थलि च सेटीडन्तो वा। ६।१। १९६।**

सेटि थलन्ते पदे इडुदात्तः अन्तो वा आदिर्वा स्यात्। यदा नैते त्रयः तदा लितीति (३५,४५४०) प्रत्ययात् पूर्वमुदात्तः स्यात्। लुलविथ। अत्र चत्वारोऽपि पर्य्यायेणोदात्ताः।

**उपोत्तमं रिति। ६। १। २१७।**

रित्प्रत्ययान्त उपोत्तममुदात्तं स्यात्। "यदाहवनीये"।

इति प्रत्ययस्वराः।

---

**समासस्य। ६। १। २२३।**

अन्त उदात्तः स्यात्। "यज्ञश्रियम्"।

**बहुव्रीहौ प्रकृत्या पूर्वपदम्। ६। २। १।**

उदात्तस्वरितयोगि पूर्वपदं प्रकृत्या स्यात्। "सत्यश्चित्रश्रवस्तमः"। उदात्तेत्यादि किम्? सर्वानुदात्ते पूर्वपदे समासान्तोदात्तत्वमेव यथा स्यात्। "समपादः"।

**तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः। ६। २। २।**

सप्तैते पूर्वपदभूतास्तत्पुरुषे प्रकृत्या। तुल्यश्वेतः। कृत्य तुल्याख्या अजात्येति (३६५ सू०) तत्पुरुषः। गिरिणा काणः गिरिकाणः। "पतयन्मदयत्सखम्"। मदयति मादके इन्द्रे सखेति सप्तमीतत्पुरुषः। शस्त्रीश्यामा। अव्यये नञ्कुनिपातानामिति वाच्यम् *। "अयज्ञो वा एषः"। परिगणनं किम्? स्नात्वाकालकः। मुहूर्त्तसुखम्। भोज्योष्णम्।

**वर्णो वर्णेष्वनेते। ६। २। ३।**

वर्णवाचिन्युत्तरपदे एतवर्ज्जितवर्णवाचि पूर्वपदं प्रकृत्या तत्पुरुषे। कृष्णसारङ्गः। लोहितकल्माषः। कृष्णशब्दो नक्प्रत्ययान्तः। लोहितशब्द इतन्नन्तः। वर्णः किम्? परमकृष्णः। वर्णेषु किम्? कृष्णतिलाः। अनेते किम्? कृष्णैतः।

**गाधलवणयोः प्रमाणे। ६। २। ४।**

एतयोरुत्तरपदयोः प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात्। अरित्रगाधमुदकम् तत्प्रमाणमित्यर्थः। गोतलवणम् यावद्गवे दीयते तावदित्यर्थः। अरित्रशब्दइत्रान्तो मध्योदात्तः। यावत्प्रमाणमियत्तापरिच्छेदमात्रम् न पुनरायाम एव। प्रमाणे किम्? परमगाधम्।

दायाद्यन्दायादे। ६। २। ५।

तत्पुरुषे प्रकृत्या। धनदायादः। धनशब्दः क्युप्रत्ययान्तः प्रत्ययस्वरेणाद्युदात्तः। दायाद्यं किम्? परमदायादः।

प्रतिबन्धि चिरकृच्छ्रयोः। ६। २। ६।

प्रतिबन्धवाचि पूर्वपदं प्रकृत्या एतयोः परतस्तत्पुरुषे। गमनचिरम्। व्याहरणकृच्छ्रम्। गमनकारणविकलतया चिरकालभाविकृच्छ्रयोगितया वा प्रतिबन्धि जायते। प्रतिबन्धि किम्? मूत्रकृच्छ्रम्।

पदेऽपदेशे। ६। २। ७।

व्याजवाचिनि पदशब्दे उत्तरपदे पूर्वपदं प्रकृत्या तत्पुरुषे। मूत्रपदेन प्रस्थितः। उच्चारपदेन प्रस्थितः। मूत्रशब्दो घञन्तः उच्चारशब्दो घञन्तः थाथादिस्वरेण (३५८८४०) अन्तोदात्तः। अपदेशे किम्? विष्णुपदम्।

निवाते वातत्राणे। ६। २। ८।

निवातशब्दे परे वातत्राणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या

कुटीनिवातम्। कुड्यनिवातम्। कुटीशब्दो गौरादिङीषन्तः। कुड्यशब्दो ड्यगन्तः। यदन्त इत्यन्ये वातत्राणे किम्?। राज्ञ निवाते वसति। निवातशब्दो रूढः पार्श्वे

## शारदेऽनार्त्तवे। ६। २। ९।

ऋतौ भवमार्त्तवम् तदन्यवाचिनि शारदशब्दे परे तत्पुरुषे पूर्वं पदं प्रकृतिस्वरं स्यात्। रज्जुशारदमुदकम्। शारद-शब्दो नूतनार्थः। तस्यास्वपदविग्रहः। "रज्ज्वोः सद्य उद्धृतम्"। रज्जुशब्दः सृजेरसुन् च(उ२८२४०)इत्याद्युदात्तोव्युत्पादितः। अनार्तवे किम्? उत्तमशारदम्।

## अध्वर्य्युकषाययोर्ज्जातौ। ६। २। १०।

एतयोः परतो जातिवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम्। कठाध्वर्य्युः। दौवारिककषायम्। कठशब्दः पचाद्यजन्तः। तस्माद्वैशम्पायनान्तेवासिभ्यश्चेति (५८०सू०) णिनेः कठचर-काल्लुगिति(३५८१सू०)लुक्। द्वारे नियुक्त इति ठक्यन्तोदात्तः। जातौ किम्? परमाध्वर्युः।

## सदृशप्रतिरूपयोः सादृश्ये। ६। २। ११।

अनयोः पूर्वं प्रकृत्या। पितृसदृशः। सादृश्ये किम्? परम सदृशः। समासार्थोऽत्र पूज्यमानता (१)न सादृश्यम्।

(१) सदृशादिपदोत्तरकतयैव सादृश्ये लब्धे पुनस्तद्ग्रहणं पूज्यतासहितसादृश्य-बोधनार्थमित्याह पूज्यमानतेति तथाच पूज्यप्रतियोगिबोधनार्थं साद-श्यमुपात्तमिति भावः।

## द्विगौ प्रमाणे। ६। २।१२।

द्विगावुत्तरपदे प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम्। प्राच्यसप्तसमः। सप्त समाः प्रमाणमस्य। प्रमाणे लो द्विगोर्नित्यमिति (२२१पृ०) मात्रचो लुक्। प्राच्यशब्द आद्युदात्तः। प्राच्यश्चासौ सप्तसमश्च प्राच्यसप्तसमः (२)। द्विगौ किम्? व्रीहिप्रस्थः। प्रमाणे किम्? परमसप्तसमः।

## गन्तव्यपण्यं वाणिजे। ६। २। १३।

वाणिजशब्दे परे तत्पुरुषे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृतिस्वरम्। मद्रवाणिजः। गजवाणिजः। मद्रशब्दो रक्प्रत्ययान्तः सप्तमीसमासः। गन्तव्येति किम्? परमवाणिजः।

## मात्रोपज्ञोपक्रमच्छाये नपुंसके। ६। २। १४।

मात्रादिषु परतो नपुंसकवाचिनि तत्पुरुषे तथा। भिक्षाया स्तुल्यं प्रमाणं भिक्षामात्रम्। भिक्षाशब्दो गुरोश्च हलः(३४५पृ०) इत्यप्रत्ययान्तः। पाणिन्युपज्ञम्। पाणिनिशब्दोऽन्तोदात्तः। नन्दोपक्रमम्। नन्दशब्दः पचाद्यजन्तः। इषुच्छायम्। इषुशब्द आद्युदात्तः नित्त्वात्। नपुंसके किम्? कुड्यच्छाया

## सुखप्रिययोर्हिते। ६।२। १५।

एतयोः परयोर्हितवाचिनि तत्पुरुषे तथा। गमनसुखम्। गमनप्रियम्। गमनशब्दे लित्स्वरः। हिते किम्? परमसुखम्।

---

(२) दिक्संख्ये संज्ञायामिति (३५५पृ०) द्विगुत्वादस्य सूत्रस्य प्रवृत्तिः।

प्रीतौ च। ६। २। १६।

प्रीतौ गम्यायां प्रागुक्तम्। ब्राह्मणसुखं पायसम्। छात्रप्रियोऽनध्यायः। ब्राह्मणच्छात्रशब्दौ प्रत्ययस्वरेणान्तोदात्तौ। प्रीतौ किम्? राजसुखम्।

स्वं स्वामिनि। ६। २। १७।

स्वामिशब्दे परे स्ववाचिनि पूर्वपदन्तथा। गोस्वामी। स्वङ्किम्? परमस्वामी।

पत्यावैश्वर्य्ये। ६। २। १८।

"दमूना गृहपतिर्दमे"।

न भूवाक्चिद्दिधिषु। ६। २। १९।

पतिशब्दे परे ऐश्वर्य्यवाचिनि तत्पुरुषे नैतानि प्रकृत्या। भुवःपतिः भूपतिः। वाक्पतिः। चित्पतिः। दिधिषुपतिः।

वा भुवनम्। ६। २। २०।

उक्तविषये। भुवनपतिः। भूसूधूभ्रस्जिभ्य इति (उ४००सू०) क्युन्नन्तो भुवनशब्दः।

आशङ्काबाधनेदीयस्सु सम्भावने। ६। २। २१

अस्तित्वाध्यवसायः (२) सम्भावनम्। गमनाशङ्कमस्ति। गमना-

---

(२) अस्तित्वविषयकोत्कटकोटिकज्ञानमित्यर्थः।

बाधम् । गमननेदीयः । गमनमाशङ्क्यते आबाध्यते निकट-तरमिति वा सम्भाव्यते । सम्भावने किम् ? परमनेदीयः ।

### पूर्वं भूतपूर्वे । ६ । २ । २२ ।

आढ्यो भूतपूर्व्वः । आढ्य (४) पूर्व्वः । पूर्व्वशब्दो वृत्तिविषये भूतपूर्वे वर्त्तते । भूतपूर्वे किम् ?? परमपूर्वः ।

### सविधसनीडसमर्य्यादसवेशसदेशेषु सामीप्ये ६ । २ । २३ ।

एषु पूर्व्वं प्रकृत्या । मद्रसविधम् । गान्धारसनीडम् । काश्मीरसमर्य्यादम् । मद्रसवेशम् । मद्रसदेशम् । सामीप्ये किम् ? सह मर्य्यादया समर्य्यादं चेत्रम् । चैत्रसमर्य्यादम् ।

### विस्पष्टादीनि गुणवचनेषु(५) । ६ । २ ।२४ ।

विस्पष्टकटुकम् । विस्पष्टशब्दो गतिरनन्तरः (३५७७सू०) इत्याद्युदात्तः । विस्पष्टेति किम् ? परमलवणम् । गुणेति किम् ? विस्पष्टब्राह्मणः । विस्पष्ट (६) विचित्र व्यक्त सम्पन्न पण्डित कुशल चपल निपुण ।

---

(४) आङ्पूर्वात् ध्यायतेः के पृषोदरादित्वात् ढत्वे आढ्य इति सिद्धम् ।

(५) विस्पष्टादीनि गुणवचनेषु परेषु प्रकृत्येत्यर्थः । अत्र विस्पष्टानि प्रवृत्ति-निमित्तस्य विशेषणानि न द्रव्यस्य, तथा च कटुकादिशब्दैर्गुणवद्द्रव्यमभिधीयते तदेकदेशे कटुकगुणे विस्पष्टाद्यन्वय एवञ्च सामानाधिकरण्याभावेऽपि मयूरव्यंसकादित्वात् समासः ।

(६) विस्पष्टे गतिस्वरः विचित्रेऽव्ययस्वरः । व्यक्तो गतिस्वरेणाद्युदात्तः सम्पन्नोऽन्तोदात्तः । पण्डितकुशलचपलनिपुणा अन्तोदात्ताः ।

अज्यावमकन्पापवत्सु भावे कर्म्मधारये । ६ । २ । २५ ।

अ-ज्य-अवम-कन्-इत्यादेश्चवति पापवाचिनि चोत्तरपदे भाववाचि पूर्व्वपदं प्रकृत्या । गमनश्रेष्ठम् । गमनज्यायः । गमनावमम् । गमनकनिष्ठम् । गमनपापिष्ठम् । श्रेत्यादीति किम्? गमनशोभनम् । भावे किम्? गम्यतेऽनेनेति गमनं श्रेयो गमनश्रेयः । कर्म्मेति किम्? षष्ठीसमासे मा भूत् ।

कुमारश्च । ६ । २ । २६ ।

कर्म्मधारये । कुमारश्रमणा: । कुमारशब्दोऽन्तोदात्तः ।

आदिः प्रत्येनसि । ६ । २ । २७ ।

कुमारस्यादिरुदात्तः प्रत्येनसि परे कर्म्मधारये । प्रतिगतमेनोऽस्य प्रत्येनाः । कुमारप्रत्येनाः ।

पूगेष्वन्यतरस्याम् । ६ । २ । २८ ।

पूगा गणास्तेपूक्तं वा । कुमारचातकाः । कुमारजीमूताः । आद्युदात्तत्वाभावे कुमारश्चेत्येव भवति ।

इगन्तकालकपालभगालशरावेषु द्विगौ । ६ । २ । २९ ।

एषु परेषु पूर्व्वं प्रकृत्या । पञ्चारत्नयः प्रमाणमस्य पञ्चारत्निः । पञ्च मासान् भूतः पञ्चमास्यः । दशमास्यः । तमधीष्टः (६६३९०)

इत्यधिकारे द्विगोर्यत् (६४४पृ०)। पञ्चकपालः। पञ्चभगालः। पञ्चशरावः(७)। न्नः संख्यायाम् (७५५४पृ०)इति पञ्चशब्द आद्युदात्तः। इगन्तादिषु किम्? परमारत्निः। द्विगौ किम्? परमारत्निः।

**बह्वन्यतरस्याम्। ६।२।३०।**

बहुशब्दस्तथा वा। बह्वरत्निः २। बहुमास्यः २। बहुकपालः २। बहुशब्दोऽन्तोदात्तः। तस्य यणि सत्युदात्तस्वरितयोरिति (५४१पृ०) वा भवति।

**दिष्टिवितस्त्योश्च। ६।२।३१।**

एतयोः परतः पूर्वपदं प्रकृत्या वा द्विगौ। पञ्चदिष्टिः २। पञ्चवितस्तिः २।

**सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात्। ६।२।३२।**

अकालवाचि सप्तम्यन्तं प्रकृत्या सिद्धादिषु। साङ्काश्यसिद्धः। साङ्काश्येति ण्यान्तः। आतपशुष्कः। भ्राष्ट्रपक्वः। भ्राष्ट्रेति ष्ट्रन्नन्तः। चक्रबन्धः। चक्रशब्दोऽन्तोदात्तः। अकालात् किम्? पूर्वाह्णसिद्धः। कृत्स्वरेण बाधितः सप्तमीस्वरः प्रतिप्रसूयते।

**परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु। ६।२।३३।**

---

(७) पञ्चसु कपालेषु भगालेषु शरावेसु संस्कृत इति यथाक्रमं विग्रहः। भगालेषु पात्रविशेषेष्वित्यर्थः।

एते प्रकृत्या वर्ज्यमानवाचिनि अहोरात्रावयववाचिनि चोत्तरपदे। परित्रिगर्तं वृष्टो देवः। प्रतिपूर्वाह्णम्। प्रत्यपररात्रम्। उपपूर्वरात्रम्। अपत्रिगर्तम्। उपसर्गा आद्युदात्ता अभिवर्ज्जम् *। बहुव्रीहितत्पुरुषयोः सिद्धत्वादव्ययीभावार्थमिदम्। अपपर्य्योरेव वर्ज्यमानोत्तरपदम् तयोरेव वर्ज्यमानार्थत्वात्। अहोरात्रावयवा अपि वर्ज्यमाना एव तयोर्भवन्ति। वर्ज्येति किम्। अग्निं प्रति।

**राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु। ६।२।३४।**

राजन्यवाचिनां बहुवचनान्तानामन्धकवृष्णिषु वर्तमाने द्वन्द्वे पूर्वपदं प्रकृत्या। श्वाफल्कचैत्रकाः। शिनिवासुदेवाः। शिनिराद्युदात्तो लक्षणया तदपत्ये वर्तते। राजन्येति किम्? द्वैप्यभैमायनाः। द्वीपे भवा द्वैप्याः। भैमेरपत्यं युवा भैमायनः। अन्धकवृष्णय एते न तु राजन्याः। राजन्यग्रहणमिहाभिषिक्तवंश्यानां क्षत्रियाणां ग्रहणार्थम् नैते तथा। बहुवचनं किम्? सङ्कर्षणवासुदेवौ। द्वन्द्वे किम् वृष्णीनां—कुमाराः। वृष्णिकुमाराः। अन्धकवृष्णिषु किम्? कुरुपञ्चालाः।

**संख्या। ६। २। ३५।**

संख्यावाचि पूर्वपदं प्रकृत्या द्वन्द्वे। द्वादश। त्रयोदश। त्रयसादेशोऽन्तोदात्तो निपात्यते।

**आचार्य्योपसर्ज्जनश्चान्तेवासी। ६। २। ३६।**

आचार्य्योपसर्जनान्तेवासिनां द्वन्द्वे पूर्वपदं प्रकृत्या। पाणि-

नीयवौढ़ीयाः । कृत्स्वरेण मध्योदात्तावेतौ । आचार्य्योपसर्जनग्रहणं द्वन्द्वविशेषणम् । सकलो द्वन्द्व आचार्य्योपसर्जनो यथा विज्ञायेत तेनेह न । पाणिनीयदेवदत्तौ । आचार्य्येति किम् ? छान्दसवैयाकरणाः । अन्तेवासी किम् ? आपिशलपाणिनीये शास्त्रे ।

## कार्त्तकौजपादयश्च (८) । ६ । २ । ३७ ।

एषां द्वन्द्वे पूर्वपदं प्रकृत्या । कार्तकौजपौ । कृतस्येदं कुजपस्येदमित्यणन्तावेतौ । सावर्णिमाण्डूकेयौ ।

## महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु । ६ । २ । ३८ ।

महच्छब्दः प्रकृत्या व्रीह्यादिषु दशसु । महाव्रीहिः । महापराह्णः । महागृष्टिः । महेष्वासः । महाहैलिहिलः । महच्छब्दोऽन्तोदात्तः । सन्महदिति (२६२४०) प्रतिपदोक्तसमासे एवायं स्वरः । नेह महतो व्रीहिर्महद्व्रीहिः ।

## क्षुल्लकश्च वैश्वदेवे । ६ । २ । ३९ ।

(८) कार्त्तकौजपौ सावर्णिमाण्डूकेयौ अवन्त्यश्मकाः पैलश्यापर्णेयाः कपिश्यापर्णेयाः शैतिकाक्षपाञ्चालेयाः कटुकवार्चलेयाः शाकलशुनकाः शाकलशणकाः शणकबाभ्रवाः आर्च्चाभिमौद्गलाः कुन्तिसुराष्ट्राः चिन्तिसुराष्ट्राः तण्डवतण्डाः अविमत्तकामविद्धाः बाभ्रवशालङ्कायनाः बाभ्रवदानच्युताः कठकालापाः कठकौथुमाः कौथुमलौकाक्षाः स्त्रीकुमारम् मौदपैप्पलादाः वत्सजरन्तः सौश्रुतपार्थवाः जरामृत्यू याज्यानुवाक्ये कार्त्तकौजपादिः ।

चाम्महान्। चुल्लवैश्वदेवम्। महावैश्वदेवम्। चुधं लातीति चुल्लः। तस्मादन्नातादिषु (७।६५० सू०) केऽन्तोदात्तः।

## उष्ट्रः सादिवाम्योः। ६। २। ४०।

उष्ट्रसादिः। उष्ट्रवामिः। उपेष्टृणि उष्ट्रशब्द आद्युदात्तः।

## गौः सादसादिसारथिषु। ६। २। ४१।

गोसादः। गोसादिः। गोसारथिः।

## कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूः पण्यकम्बलोदासीभाराणाञ्च। ६। २। ४२।

एषां सप्तानां समासानान्दासीभारादेश्च पूर्वपदं प्रकृत्या। कुरूणाङ्गार्हपतं कुरुगार्हपतम्। उप्रत्ययान्तः कुरुः। वृजेरिति वाच्यम्*। वृजिगार्हपतम्। वृजिराद्युदात्तः। रिक्तो गुरुः रिक्तगुरुः। रिक्ते विभाषेति (७५।४६ पृ०) रिक्तशब्द आद्युदात्तः। असूता जरती असूतजरती। अश्लीला दृढरूपा अश्लीलदृढरूपा। अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः। श्रीर्यस्यास्ति तत् श्लीलम् सिध्मादि(६८०।४०)त्वाल्लच्। कपिलकादि ८,२,१८सू० वा० त्वाल्लत्वम्। पारे वडवेव पारेवडवा। निपातनादिवार्थे समासो विभक्त्यलोपश्च। पारशब्दो घृतादि (७५५।४पृ०) त्वादन्तोदात्तः। तैतिली कद्रूः तैतिलकद्रूः। तितिलिनोऽपत्यं छात्रो वा इत्यणन्तः। पण्यशब्दो यदन्तत्वादाद्युदात्तः। पण्यकम्बलः। संज्ञायामिति वक्तव्यम्*। अन्यत्र पणितव्ये कम्बले समासा-

न्तोदात्तत्वमेव। प्रतिपदोक्ते समासे प्रकृत्या इत्येष स्वरो विहितः। दास्या भारो दासीभारः। देवहूतिः। यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वमिष्यते न विशिष्य वचनं विहितं स सर्वोऽपि दासीभारादिषु द्रष्टव्यः। "सुवा एष पुरन्ध्रग्नाः" पुरं शरीरन्ध्रियतेऽस्यामिति कर्म्मण्यधिकरणे चेति(७४४८७०)क्रिप्रत्ययः *। अलुक् छान्दसः। नञ्विषयस्य (७५५४७०) इत्याद्युदात्तः पुरुशब्दः।

चतुर्थी तदर्थे। ६। २। ४३।

चतुर्थ्यन्तार्थाय यत्, तद्वाचिन्युत्तरपदे चतुर्थ्यन्तं प्रकृत्या। यूपाय दारु यूपदारु

अर्थे। ६। २। ४४।

अर्थे परे चतुर्थ्यन्तं प्रकृत्या। देवार्थम्।

क्ते च। ६। २। ४५।

क्तान्तेपरे चतुर्थ्यन्तं प्रकृत्या। गोहितम्।

कर्म्मधारयेऽनिष्ठा। ६। २। ४६।

क्तान्ते परे पूर्वमनिष्ठान्तं प्रकृत्या। श्रेणिकृताः। श्रेणिशब्द आद्युदात्तः। पूगकृताः। पूगशब्दोऽन्तोदात्तः। कर्म्मधारये किम्? श्रेण्या कृतं श्रेणिकृतम्। अनिष्ठा किम्? कृताकृतम्।

अहीने द्वितीया। ६। २। ४७।

अहीनवाचिनि समासे क्तान्ते परे द्वितीयान्तं प्रकृत्या। कष्टश्रितः। ग्रामगतः। कष्टशब्दोऽन्तोदात्तः। ग्रामशब्दो

* बाहुलकादन्यत्रापीत्युक्तेः म्रियते धित्वाभावेऽपि क्विरित्याशये न तथोक्तम।

नित्स्वरेण (७५४७पृ०सू०) आद्युदात्तः। अहीने किम्? कान्तारातीतः। अनुपसर्गइति वक्तव्यम् *। नेह। सुखप्राप्तः। याथेत्यस्य (७५६८पृ०) अपवादोऽयम्।

## तृतीया कर्म्मणि। ६। २। ४८।

कर्म्मवाचके क्तान्ते परे तृतीयान्तं प्रकृत्या। रुद्रहतः। महाराजहतः। रुद्रो रगन्तः (७२८६पृ० ७ सू०)। कर्मणि किम्? रथेनायातो रथायातः।

## गतिरनन्तरः। ६। २। ४९।

कर्मार्थे क्तान्ते परेऽव्यवहितो गतिः प्रकृत्या। पुरोहितम्। अनन्तरः किम्? अभ्युद्धृतः। कारकपूर्व्वपदस्य तु सतिशिष्टस्याथादिस्वर (७५८८पृ०) एव। दूरादागतः। याथेत्यस्यापवादः।

## तादौ च निति कृत्यतौ। ६। २। ५०।

तकारादौ निति तुशब्दवर्ज्जिते कृति परेऽनन्तरो गतिः प्रकृत्या। "अग्ने राज्ञोऽन्तमस्य प्रभृतौ सङ्गतिं गोः"। कृत्स्वरापवादः। तादौ किम्? प्रजल्पाकः। निति किम्? प्रकर्त्ता। तृजन्तः। अतौ किम्? आगन्तुः।

## तवै चान्तश्च युगपत्। ६। २। ५१।

तवैप्रत्ययान्तस्यान्त उदात्तो गतिश्चानन्तरः प्रकृत्या युगपच्चैतदुभयं स्यात्। अन्वेतवै। कृत्स्वरापवादः।

## अनिगन्तोऽञ्चतौ वप्रत्यये। ६। २। ५२।

अनिगन्तगतिर्वप्रत्ययान्त्येऽञ्चतौ परे प्रकृत्या । "ये पराञ्चस्तान्" । अनिगन्तइति किम् ? प्रत्यञ्चोयन्तु । चुस्वरात् (७५२६पृ०)परत्वादयमेव । "जहि वृष्णानि कृणुही पराचः" । वप्रत्यये किम् ? उदञ्चनम् ।

## न्यधी च । ६ । २ । ५३ ।

वप्रत्ययान्तेऽञ्चताविगन्तावपि न्यधी प्रकृत्या । न्यङ्त्तानः । उदात्तस्वरितयोर्यणः(७५४१पृ०)इति अञ्चतेरकारः स्वरितः । अध्यङ् ।

## ईषदन्यतरस्याम् । ६ । २ । ५४ ।

ईषत्कडारः २ । ईषदित्ययमन्तोदात्तः । ईषद्भेद इत्यादौ कृत्स्वरएव ।

## हिरण्यपरिमाणन्धने । ६ । २ । ५५ ।

सुवर्णपरिमाणवाचि पूर्वम्पदं वा प्रकृत्या धने । द्वे सुवर्णे परिमाणमस्येति द्विसुवर्णम् २ तदेव धनम् । बहुव्रीहावपि परत्वाद्विकल्पएव । हिरण्यं किम् ? प्रस्थधनम् । परिमाणं किम् ? काञ्चनधनम् । धने किम् ? निष्कमाला ।

## प्रथमोऽचिरोपसम्पत्तौ । ६ । २ । ५६ ।

प्रथमशब्दो वा प्रकृत्याभिनवत्वे । प्रथमवैयाकरणः २ । सम्प्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः । प्रथमशब्दः प्रथेरमजन्तः (७४३१पृ०सू०) । अचिरेति किम् ? प्रथमो वैयाकरणः ।

## कतरकतमौ कर्म्मधारये । ६ । २ । ५७ ।

वा प्रकृत्या। कतरकठः २। कर्म्मधारयग्रहणमुत्तरार्थम्। इह तु प्रतिपदोक्तत्वादेव सिद्धम्।

### आर्य्यो ब्राह्मणकुमारयोः। ६। २। ५८।

आर्य्यब्राह्मणः २। आर्य्यकुमारः २। आर्य्यो ण्यदन्तत्वादन्तस्वरितः (७५६३१पृ०)। आर्य्यः किम्? परमब्राह्मणः। ब्राह्मणादीति किम्? आर्य्यक्षत्रियः। कर्म्मधारय इत्येव।

### राजा च। ६। २। ५९।

ब्राह्मणकुमारयोः परतो राजा वा प्रकृत्या कर्म्मधारये। राजब्राह्मणः २। राजकुमारः २। योगविभाग उत्तरार्थः।

### षष्ठी प्रत्येनसि। ६। २। ६०।

षष्ठ्यन्तो राजा प्रत्येनसि परे वा प्रकृत्या। राजप्रत्येनाः २। षष्ठी किम्? राजा चासौ प्रत्येनाश्चेत्यत्र न।

### क्ते नित्यार्थे। ६। २। ६१।

क्तान्ते परे नित्यार्थे समासे पूर्वं वा प्रकृत्या। नित्यप्रहसितः २। काला इति (३३७पृ०) द्वितीयासमासोऽयम्। नित्यशब्दस्त्यबन्त आद्युदात्तः। हसितइति थाथादि(७५८८पृ०)स्वरेणान्तोदात्तः। नित्यार्थे किम्? मुहूर्त्तप्रहसितः।

### ग्रामः शिल्पिनि। ६। २६। २।

वा प्रकृत्या। ग्रामनापितः २। ग्रामशब्दः आद्युदात्तः।

ग्रामः किम् ? परमनापितः । शिल्पिनि किम् ? ग्रामरथ्या ।

## राजा च प्रशंसायाम् । ६ । २ । ६३ ।

शिल्पिवाचिनि परे प्रशंसार्थं राजपदं वा प्रकृत्या । राजनापितः २ । राजकुलालः २ । प्रशंसायाङ्किम् ? राजनापितः । शिल्पिनि किम् ? राजहस्ती ।

## आदिरुदात्तः । ६ । २ । ६४ ।

अधिकारोऽयम् ।

## सप्तमीहारिणौ धर्म्येऽहरणे । ६ । २ । ६५ ।

सप्तम्यन्तं हारिवाचि च आद्युदात्तं धर्म्ये परे । देयं यः-स्वीकरोति स हारीत्युच्यते । धर्म्यमित्याचारनियतं देयम् । मुकुटेकार्षापणम् । हलेद्विपदिका । संज्ञायामिति (३५२४०) सप्तमीसमासः । कारनाम्नि चेत्यलुक् (४५६४०) । याज्ञिकाश्वः । वैयाकरणहस्ती । क्वचिदयमाचारः मुकुटादिषु कार्षापणादि दातव्यम् । याज्ञिकादीनां त्वश्वादिरिति । धर्म्य इति किम् ? स्तम्बेरमः । अहरणे किम् ? वाडवहरणम् । वडवाया अयं वाडवः तस्य वीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं यद्दीयते तद्धरणमित्युच्यते । परोऽपि कृत्स्वरो हारिस्वरेण बाध्यत इत्यहरणे इति निषेधेन ज्ञाप्यते । तेन वाडवहार्य्यमिति हारिस्वरः सिद्ध्यति ।

## युक्ते च । ६ । २ । ६६ ।

युक्तवाचिनि समासे पूर्वमाद्युदात्तम्। गोवल्लवः। "कर्त्तव्ये तत्परो युक्तः"।

विभाषाऽध्यक्षे। ६। २। ६७।

गवाध्यक्षः २।

पापञ्च शिल्पिनि। ६। २। ६८।

पापनापितः। पापाणके इति (२५८४०) प्रतिपदोक्तस्यैव ग्रहणात् षष्ठीसमासे न।

गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे। ६। २। ६९।

भार्य्यासौश्रुतः। सुश्रुतापत्यस्य भार्य्याप्रधानतया क्षेपः। अन्तेवासी। कुमारीदाक्षाः। ओदनपाणिनीयाः। कुमार्य्यादिलाभकामा ये दाक्ष्यादिभिः प्रोक्तानि शास्त्राण्यधीयन्ते तएवं क्षिप्यन्ते। भिक्षामाणवः। भिक्षां लप्स्येऽहमिति माणवः। भयब्राह्मणः। भयेन ब्राह्मणः सम्पद्यते। गोत्रादिषु किम्? दासीश्रोत्रियः। क्षेपे किम्? परमब्राह्मणः।

अङ्गानि मैरेये। ६। २। ७०।

मद्यविशेषो मैरेयः। मधुमैरेयः। मधुविकारस्य तस्य मध्वङ्गम्। अङ्गानि किम्? परममैरेयः। मैरेये किम्? पुष्पासवः।

भक्ताख्यास्तदर्थेषु। ६। २। ७१।

भक्तमन्नम्। भिक्षाकंसः। भाजीकंसः। भिक्षादयोऽन्नविशेषाः। भक्ताख्याः किम्? समाशशालयः। समशनं समाश इति क्रियामात्रमुच्यते। तदर्थेषु किम्? भिक्षाप्रियः। बहुव्रीहिरयमत्र पूर्वपदमन्तोदात्तम्।

## गोबिडालसिंहसैन्धवेषूपमाने। ६। २। ७२।

धान्यगवः। गोबिडालः। तृणसिंहः। सक्तुसैन्धवः। धान्यं गौरिवेति विग्रहः। व्याघ्रादिः, (६)। गवाकृत्या सन्निवेशितत्वाद्धान्यं धान्यगवशब्देनोच्यते। उपमाने किम्? परमसिंहः।

## अके जीविकार्थे। ६। २। ७३।

अकप्रत्ययान्ते उत्तरपदे जीविकार्थवाचिनि समासे पूर्व्वपदमाद्युदात्तम्। दन्तलेखकः। यस्य दन्तलेखनेन जीविका। नित्यं क्रीडेति(२४७८०)समासः। अके किम्? रमणीयकर्त्ता। जीविकार्थे किम्? इक्षुभक्षिकां मे धारयसि।

## प्राचां क्रीडायाम्। ६। २। ७४।

प्राग्देशवर्त्तिनां या क्रीड़ा तद्वाचिनि समासे अकप्रत्ययान्ते परे पूर्व्वमाद्युदात्तं स्यात्। उद्दालकपुष्पभञ्जिका। संज्ञायामिति (३४५१सू०) ण्वुल्। प्राचां किम्? जीवपुत्रप्रचायिका। इयमुदीचां क्रीड़ा। क्रीड़ायां किम्? तव पुष्पप्रचायिका। पर्य्याये ण्वुच् (३४५४सू०)।

(६) उपमितं व्याघ्रादिभिः (३५६सू०) इत्यनेन समास इत्याह व्याघ्रादिरिति।

### अणि नियुक्ते। ६। २। ७५।

अणन्ते परे नियुक्तवाचिनि समासे पूर्व्वमाद्युदात्तम्। छत्र-धारः। नियुक्ते किम्? काण्डलावः।

### शिल्पिनि चाकृञः। ६। २। ७६।

शिल्पिवाचिनि समासे अणन्ते परे पूर्व्वमाद्युदात्तं स चेदण् कृञ्परो न भवति। तन्तुवायः। शिल्पिनि किम्? काण्ड-लावः। अकृञः किम्? कुम्भकारः।

### संज्ञायाञ्च। ६। २। ७७।

अणन्ते परे। तन्तुवायो नाम कृमिः। अकृञ इत्येव। रथ-कारो नाम ब्राह्मणः।

### गोतन्तियवम्पाले। ६। २। ७८।

गोपालः। तन्तिपालः। यवपालः। अनियुक्तार्थो योगः। गो इति किम्? वत्सपालः। पाले इति किम्? गोरक्षः।

### णिनि। ६। २। ७९।

पुष्पहारी।

### उपमानं शब्दार्थप्रकृतावेव। ६। २। ८०।

उपमानवाचि पूर्व्वं णिन्यन्ते परे आद्युदात्तम्। उष्ट्रक्रोशी। ध्वाङ्क्षरावी। उपमानग्रहणमस्य पूर्वयोगस्य च विषयविभा-गार्थम्। शब्दार्थप्रकृतौ किम्? वृकवञ्ची। प्रकृतिग्रहणं किम्?

प्रकृतिरेव यत्रोपसर्गनिरपेक्षा शब्दार्थी (१०) तत्रैव यथा स्यात्। इह मा भूत् गर्द्दभोच्चारी।

युक्तारोह्यादयश्च (११)। ६। २। ८१।

आद्युदात्ताः। युक्तारोही। आगतयोधी। क्षीरहोता।

दीर्घकाशतुषभ्राष्ट्रवटं जे। ६। २। ८२।

कुटीजः। काशजः। तुषजः। भ्राष्ट्रजः। वटजः।

अन्त्यात्पूर्व्वं बह्वचः। ६। २। ८३।

बह्वचः पूर्व्वस्यान्त्यात्पूर्व्वपदमुदात्तं जे उत्तरपदे। उपसरजः। आमलकीजः। बह्वचः किम्? दग्धजानि तृणानि।

ग्रामेऽनिवसन्तः। ६। २ ८४।

ग्रामे परे पूर्व्वपदमुदात्तम् तच्चेन्निवसद्वाचि न। मल्लग्रामः। ग्रामशब्दोऽत्र समूहवाची। देवग्रामः देवस्वामिकः। अनिवसन्तः किम्? दाक्षिग्रामः दाक्षिनिवासः।

घोषादिषु (१२) च। ६। २। ८५।

---

(१०) शब्दएवार्थो यस्याः इति विग्रहः शब्दस्य चार्थेन तादात्म्यार्थत्वम्।

(११) युक्तारोही आगतरोही आगतयोधी आगतपश्ची आगतनन्दी आगतप्रहारी आगतमत्स्यः क्षीरहोता भगिनीभर्त्ता ग्रामगोधुक् अश्वत्रिरात्रः गर्गत्रिरात्रः व्युष्टित्रिरात्रः गणपादः एकशितिपाद् पात्रेसम्मितादयश्च (३५२९०) युक्तारोह्यादिः।

(१२) घोष इत्येवमादिषु चोत्तरपदेषु पूर्व्वपदमाद्युदात्तं स्यात्। घोष कट वल्लभ ह्रद वदरी पिङ्गल पिशङ्ग माला रक्षा शाला कूट शाल्मली अश्वत्थ तृण शिल्पी मुनि प्रेक्षा घोषादिः।

दाक्षिघोषः । दाक्षिकटः । दाक्षिहदः ।

**छात्र्यादयः (१३) शालायाम् । ६ । २ । ८६ ।**

छात्रिशाला । व्याडिशाला । यदापि शालान्तः समासो नपुंसकलिङ्गो भवति तदापि तत्पुरुषे शालायान्नपुंसक (५६२पृ०सू०) इत्येतस्मात्पूर्वविप्रतिषेधेनायमेव स्वरः । छात्रिशालम् ।

**प्रस्थेऽवृद्धमकर्क्यादीनाम् । ६ । २ । ८७ ।**

प्रस्थशब्दे उत्तरपदे कर्क्यादि (१४) वर्ज्जितमवृद्धम्पूर्वपदमाद्युदात्तं स्यात् । इन्द्रप्रस्थः । अवृद्धं किम् ? दाक्षिप्रस्थः । अकर्क्यादीनामिति किम् ? कर्कीप्रस्थः । मकरीप्रस्थः ।

**मालादीनाञ्च (१४) । ६ । २ । ८८ ।**

वृद्धार्थमिदम् । मालाप्रस्थः । शोणाप्रस्थः ।

**अमहन्नवं नगरेऽनुदीचाम् । ६ । २ । ८९ ।**

नगरे परे महन्नववर्ज्जितं पूर्वमाद्युदात्तं स्यात् तच्चेदुदीच्यान्न । ब्रह्मनगरम् । अमहदिति किम् ? महानगरम् । नवनगरम् । अनुदीचां किम् ? कार्त्तिनगरम् ।

**अर्म्मे चाऽवर्णं द्व्यच् त्र्यच् । ६ । २ । ९० ।**

---

(१३) छात्रि पेलि भाण्डि व्याड़ि आखण्डि आटि गोमि छात्र्यादिः ।
(१४) कर्की मघ्नी मकरी कर्कन्धु शमी करीर कन्दुक कवल वदरी कर्क्यादिः ।
(१५) माला शाला शोणा द्राक्षा क्षाच्चा क्षामा काञ्ची एक काम मालादिः ।

अर्म्मे परे द्व्यच् त्र्यच्पूर्वमवर्णान्तमाद्युदात्तम्। गुप्तार्म्मम्। कुक्कुटार्मम्। अवर्णं किम्? बृहदर्म्मम्। द्व्यच् त्र्यच् किम् किम्? कपिञ्जलार्म्मम्। अमहन्नवमित्येव। महार्म्मम्। नवार्म्मम्।

न भूताधिकसञ्जीवमद्राश्मकज्जलम्। ६। २। ९१।

अर्म्मे परे नैतान्याद्युदात्तानि। भूतार्म्मम्। अधिकार्म्मम्। सञ्जीवार्म्मम्। मद्राश्मग्रहणं सङ्घातविगृहीतार्थम्। मद्रार्म्मम्। अश्मार्म्मम्। मद्राश्मार्म्मम्। कज्जलार्म्मम्। आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् *। "दिवोदासा यदाश्रुषे"।

अन्तः। ६। २। ९२।

अधिकारोऽयम् प्रागुत्तरपदादिग्रहणात् (३५९०सू०)।

सर्वं गुणकार्त्स्न्ये। ६। २। ९३।

सर्वशब्दः पूर्व्यपदमन्तोदात्तम्। सर्वश्वेतः। सर्वमहान्। सर्वं किम्? परमश्वेतः। आश्रयव्याप्त्या परमत्वं श्वेतस्येति गुणकार्त्स्न्ये वर्त्तते। गुणः किम्? सर्वसौवर्णः। कार्त्स्न्ये किम्? सर्वेषां श्वेततरः सर्वश्वेतः।

संज्ञायाङ्गिरिनिकाययोः। ६। २। ९४।

एतयोः परतः पूर्वमन्तोदात्तम्। अञ्जनागिरिः। मौण्डिनिकायः। संज्ञायां किम्? परमगिरिः। ब्राह्मणनिकायः।

## कुमार्य्यां वयसि। ६। २। ९५।

पूर्वपदमन्तोदात्तम्। वृद्धकुमारी। जरत्कुमारी। कुमारीशब्दः पुंसा सहासम्प्रयोगमात्रप्रवृत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिः समानाधिकरणः तत्र वय इह गृह्यते न कुमारत्वमेव। वयसि किम्? परमकुमारी।

## उदकेऽकेवले। ६। २। ९६।

अकेवलं मिश्रं तद्वाचिनि समासे उदके परे पूर्वमन्तोदात्तम्। गुडोदकम्। स्वरे कृतेऽत्र एकादेशः। स्वरितो वानुदात्ते पदादाविति(८।२।६)पक्षे स्वरितः। अकेवले किम्? शीतोदकम्।

## द्विगौ क्रतौ। ६। २। ९७।

द्विगावुत्तरपदे क्रतुवाचिनि समासे पूर्वमन्तोदात्तम्। गर्गत्रिरात्रः। द्विगौ किम्? अतिरात्रः। क्रतौ किम्? बिल्वहोमस्य सप्तरात्रो बिल्वसप्तरात्रः।

## सभायान्नपुंसके। ६। २। ९८।

सभायाम्परतो नपुंसकलिङ्गे समासे पूर्व्वमन्तोदात्तम्। गोपालसभम्। स्त्रीसभम्। सभायां किम्? ब्राह्मणसेनम्? नपुंसके किम्? राजसभा। प्रतिपदोक्तनपुंसकग्रहणान्नेह। रमणीयसभम् ब्राह्मणकुलम्।

## पुरे प्राचाम्। ६। २। ९९।

देवदत्तपुरम्। नान्दीपुरम्। प्राचां किम्? शिवपुरम्।

अरिष्टगौडपूर्व्वे च। ६। २। १००।

पुरे परे अरिष्टगौडपूर्व्वे समासे पूर्व्वमन्तोदात्तम्। अरिष्टपुरम्। गौडपुरम्। पूर्वग्रहणं किम्?। इहापि यथा स्यात्। अरिष्टाश्रितपुरम्। गौडभृत्यपुरम्।

न हास्तिनफलकमार्द्देयाः। ६। २। १०१।

पुरे परे नैतान्यन्तोदात्तानि। हास्तिनपुरम्। फलकपुरम्। मार्द्देयपुरम्। मृदेरपत्यमिति शुभ्रा (५०६९०) दित्वाड्ढक्।

कुसूलकूपकुम्भशालं विले। ६। २। १०२।

एतान्यन्तोदात्तानि विले परे। कुसूलविलम्। कूपविलम्। कुम्भविलम्। शालाविलम्। कुसूलादि किम्? सर्पविलम्। विले इति किम्? कुसूलस्वामी।

दिक्छब्दा ग्रामजनपदाख्यानचानराटेषु। ६। २। १०३।

दिक्शब्दा अन्तोदात्ता भवन्त्येषु। पूर्व्वेषुकामशमी। अपरकृष्णमृत्तिका। जनपदो देशः। पूर्व्वपञ्चालाः। आख्यानम् पूर्वयायातम्। पूर्वचानराटम्। शब्दग्रहणं कालवाचिनोऽपि दिक्शब्दस्य परिग्रहार्थम्।

आचार्य्योपसर्ज्जनश्चान्तेवासिनि। ६। २। १०४।

आचार्य्योपसर्ज्जना अन्तेवासिनि परे दिक्छब्दा अन्तोदात्ता

भवन्ति। पूर्वपाणिनीयाः। आचार्य्येति किम्? पूर्वान्तेवासी। अन्तेवासिनि किम्? पूर्वपाणिनीयं शास्त्रम्।

उत्तरपदवृद्धौ सर्व्वञ्च। ६। २। १०५।

उत्तरपदस्येत्यधिकृत्य(५७३पृ०)या वृद्धिर्विहिता तद्वत्युत्तरपदे परे सर्वशब्दो दिक्शब्दाश्चान्तोदात्ता भवन्ति। सर्व्वपाञ्चालकः। अधिकारग्रहणं किम्? सर्व्वभासः। सर्व्वकारकः।

बहुव्रीहौ विश्वं संज्ञायाम्। ६। २। १०६।

बहुव्रीहौ विश्वशब्दः पूर्वपदभूतः संज्ञायामन्तोदात्तः स्यात्। पूर्वपदप्रकृतिस्वरेण (५६५पृ०सू०) प्राप्तस्याद्युदात्तस्यापवादः। विश्वकर्म्मा। विश्वदेवः। "आ विश्वदेवं सप्रतिमम्" बहुव्रीहौ किम्? विश्वे च ते देवाश्च विश्वदेवाः। संज्ञायां किम्? विश्वेदेवाः। प्रागव्ययीभावात्(५८२पृ०सू०)बहुव्रीह्यधिकारः।

उदराश्वेषुषु। ६। २। १०७।

वृषोदरः। हर्य्यश्वः। महेषुः।

क्षेपे। ६। २। १०८।

उदराश्वेषुषु पूर्वमन्तोदात्तं बहुव्रीहौ निन्दायाम्। घटोदरः। कटुकाश्वः। चलाचलेषुः। अनुदर इत्यत्र नञ्सुभ्यामिति (५६०५पृ०) भवति विप्रतिषेधेन।

नदी बन्धुनि। ६। २। १०९।

बन्धुशब्दे परे नद्यन्तम्पूर्वमन्तोदात्तं बहुव्रीहौ। गार्गी

बन्धुः । नदी किम् ? ब्रह्मबन्धुः । ब्रह्मशब्द आद्युदात्तः । बन्धुनि किम् ? गौरीपुत्रः ।

## निष्ठोपसर्गपूर्वमन्यतरस्याम् । ६ । २ । ११० ।

निष्ठान्तमुपसर्गपूर्वं पदमन्तोदात्तं वा । प्रधौतपादः २ । निष्ठा किम् ? प्रसेवकमुखः । उपसर्गपूर्वं किम् ? शुष्कमुखः ।

## उत्तरपदादिः । ६ । २ । १११ ।

उत्तरपदाधिकार आपादान्तम् आद्यधिकारस्तु प्रकृत्या भगालम् (३५९६सू०) इत्यवधिकः ।

## कर्णो वर्णलक्षणात् । ६ । २ । ११२ ।

वर्णवाचिनो लक्षणवाचिनश्च परः कर्णशब्द आद्युदात्तो बहुव्रीहौ । शुक्लकर्णः । शङ्कुकर्णः । कर्णः किम् ? श्वेतपादः वर्णलक्षणात्किम् ? शोभनकर्णः ।

## संज्ञौपम्ययोश्च । ६ । २ । ११३ ।

कर्ण आद्युदात्तः । मणिकर्णः । औपम्ये—गोकर्णः ।

## कण्ठपृष्ठग्रीवाजङ्घञ्च । ६ । । २ । ११४ ।

संज्ञौपम्ययोर्बहुव्रीहौ । शितिकण्ठः । काण्डपृष्ठः । सुग्रीवः । नाडीजङ्घः । औपम्ये । खरकण्ठः । गोपृष्ठः । अश्वग्रीवः । गोजङ्घः ।

## शृङ्गमवस्थायाञ्च । ६ । २ । ११५ ।

शृङ्गशब्दोऽवस्थायां संज्ञौपम्ययोश्चाद्युदात्तो बहुव्रीहौ। उद्गतशृङ्गः। द्व्यङ्गुलशृङ्गः। अत्र शृङ्गोद्गमनादिकृतो गवादेर्वयोविशेषोऽवस्था। संज्ञायाम्—ऋष्यशृङ्गः—उपमायाम्—मेषशृङ्गः। अवस्थेति किम्? स्थूलशृङ्गः।

## नञो जरमरमित्रमृताः। ६। २। ११६।

नञः परा एते आद्युदात्ता बहुव्रीहौ। "न मे जरा अजरम् अमरम्" "अमित्रमर्द्दय"। "अवो देवेष्वमृतम्"। नञः किम्? ब्राह्मणमित्रः। जरेति किम्? अशत्रुः।

## सोर्म्मनसी अलोमोषसी। ६। २। ११७।

सोः परं लोमोषसी वर्ज्जयित्वा मन्नन्तमसन्तञ्चाद्युदात्तं स्यात्। नञ्सुभ्याम् (उ६०५सू०) इत्यस्यापवादः। सुकर्म्माणः। सुयुजः। "मनो रत्नदनिमानः"। "सुब्रह्मा शिवापशुभ्यः सुमनाः सुवर्चाः सुपेशसस्करोति"। सोः किम्? कृतकर्म्मा। मनसी किम्? सुराजा। अलोमोषसी किम्? सुलोमा। सूषाः। कपि तु परत्वात्कपि पूर्वमिति (उ६०५सू०) भवति। सुकर्म्मकः। सुस्रोतस्कः।

## क्रत्वादयश्च (१६)। ६। २। ११८।

सोः परे आद्युदात्ताः स्युः। "साम्राज्याय सुक्रतुः"। सुप्रतीकः। सुहव्यः। "सुप्रतूर्त्तिमनेहसम्"।

## आद्युदात्तं द्व्यच्छन्दसि। ६। २। ११९।

(१६) क्रतु दृभीक प्रतीक प्रतूर्त्ति हव्य भग क्रत्वादिः।

यदाद्युदात्तं द्यच् तत्पूर्वोत्तरं बहुव्रीहावाद्युदात्तम्। "आद्या: स्वश्वा: सुरथा आतिथिग्वे" नित्स्वरेण (उ५४७सू०स०) अश्वरथावाद्युदात्तौ। आद्युदात्तं किम्? या सुबाहुः। द्व्यच् किम्? "सुगुरसत्सु हिरण्यः" हिरण्यशब्दस्त्र्यच्।

वीरवीर्य्यौ च। ६। २। १२०।

सोः परे बहुव्रीहौ छन्दस्याद्युदात्तौ। "सुवीरेण रयिणा"। "सुवीर्य्यस्य गोमतः"। वीर्य्यशब्दो यत्प्रत्ययान्तः। तत्र यतोऽनावः (उ५५०सू०) इत्याद्युदात्तत्वन्नेति वीर्य्यग्रहणं ज्ञापकम्। तत्र हि सति पूर्व्वेणैव सिद्धं स्यात्।

कूलतीरतूलमूलशालाक्षसममव्ययीभावे। ६। २। १२१।

उपकूलम्। परितीरम्। उपतूलम्। उपमूलम्। उपशालम्। उपाक्षम्।। सुषमम्। निःषमम्। तिष्ठद्गुप्रभृतिष्वेते (२३१सू०)। कूलादिग्रहणं किम्? उपकुम्भम्। अव्ययीभावे किम्? परमकूलम्।

कंसमन्थशूर्प्पपाय्यकाण्डं द्विगौ। ६। २। १२२।

द्विकंसः। द्विमन्थः। द्विशूर्प्पः। द्विपाय्यम्। द्विकाण्डम्। द्विगौ किम्? परमकंसः।

तत्पुरुषे शालायां नपुंसके। ६। २। १२३।

शालाशब्दान्ते तत्पुरुषे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तम्।

ब्राह्मणशालम्। तत्पुरुषे किम्? दृढशालम् ब्राह्मणकुलम्। शालायां किम्? ब्राह्मणसेनम्। नपुंसके किम्? ब्राह्मणशाला।

**कन्या च।६।२।१२४।**

तत्पुरुषे नपुंसकलिङ्गे कन्याशब्द उत्तरपदमाद्युदात्तम्। सौशमिकन्थम्। आह्वरकन्थम्। नपुंसके किम्? दाक्षिकन्था।

**आदिश्चिहणादीनाम् (१७)।६।२।१२५।**

कन्थान्ते तत्पुरुषे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तः। चिहणकन्थम्। मन्दरकन्थम्। आदिरिति वर्त्तमाने पुनर्ग्रहणं पूर्वपदस्याद्युदात्तार्थम्।

**चेलखेटकटुककाण्डं गर्हायाम्।६।२।१२६।**

चेलादीन्युत्तरपदान्याद्युदात्तानि। पुत्रचेलम्। नगरखेटम्। दधिकटुकम्। प्रजाकाण्डम्। चेलादिसादृश्येन पुत्रादीनाङ्गर्हा। व्याघ्रादित्वात् (२५१९०) समासः। गर्हायां किम्? परमचेलम्।

**चीरमुपमानम्।६।२।१२७।**

वस्त्रं चीरमिव वस्त्रचीरम्। कम्बलचीरम्। उपमानं किम्? परमचीरम्।

---

(१७) चिहण मड़र मड़ुर वैतुल पटत्क वैरालिकर्णक वैड़ालिकर्णि कुक्कुट चिक्कण चित्कण चिहणादिः।

पललसूपशाकम्मिश्रे । ६ । २ । १२८ ।

घृतपललम् । घृतसूपः । घृतशाकम् । भक्ष्येण मिश्रीकरण-मिति (२।१।३०) समासः । मिश्रे किम् ? परमपललम् ।

कूलसूदस्थलकर्षाः संज्ञायाम् । ६ । २ । १२९ ।

आद्युदात्तास्तत्पुरुषे । दाक्षिकूलम् । शाण्डिसूदम् । दाण्डा-यनस्थली । दाक्षिकर्षः । ग्रामसंज्ञा एताः । संज्ञायां किम् ? परमकूलम् ।

अकर्म्मधारये राज्यम् । ६ । २ । १३० ।

कर्मधारयवर्ज्जिते तत्पुरुषे राज्यमुत्तरपदमाद्युदात्तम् । ब्राह्मणराज्यम् । अकर्मेति किम् ? परमराज्यम् । चेलराज्या-दिस्वराद्व्ययस्वरः पूर्वविप्रतिषेधेन । कुचेलम् । कुराज्यम् ।

वर्ग्यादयश्च । ६ । २ । १३१ ।

अर्ज्जुनवर्ग्यः । वासुदेवपक्ष्यः । अकर्मधारयइत्येव । परम-वर्ग्यः । वर्ग्यादिर्दिगाद्यन्तर्गणः (१८) ।

पुत्रः पुंभ्यः । ६ । २ । १३२ ।

पुंशब्देभ्यः परः पुत्रशब्द आद्युदात्तस्तत्पुरुषे । दाशकि-पुत्रः । माहिषपुत्रः । पुत्रः किम् ? कौलटिमातुलः । पुंभ्यः किम् ? दासीपुत्रः ।

(१८) अत्र पुस्तकपूर्व्वार्द्धे ५७६ पृष्ठे दिगादिगणे वर्गं इत्येवमादयो ये पठितास्तेऽत्र ज्ञातव्यदन्ता वर्ग्यादयः ।

नाचार्य्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः। ६। २। १३३।

एभ्यः पुत्रो नाद्युदात्तः। आख्याग्रहणात्पर्य्यायाणान्तद्विशेषाणाञ्च ग्रहणम्। आचार्य्यपुत्रः। उपाध्यायपुत्रः। शाकटायनपुत्रः। राजपुत्रः। ईश्वरपुत्रः। नन्दपुत्रः। ऋत्विक्पुत्रः। याजकपुत्रः। होतृपुत्रः। संयुक्ताः सम्बन्धिनः। श्यालपुत्रः। ज्ञातयो मातापितृसम्बन्धेन बान्धवाः। ज्ञातिपुत्रः। भ्रातुष्पुत्रः।

चूर्णादी(१९) न्यप्राणिषष्ठ्याः। ६। २। १३४।

एतानि प्राणिभिन्नषष्ठ्यन्तात् पराण्याद्युदात्तानि तत्पुरुषे। मुद्गचूर्णम्। अप्राणीति किम्? मत्स्यचूर्णम्।

षट् च काण्डादीनि (२०)। ६। २। १३५।

अप्राणिषष्ठ्या आद्युदात्तानि। दर्भकाण्डम्। दर्भचीरम्। तिलपललम्। मुद्गसूपः। मूलकशाकम्। नदीकूलम्। षट् किम्? राजसूदः। अप्राणीति किम्? दत्तकाण्डम्।

कुण्डं वनम्। ६। २। १३६।

कुण्डमाद्युदात्तं वनवाचिनि तत्पुरुषे। दर्भकुण्डम्। कुण्डशब्दोऽत्र सादृश्ये। वनं किम्? मृत्कुण्डम्।

---

(१९) चूर्ण करिव करिप शाकिन शाकट द्राक्षा तूस्त कुन्दम दलप चमसी चक्कन चौल चूर्णादिः।

(२०) चेलखेटेत्यादि (७५८३पृ०) सूत्रस्थकाण्डशब्दमारभ्य कूलसूदेति (७५६४पृ०) सूत्रस्थकूलशब्दान्ताः षट् ग्राह्याः।

### प्रकृत्या भगालम्। ६। २। १३७।

भगालवाच्युत्तरपदन्तत्पुरुषे प्रकृत्या। कुम्भीभगालम्। कुम्भीनदालम्। कुम्भीदापालम्। मध्योदात्ता एते। प्रकृत्येत्यधिकृतमन्त इति (७५८७४०) यावत्।

### शितेर्नित्याबह्वज्बहुव्रीहावभसत्। ६। २। १३८।

शितेः परं नित्याबह्वच्कम्प्रकृत्या। शितिपादः। शित्यंसः। पादशब्दो वृषादि (७५४८४०)त्वादाद्युदात्तः अंसशब्दः प्रत्ययस्य नित्स्वरः (५४७४०स्०)। शितेः किम्? दर्शनीयपादः। अभसत्किम्? शितिभसत्। शितिराद्युदात्तः। पूर्वपदप्रकृतिस्वरापवादो योगः।

### गतिकारकोपपदात्कृत्। ६। २। १३९।

एभ्यः कृदन्तम्पदम्प्रकृतिस्वरं स्यात्तत्पुरुषे। प्रकारकः। प्रहरणम्। इध्मप्रव्रश्चनः। उपपदात्-उच्चैःकारम्। ईषत्करः। गतीति किम्? देवस्य कारकः। शेषे षष्ठी। कृद्ग्रहणं स्पष्टार्थम्। प्रपचतितरामित्यत्र तरबाद्यन्तेन समासे कृते आम्। तत्र सतिशिष्टत्वादाम्स्वरो भवतीत्येके। प्रपचतिदेश्यार्थं तु कृद्ग्रहणमित्यन्ये।

### उभे वनस्पत्यादिषु(२१)युगपत्। ६। २। १४०।

(२१) वनस्पति इत्येवमादिषु उभे पूर्वोत्तरपदे युगपत्प्रकृत्या भवतः। वनस्पति बृहस्पति शचीपति तनूनपात् नराशंस शुनःशेप शण्डामर्कौ तृष्णावरूत्री लम्बाविश्ववयसौ मर्मृत्यु वनस्पत्यादिः।

एषु पूर्व्वोत्तरपदे युगपत्प्रकृत्या। "वनस्पतिं वन आ बृहस्पतिं यः"। बृहच्छब्दोऽत्वादुदात्तो निपात्यते। "इर्षया शचीपतिम्"। शार्ङ्गरवादि * (२४१पृ०) त्वादाद्युदात्तः शचीशब्दः "शचीभिर्न्न" इति दर्शनात्। तनूनपात्। "नराशंसं वाजिनम्"। निपातनाद्दीर्घः। शुनःशेफम्।

देवताद्वन्द्वे च। ६। २। १४१।

उभे युगपत्प्रकृत्या स्तः। "आय इन्द्रावरुणौ"। "इन्द्राबृहस्पतीवयम्"। देवता किम्? सचन्यग्रोधौ। द्वन्द्वे किम्? अग्निष्टोमः।

नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु। ६। २। १४२।

पृथिव्यादिवर्ज्जितेऽनुदात्तादावुत्तरपदे प्रागुक्तन्न। "इन्द्राग्निभ्यां कं वृषणः"। अपृथिव्यादौ किम्? "द्यावापृथिवी जनयन्"। आद्युदात्तो द्यावा(४४२पृ०सू०)निपात्यते। पृथिवी त्वन्तोदात्तः। रुद्रसोमौ। रोदेर्णिलुक् चेति(उ३८६पृ०उ०)रगन्तो रुद्रः। इन्द्रापूषणौ। श्वन्नुक्षन्पूषन्निति (उ२८४पृ० उ०) पूषा अन्तोदात्तो निपात्यते। उत्तरपदग्रहणमनुदात्तादावित्युत्तरपदविशेषणं यथा स्यात्। द्वन्द्वविशेषणं मा भूत्। अनुदात्तादाविति विधिप्रतिषेधयोर्व्विषयविभागार्थम्।

अन्तः। ६। २। १४३।

अधिकारोऽयम्।

---

* शार्ङ्गरवादि ङीनोनित्त्वात् ञ्नित्यादिरिति (५४७पृ०) सूत्रेण।

**थाऽथघञ्क्ताऽजब्बित्रकाणाम् । ६ । २ । १४४ ।**

थ-अथ-घञ्-क्त-अच्-अप्-इत्र-क एतदन्तानाङ्गतिकारकोपपदात्परेषामन्त उदात्तः । "अवभृथस्यायोः" । आवसथः । घञ्-प्रभेदः । क्त-"धर्त्ता वज्री पुरुष्टुतः" । पुरुषु बहुप्रदेशेषु स्तुत इति विग्रहः । अच्-प्रचयः । अप्-प्रलवः । इत्र-प्रलवित्रम् । क-गोवृषः । मूलविभुजादित्वात्कः । गतिकारकोपपदादित्येव । सुस्तुतम्भवता ।

**सूपमानात् क्तः । ६ । २ । १४५ ।**

सोरुपमानाच्च परं क्तान्तमन्तोदात्तम् । "ऋतस्य योनौ सुकृतस्य शशप्लुतः" ।

**संज्ञायामऽनाचितादीनाम् । । ६ । २ । १४६ ।**

गतिकारकोपपदात् क्तान्तमन्तोदात्तमाचितादीन् (२२) वर्ज्जयित्वा । उपहूतः । शाकल्यः । परिजग्धः । अनेति किम् ? आचितम् । आस्थापितम् ।

**प्रवृद्धादीनाञ्च (२३) । ६ । २ । १४७ ।**

एषां क्तान्तमुत्तरपदमन्तोदात्तम् । प्रवृद्धः । प्रयुक्तः । असंज्ञार्थोऽयमारम्भः । आकृतिगणोऽयम् ।

---

(२२) आचित पर्य्याचित आस्थापित परिगृहीत निरुक्त प्रतिपन्न अपश्लिष्ट प्रश्लिष्ट उपहित उपस्थित ( संहिताऽगवि ग० ) आचितादिः ।

(२३) प्रवृद्धं यानम् प्रवृद्धो वृषल· प्र॒युतास्तूष्णवः आकर्षेऽवहितः अवहितो

## कारकाद्दत्तश्रुतयोरेवाशिषि। ६। २। १४८।

संज्ञायामन्तउदात्तः। देवदत्तः। विष्णुश्रुतः। कारकात् किम्? अकारकान्नियमो मा भूत्। संश्रुतो रामायणः। दत्तश्रुतयोः किम्? देवपालितः अस्मान्नियमादत्र संज्ञायामनाचितेति न। तृतीया कर्म्मणीति (५७७सू०) तु भवति। एव किम्? कारकावधारणं यथा स्यात्। दत्तश्रुतावधारणं मा भूत्। अकारकादपि दत्तश्रुतयोरन्तउदात्तो भवति संश्रुतः। आशिषि किम्? देवैः खाता देवखाता। आशिष्येवेत्येवमत्रेष्टोनियमः। तेनानाहतो नदति देवदत्त इत्यत्र न शङ्खविशेषस्य संज्ञेयम्। तृतीया कर्म्मणीति पूर्वप्रकृतिस्वरत्वमेव भवति।

## इत्थम्भूतेन कृतमिति च। ६। २। १४९।

इत्थम्भूतेन कृतमित्येतस्मिन्नर्थे यः समासः तत्र क्तान्तमुत्तरपदमन्तोदात्तं स्यात्। सुप्तप्रलपितम्। प्रमत्तगीतम्। कृतमिति क्रियासामान्ये करोतिर्न्नाभूतप्रादुर्भावे एव। तेन प्रलपिताद्यपि कृतम्भवति। तृतीया कर्म्मणीत्यस्य (७५७७सू०) अपवादः।

## अनो भावकर्म्मवचनः। ६। २। १५०।

कारकात्परमनप्रत्ययान्तम्भाववचनं कर्मवचनञ्चान्तोदात्तम्। पयःपानं सुखम्। राजभोजनाः शालयः। अनः किम्?

---

भोगेषु खड्गारूढः कविग्रस्तः प्रहृष्टादिः आकृतिगणोयम् प्रहृष्टं यानम अपहृष्टोऽहमकृतोरथ इत्यादि।

दन्तादाय: । भावेति किम् ? दन्तधावनम् । करणे ल्युट् । कारकात् किम् ? निदर्शनम् ।

**मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादि**
**(२४) क्रीताः । ६ । २ । १५१ ।**

कारकात्पराणि एतान्युत्तरपदान्यन्तोदात्तानि तत्पुरुषे । कृत् (५८६४पृ०) स्वरापवादः । रथवर्त्म । पाणिनिकृतिः । छन्दोव्याख्यानम् । राजशयनम् । राजासनम् । अश्वस्थानम् । ब्राह्मणयाजकः । गोक्रीतः । कारकात्किम् ? "प्रभृतौ सङ्गतिम्" । अत तादौ च निती ति(७५७७पृ०)स्वरः ।

**सप्तम्याः पुण्यम् । ६ । २ । १५२ ।**

अन्तोदात्तम् । अध्ययनपुण्यम् । तत्पुरुषे तुल्यार्थे इति (७५६५पृ०) प्राप्तम् । सप्तम्याः किम् ? वेदेन पुण्यम् । वेदपुण्यम् ।

**ऊनार्थकलहं तृतीयायाः । ६ । २ । १५३ ।**

माषोनम् । माषविकलम् । वाक्कलहः । तृतीयापूर्व्वपदप्रकृतिस्वरा (७५६५पृ०) पवादोऽयम् । अत्र केचिदर्थेति स्वरूपग्रहणमिच्छन्ति । धान्यार्थः । ऊनशब्देन त्वर्थनिर्द्देशेन तदर्थानां ग्रहणमिति प्रतिपदोक्तत्वादेव सिद्धे तृतीयाग्रहणं स्पष्टार्थम् ।

**मिश्रञ्चाऽनुपसर्गमसन्धौ । ६ । २ । १५४ ।**

---

(२४) एतत्पुस्तकपूर्व्वार्द्धे २४२ पृष्ठे याजकादिगणो द्रष्टव्यः ।

पाणबन्धेनैकार्थ्यं सन्धिः। तिलमिश्राः। सर्पिर्मिश्राः। मिश्रं किम्? गुड़धानाः। अनुपसर्गे किम्? तिलसंमिश्राः। मिश्रग्रहणे सोपसर्गग्रहणस्येदमेव ज्ञापकम्। असन्धौ किम्? ब्राह्मणमिश्रो राजा। ब्राह्मणैः सह संहित ऐकार्थ्य मापन्नः।

नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्त-द्धिताः। ६। २। १५५।

सम्पाद्याद्यर्थे तद्धितान्ता नञो गुणप्रतिषेधे वर्त्तमानात्परेऽन्तोदात्ताः। कर्णवेष्टकाभ्यां सम्पादितं कार्णवेष्टकिकम्। न कार्णवेष्टकिकमकार्णवेष्टकिकम्। छेदमर्हति छैदिकः। न छैदिकोऽछैदिकः। न वत्सेभ्यो हितोऽवात्सीयः। न सन्तापाय प्रभवति असन्तापिकः। नञः किम्? गर्द्दभरथम-र्हति गार्द्दभरथिकः। अगार्द्दभरथिकः। गुणप्रतिषेधे किम्? गार्द्दभरथिकादन्योऽगार्द्दभरथिकः। गुणो हि तद्धितार्थे प्रवृ-त्तिनिमित्तं सम्पादितत्वाद्युच्यते। तत्प्रतिषेधो यत्रोच्यते तत्रायं विधिः। कर्णवेष्टकाभ्यान्न सम्पादितं मुखमिति। संपाद्यीति किम्? पाणिनीयमधीते पाणिनीयः न पाणि-नीयः अपाणिनीयः। तद्धितः किम्? वोढुमर्हति वोढ़ा न वोढ़ा अवोढ़ा।

ययतोश्चातदर्थे। ६। २। १५६।

ययतौ यौ तद्धितौ तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधवि-

पयात्पदस्यान्त उदात्तः स्यात्। पाशानां समूहः पाश्या न पाश्या अपाश्या। अदन्त्यम्। अतदर्थे किम्? अपाद्यम्। तद्धितः किम्? अदेयम्। गुणप्रतिषेधे किम्? दन्त्यादन्यददन्त्यम्। तदनुबन्धग्रहणे नातदनुबन्धकस्येति (२५)। नेह। अवामदेव्यम्।

अच्कावशक्तौ। ६। २। १५७।

अजन्तङ्कान्तञ्च नञः परमन्तोदात्तमशक्तौ गम्यायाम्। अपचः। पक्तुम्न शक्तः। अविलिखः। अशक्तौ किम्? अपचो दीक्षितः। गुणप्रतिषेधे इत्येव। अन्योऽयं पचादपचः।

आक्रोशे च। ६। २। १५८।

नञः परावच्कावन्तोदात्तावाक्रोशे। अपचो जाल्मः। पक्तुन्न शक्नोतीत्येवमाक्षिप्यते। अविक्षिपः।

संज्ञायाम्। ६। २। १५९।

नञः परमन्तोदात्तं संज्ञायामाक्रोशे। अदेवदत्तः।

कृत्योकेष्णुच्चार्वादयश्च (२६)। ६। २। १६०।

---

(२५) यकारस्यानुबन्धेन यतश्च तमातानुबन्धेन ग्रहणात् वामदेवाड्ड्यड्ड्याविति (५२६७०) सूत्रे ड्ये च न प्रसङ्गः।

(२६) चारु साधु यौधकि अनङ्गमेजय वदान्य अकस्मात् (वर्त्तमानवर्द्धमानत्वरमाणध्रियमाणक्रीयमाणरोचमानशोभमानाः संज्ञायाम् ग०) (विकारसदृशे व्यस्तसमस्ते) गृहपति गृहपतिक (राजाह्नोश्छन्दसि ग०) चार्वादिः।

नञः परेऽन्तोदात्ताः स्युः। अकर्त्तव्यः। उक—अनागामुकः। इष्णुच्—अनलङ्करिष्णुः। इष्णुज्ग्रहणे खिष्णुचोऽप्यनुबन्धकस्यापि ग्रहणमिकारादेर्विधानसामर्थ्यात्। अनाढ्यम्भविष्णुः। चार्वादिः—अचारुः। असाधुः। राजाङ्गोऽच्छन्दसि ग०। अराजा। अनङ्गः। भाषायान्नञः स्वर एव।

**विभाषा तृन्नन्नतीक्ष्णशुचिषु। ६। २। १६१।**

तृन्—अकर्त्ता। अन्न—अनन्नम्। अतीक्ष्णम्। अशुचि। पक्षे अव्ययस्वरः।

**बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने। ६। २। १६२।**

एभ्योऽनयोरन्त उदात्तः। इदम्प्रथमं यस्य स इदंप्रथमः। एतद्द्वितीयः। तत्पञ्चमः। बहुव्रीहौ किम्? अनेन प्रथमः इदंप्रथमः। तृतीयेति (२२८४०) योगविभागात्समासः। इदमेतत्तद्भ्यः किम्? यत्प्रथमः। प्रथमपूरणयोः किम्? तानि बहून्यस्य तद्बहुः। क्रियागणने किम्? अयम्प्रथमः प्रधानं येषान्ते इदम्प्रथमाः। द्रव्यगणनमिदम्। गणनं किम्? अयं प्रथमा येषान्ते इदम्प्रथमाः इदम्प्रधाना इत्यर्थः। उत्तरपदस्य कार्यित्वात्कपि पूर्वमन्तोदात्तम्(३६९५ पृ० सू०)। इदम्प्रथमकः। बहुव्रीहावित्यधिकारः।

**संख्यायास्तनः। ६। २। १६३।**

बहुव्रीहावन्तोदात्तः। द्विस्तना। चतुस्तना। संख्यायाः किम्? दर्शनीयस्तना। स्तनः किम्? द्विशिराः।

**विभाषा छन्दसि । ६ । २ । १६४ ।**

"द्विस्तनां करोति वामदेवः" । "द्विस्तनां करोति द्यावापृथिव्योर्दोहनाय" ।

**संज्ञायां मित्राजिनयोः । ६ । २ । १६५ ।**

देवमित्रः । कृष्णाजिनम् । संज्ञायां किम्? प्रियमित्रः । ऋषिप्रतिषेधो मित्रे * । विश्वामित्रः ऋषिः ।

**व्यवायिनोऽन्तरम् । ६ । २ । १६६ ।**

व्यवधानवाचकात्परमन्तोदात्तम् । वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः । व्यवधायिनः किम्? आत्मान्तरम् स्वभावान्य इत्यर्थः ।

**मुखं स्वाङ्गम् । ६ । २ । १६७ ।**

गौरमुखः । स्वाङ्गं किम्? दीर्घमुखा शाला ।

**नाव्ययदिक्छब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः । ६ । २ । १६८ ।**

उच्चैर्मुखः । प्राङ्मुखः । गोमुखः । महामुखः । स्थूलमुखः । मुष्टिमुखः । पृथुमुखः । वत्समुखः । पूर्वपदप्रकृतिस्वरोऽत्र । गोमुष्टिवत्सपूर्वपदस्योपमानलक्षणोऽपि विकल्पोऽनेन बाध्यते ।

**निष्ठोपमानादन्यतरस्याम् । ६ । २ । १६९ ।**

निष्ठान्तादुपमानवाचिनश्च परम्मुखं स्वाङ्गं वान्तोदात्तं बहुव्रीहौ। प्रक्षालितमुखः। पक्षे निष्ठोपसर्गेति (७५८०पृ०) पूर्व्वपदान्तोदात्तत्वम्। पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरोऽपि (७५७७पृ०) भवति। उपमानम्—सिंहमुखः।

**जातिकालसुखादि (२७) भ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः। ६। २। १७०।**

सारङ्गजग्धः। मासजातः। सुखजातः। दुःखजातः। जातिकालेति किम्? पुत्रजातः। अनाच्छादनात्किम्? वस्त्रच्छन्नः। अकृतेति किम्? कुण्डकृतः। कुण्डमितः। कुण्डप्रतिपन्नः। अस्माज्ज्ञापकान्निष्ठान्तस्य परनिपातः।

**वा जाते। ६। २। १७१।**

जातिकालसुखादिभ्यः परो जातशब्दो वान्तोदात्तः। दन्तजातः। मासजातः।

**नञ्सुभ्याम्। ६। २। १७२।**

बहुव्रीहावुत्तरपदमन्तोदात्तम्। अव्रीहिः। सुमाषः।

**कपि पूर्व्वम्। ६। २। १७३।**

नञ्सुभ्यामुत्तरं पदं पूर्वमुदात्तङ्कपि परे। अब्रह्मबन्धुकः। सुकुमारीकः।

---

(२७) सुख दुःख तृप्र कृच्छ्र अस्र आस्र अलीक प्रतीप करुण कृपण सोढ़ इत्येतानि सुखादीनि। एतदेव सुखादि(४२८पृ०)वार्त्तिके। (७२२०पृ०) सूत्रे च ग्राह्यम्।

## ह्रस्वान्तेऽन्त्यात्पूर्वम्। ६। २। १७४।

ह्रस्वान्ते उत्तरपदे समासे चान्त्यात्पूर्वमुदात्तं नञ्सुभ्यां बहुव्रीहौ। अव्रीहिकः। सुमाषकः। पूर्वमित्यनुवर्त्तमाने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमार्थम्। ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं, न कपि पूर्वमिति। अज्ञकः। कबन्तस्यैवान्तोदात्तत्वम्।

## बहोर्नञ्वदुत्तरपदभूम्नि। ६। २। १७५।

उत्तरपदार्थबहुत्ववाचिनो बहोः परस्य पदस्य नञः पदस्येव स्वरः स्यात्। बहुव्रीहिकः। बहुमित्रः। उत्तरपदेति किम्? बहुषु मानोऽस्य स बहुमानः।

## न गुणादयोऽवयवाः। ६। २। १७६।

अवयववाचिनो बहोः परे गुणादयो नान्तोदात्ताः बहुव्रीहौ। बहुगुणा रज्जुः। बह्वक्षरं पदम्। बह्वध्यायः। गुणादिराकृतिगणः (२८)। अवयवाः किम्? बहुगुणो द्विजः। अध्ययनश्रुतसदाचारादयो गुणाः।

## उपसर्गात् स्वाङ्गं ध्रुवमपर्शु। ६। २। १७७।

प्रपृष्ठः। प्रललाटः। ध्रुवमेकरूपम्। उपसर्गात्किम्? दर्शनीयपृष्ठः। स्वाङ्गङ्किम्? प्रशाखो वृक्षः। ध्रुवङ्किम्? उद्बाहुः। अपर्शु किम्? विपर्शुः।

---

(२८) गुण अक्षर अध्याय सूक्त छन्दः मान गुणादिराकृतिगणः।

वनं समासे। ६। २। १७८।

समासमात्रे उपसर्गादुत्तरपदं वनमन्तोदात्तम्। प्रवणे।

अन्तः। ६। २। १७९।

अस्मात्परं वनमन्तोदात्तम्। अन्तर्वणो देशः। अनुपसर्गार्थमिदम्।

अन्तश्च। ६। २। १८०।

उपसर्गादन्तशब्दोऽन्तोदात्तः। पर्य्यन्तः। समन्तः।

न निविभ्याम्। ६। २। १८१।

न्यन्तः। व्यन्तः। पूर्वपदप्रकृतिस्वरे यणि च कृते उदात्तस्वरितयोर्यण इति (उ५.४।१४०) स्वरितः।

परेरभितोभावि मण्डलम्। ६। २। १८२।

परेः परमभित उभयतो भावो यस्यास्ति तत्कूलादि मण्डलं चान्तोदात्तम्। परिकूलम्। परिमण्डलम्।

प्रादस्वाङ्गं संज्ञायाम्। ६। २। १८३।

प्रगृहम्। अस्वाङ्गं किम्? प्रपदम्।

निरुदकादीनि (२९) च। ६। २। १८४।

(२९) निरुदक निरुपल निर्मक्षिक निर्मशक निष्कालक निष्कालिक निष्पेष दुस्तरीप निस्तरीप निस्तरीक निरजिन उदजिन उपाजिन (परेर्हस्तपादकेशकर्षाः ग०) निरुदकादिराकृतिगणः।

अन्तोदात्तानि । निरुदकम् । निरुपलम् ।

अभेर्मुखम् । ६ । २ । १८५ ।

अभिमुखम् । उपसर्गात् स्वाङ्गमिति (७६०६सू०) सिद्धे बहु-व्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थञ्च । अभिमुखा शाला ।

अपाच्च । ६ । २ । १८६ ।

अपमुखम् । योगविभाग उत्तरार्थः ।

स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च । ६ । २ । १८७ ।

अपादिमान्यन्तोदात्तानि । अपस्फिगम् । अपपूतम् । अप-वीणम् । अञ्जस्—अपाञ्जः । अध्वन्—अपाध्वा । उपस-र्गादध्वनः (४५५सू०) इत्यस्याभावे इदम् । एतदेव च ज्ञापकं समासान्तानित्यत्वे । अपकुक्षिः । सीरनाम—अपसीरम् । अपहलम् । नामन्—अपनाम । स्फिगपूतवीणाकुक्षिग्रहणम-बहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थञ्च ।

अधेरुपरिस्थम् । ६ । २ । १८८ ।

अध्यारूढो दन्तोऽधिदन्तः दन्तस्योपरिजातो दन्तः । उप-रिस्थं किम् ? अधिकरणम् ।

अनोरप्रधानकनीयसी । ६ । २ । १८९ ।

अनोः परमप्रधानवाचि कनीयश्चान्तोदात्तम् । अनुगतो

ज्येष्ठमनुज्येष्ठम्। पूर्वपदार्थप्रधानः प्रादिसमासः। अनुगतः कनीयाननुकनीयान्। उत्तरपदार्थप्रधानः। प्रधानार्थञ्च कनीयोग्रहणम्। अप्रेति किम्? अनुगतो ज्येष्ठोऽनुज्येष्ठः।

पुरुषश्चान्वादिष्टः। ६। २। १९०।

अनोः परोऽन्वादिष्टवाची पुरुषोऽन्तोदात्तः। अन्वादिष्टः पुरुषोऽनुपुरुषः। अन्वादिष्टः किम्? अनुगतः। पुरुषोऽनु पुरुषः।

अतेरकृत्पदे। ६। २। १९१।

अतेः परमकृदन्तम्पदशब्दश्चान्तोदात्तः। अत्यङ्कुशो नागः। अतिपदा गायत्री। अकृत्पदे किम्? अतिकारः। अतेर्धातुलोप इति वाच्यम्*। इह मा भूत्। शोभनो गार्ग्योऽतिगार्ग्यः। इह च स्यात् अतिक्रान्तः कारकमतिकारकः।

नेरनिधाने। ६। २। १९२।

निधानमप्रकाशता ततोऽन्यदनिधानम्प्रकाशनमित्यर्थः। निमूलम्। न्यक्षम्। अनिधाने किम् निहितो दण्डो निदण्डः।

प्रतेरंश्वादयस्तत्पुरुषे। ६। २। १९३।

प्रतेः परेऽंश्वादयो(२०)ऽन्तोदात्ताः। प्रतिगतोऽंशुः प्रत्यंशुः। प्रतिजनः प्रतिराजा। समासान्तस्यानित्यत्वान्न टच्।

---

(२०) अंशु जन राजन् उष्ट्र खेटक अजिर आर्द्रा श्रवण कृत्तिका आर्धपुरः अंश्वादि।

### उपाद्द्व्यजिनमगौरादयः । ६ । २ । १९४ ।

उपात्परं यत् द्व्यच्कमजिनञ्चान्तोदात्तन्तत्पुरुषे गौरादीन् (२१) वर्जयित्वा । उपदेवः । उपेन्द्रः । उपाजिनम् । अगौरादयः किम् ? उपगौरः । उपतैषः । तत्पुरुषे किम् ? उपगतः सोमोऽस्य स उपसोमः ।

### सोरवक्षेपणे । ६ । २ । १९५ ।

सुप्रत्यवसितः । सुरतः पूजायामेव । वाक्यार्थस्त्वत्र निन्दा असूयया तथाभिधानात् । सोः किम् ? कुब्राह्मणः । अवक्षेपणे किम् ? सुवृषल ।

### विभाषोत्पुच्छे । ६ । २ । १९६ ।

उत्क्रान्तः पुच्छात् उत्पुच्छः २ । यदा तु पुच्छमुदस्यति उत्पुच्छयते एरच् (उ४४२७०) उत्पुच्छस्तदा थाथादिस्वरेण (उ५८८९०)नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयम् । सेयमुभयत्र विभाषा तत्पुरुषे किम् ? उदस्तम्पुच्छं येन स उत्पुच्छः ।

### द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहौ । ६ । २ । १९७

आभ्यां परेष्वेष्वन्तोदात्तो वा । "द्विपाच्चतुष्पाच्च रथाय" । "त्रिपादूर्द्ध्वः" द्विदन् । "त्रिमूर्द्धानं सप्तरश्मिम्, मूर्द्धन्नित्यकृतसमासान्तएव मूर्द्धशब्दः तस्यैतत्प्रयोजनमसत्यपि समासान्ते

(२१) गौर तैष तैल लेट लोट जिह्वा कृष्णा कन्या गुध कल्प पाद गौरादिः ।

अन्तोदात्तत्वं यथा स्यात्। एतदेव ज्ञापकमनित्यः समासान्तो भवतीति। यद्यपि च समासान्तः क्रियते तथापि बहुव्रीहिकार्य्यत्वात्तदेकदेशत्वाच्च समासान्तोदात्तत्वं पक्षे भवत्येव। द्विमूर्द्धः २। त्रिमूर्द्धः २। द्वित्रिभ्यां किम्? कल्याणमूर्द्धा। बहुव्रीहौ किम्? द्वयोर्मूर्द्धा द्विमूर्द्धा।

सक्थञ्चाक्रान्तात्। ६। २। १९८।

गौरसक्थः। श्लक्ष्णसक्थः। आक्रान्तात्किम्? चक्रसक्थः। समासान्तस्य षचश्चित्त्वान्नित्यमेवान्तोदात्तत्वम्भवति।

परादिश्छन्दसि बहुलम्। ६। २। १९९।

छन्दसि परस्य सक्थशब्दस्यादिरुदात्तो वा। "अञ्जिसक्थमालभेत" अत्र वार्त्तिकम्।

परादिश्च परान्तश्च पूर्व्वान्तश्चापि दृश्यते।
पूर्व्वादयश्च दृश्यन्ते व्यत्ययो बहुलन्तत इति॥

"भुवि जाता उरुक्षपा"। परान्तः। "भियेन सुष्टिहत्यया"। "यस्त्रिचक्रः"। पूर्व्वान्तः। "विश्वायुर्द्देहि"।

इति समासस्वराः।

---

तिङो गोत्रादीनि (१) कुत्सनाभीक्ष्ण्ययोः। ८।१।२७।

तिङन्तात्पदाद्गोत्रादीन्यनुदात्तान्येतौ:। पचति गोत्रम्। पचतिपचति गोत्रम्। ब्रुवप्रवचनप्रहसनप्रकथनप्रत्यायनादयः। कुत्सनाभीक्ष्ण्यग्रहणम्पाठविशेषणम् तेनान्यत्रापि गोत्रादिग्रहणे कुत्सनादावेव कार्य्यं ज्ञेयम् गोत्रादीनि किम्? पचति पापम्। कुत्सनेति किम्? खनति गोत्रं समेत्य कूपम्।

तिङ्ङतिङः। ८।१।२८।

अतिङन्तात्पदात्परन्तिङन्तं निहन्यते। "अग्निमीळे"।

न लुट्। ८।१।२९।

लुडन्तन्न निहन्यते। श्वः कर्त्ता।

निपातैर्य्यद्यदिहन्तकुविन्नेच्चेच्चण् (२) कच्चिद्यत्र युक्तम्। ८।१।३०।

एतैर्निपातैर्युक्तन्न निहन्यते। "यदग्ने स्यामहं त्वम्"। "युवां यदि क्षथः"। 'कुविदङ्ग आसन्'। "अचित्तिभिश्चकृमा कच्चित्"। "पुत्रा ये यत्र पितरो भवन्ति"।

नह प्रत्यारम्भे। ८।१।३१।

---

(१) गोत्र ब्रुव प्रवचन प्रहसन प्रकथन प्रत्ययन प्रपञ्च प्राय न्याय प्रचक्षण विचक्षण अवचक्षण स्वाध्याय भूयिष्ठ वानाम गोत्रादिः।

(२) चण् चेदर्थे णित् चमब्दः। अयं च मरिष्यति अयं चेन्मरिष्यतीत्यर्थः।

नहेत्यनेन युक्तन्तिङन्तन्नानुदात्तम्। प्रतिषेधयुक्त आरम्भः प्रत्यारम्भः। "नह भोक्ष्यसे"। प्रत्यारम्भे किम्? "नह वैतस्मिन् लोके दक्षिणामिच्छन्ति"।

## सत्यं प्रश्ने। ८।१।३२।

सत्ययुक्तन्तिङन्तं नानुदात्तं प्रश्ने। सत्यं भोक्ष्यसे!। प्रश्ने किम्? "सत्यमद्धा भत वयमिन्द्रं स्तवाम"।

## अङ्गाप्रातिलोम्ये। ८।१।३३।

अङ्गेत्यनेन युक्तन्तिङन्तन्नानुदात्तम्। अङ्ग कुरु। अप्रातिलोम्ये किम्? "अङ्ग कूजति वृषलः"। अनभिप्रेतमसौ कुर्व्वन् प्रतिलोमो भवति।

## हि च। ८।१।३४।

हियुक्तन्तिङन्तन्नानुदात्तम्। "आ हि ध्मायति"। "आ हि रुहन्तम्"।

## छन्दस्यनेकमपि साकाङ्क्षम्। ८।१।३५।

हीत्यनेन युक्तं साकाङ्क्षमनेकमपि नानुदात्तम्। "अनृतं हि मत्तो वदति"। "पाप्मानश्चैनं पुनाति"। तिङन्तद्वयमपि न निहन्यते।

## यावद्यथाभ्याम्। ८।१।३६।

आभ्यां योगे तिङन्तन्नानुदात्तम्। "यथाचित्कण्वमावतम्"।

## पूजायान्नानन्तरम्। ८।१।३७।

यावद्यथाभ्यां युक्तन्तिङन्तम्पूजायान्नानुदात्तम् । यावत्पचति शोभनम् । यथा पचति शोभनम् । पूजायां किम् ? यावद्भुङ्क्ते अनन्तरङ्किम् ? यावद्देवदत्तः पचति शोभनम् । पूर्व्वेणात्र निघातः प्रतिषिध्यते ।

उपसर्गव्यपेतञ्च । ८ । १ । ३८ ।

पूर्व्वेणानन्तरमित्युक्तम् उपसर्ग्गव्यवधानार्थं वचनम् । यावत्प्रपचति शोभनम् । अनन्तरमित्येव यावद्देवदत्तः प्रपचति शोभनम् ।

तुपश्यपश्यताहैः पूजायाम् । ८ । १ । ३९ ।

एभिर्युक्तन्तिङन्तन्न निहन्यते पूजायाम् । "आदह स्वधाम तु पुनर्ग्गर्भत्वमेरिरे" । पश्य मैत्र भुङ्क्ते भद्रम् । पश्यत विष्णुर्भुङ्क्ते भद्रम् । अह विप्रो भुङ्क्ते शोभनम् । पूजायां किम् ? पश्य मृगो धावति ।

अहो च । ८ । १ । ४० ।

एतद्योगे नानुदात्तं पूजायाम् ! अहो देवदत्तः पचति शोभनम् ।

शेषे विभाषा । ८ । १ । ४१ ।

अहो इत्यनेन युक्तन्तिङन्तं वानुदात्तमपूजायाम् । कटमहो करिष्यति २ । असूयावचनमेतत् ।

पुरा च परीप्सायाम् । ८ । १ । ४२ ।

एतद्योगे तिङन्तं न निहन्यते त्वरायाम्। अधीष्व माणवक! पुरा विद्योतते विद्युत्। निकटागामित्यत्र पुराशब्दः। न तेन स्म पुराधीयते। चिरातीतेऽत्र पुरा।

## नन्वित्यनुज्ञैषणायाम्। ८। १। ४३।

नन्वित्यनेन युक्तं तिङन्तं नानुदात्तमनुज्ञैषणायाम्। ननु गच्छामि भोः। अनुजानीहि मां गच्छन्तमित्यर्थः। अन्विति किम्? अकार्षीः? कटं त्वम्? ननु करोमि। पृष्टप्रतिवचनमेतत्।

## किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्। ८। १। ४४।

क्रियाप्रश्ने वर्त्तमानेन किंशब्देन युक्तं तिङन्तं नानुदात्तम्। किं द्विजः पचत्याहोस्विद्गच्छति। क्रियेति किम्? साधनप्रश्ने मा भूत्। किं भक्तं पचत्यपूपान्वा। प्रश्ने किम्? किमधीते? क्षेपोऽयम्। अनुपसर्गं किम्? किं? प्रपचति उत प्रकरोति। अप्रतिषिद्धं किम्? किं? किं? द्विजो न पचति।

## लोपे विभाषा। ८। १। ४५।

किमोऽप्रयोगे उक्तं वा। देवदत्तः पचत्याहोस्वित्पठति।

## एहि मन्ये प्रहासे लृट्। ८। १। ४६।

एहि मन्ये इत्यनेन युक्तं लृडन्तं नानुदात्तं क्रीडायाम्। एहि मन्ये भक्तं भोक्ष्यसे न हि भोक्ष्यसे भुक्तं तं अतिथिभिः। प्रहासे किम्? एहि मन्यसे ओदनं भोक्ष्ये सुष्ठु मन्यसे। गत्यर्थ-

लोटा ल्हडित्यनेनैव सिद्धे नियमार्थोऽयमारम्भः। एहि मन्ये युक्ते प्रहास एव नान्यत्र। एहि मन्यसे ओदनम्भोक्ष्ये।

जात्वपूर्वम्। ८।१।४७।

अविद्यमानपूर्वं यज्जातु तेन युक्तन्तिङन्तन्नानुदात्तम्। जातु भोक्ष्यसे। अपूर्वङ्किम्? कटञ्जातु करिष्यसि।

किंवृत्तञ्च चिदुत्तरम्। ८।१।४८।

अविद्यमानपूर्वं चिदुत्तरं यत्किंवृत्तं तेन युक्तन्तिङन्तन्नानुदात्तम्। विभक्त्यन्तं डतरडतमान्तञ्च किमोरूपङ्किंवृत्तम्। कश्चिद्भुङ्क्ते कतरश्चित् कतमश्चिद्वा। चिदुत्तरङ्किम्? को भुङ्क्ते। अपूर्वमित्येव रामः किञ्चित्पठति।

आहो उताहो चानन्तरम्। ८।१।४९।

आहो उताहो इत्याभ्यामपूर्वाभ्यां युक्तन्तिङन्तन्नानुदात्तम्। आहो उताहो वा भुङ्क्ते। अनन्तरमित्येव। शेषे विभाषां वक्ष्यति। अपूर्वेति किम्? देव आहो भुङ्क्ते।

शेषे विभाषा। ८।१।५०।

आभ्यां युक्तं व्यवहितन्तिङन्तं वानुदात्तम्। आहो देवः पचति २।

गत्यर्थलोटा लृट् न चेत्कारकं सर्वान्यत्। ८। १।५१।

गत्यर्थानां लोटा युक्तान्तिङन्तन्नानुदात्तम्। यत्रैव (३) कारके लोट् तत्रैव लृडपि चेत्। आ-गच्छ देव! ग्रामं द्रक्ष्यस्येनम्। उह्यन्तान्देवदत्तेन शालयो रामेण भोक्ष्यन्ते। गत्यर्थेति किम्? पच देव! ओदनं भोक्ष्यसे एनम्। लोटा किम्? आ-गच्छेर्देव! ग्रामन्द्रक्ष्यस्येनम्। लृट् किम्? आ-गच्छ देव! ग्रामम्पश्यस्येनम्। न चेदिति किम्? आ-गच्छ देव! ग्रामं पिता ते ओदनो भोक्ष्यते इत्यादौ न निघातप्रतिषेधः। सर्व्वं किम्? आ-गच्छ देव! ग्रामं त्वञ्चाहञ्च द्रक्ष्याव एनमित्यत्रापि निघातनिषेधो यथा स्यात्। यल्लोडन्तस्य कारकन्तच्चान्यच्च लृडन्तेनोच्यते (४)।

## लोट् च। ८।१।५२।

लोडन्तङ्गत्यर्थलोटा युक्तन्नानुदात्तम्। आ-गच्छ देव! ग्रामं पश्य। गत्यर्थेति किम्? पच देवौदनं भुङ्क्ष्वैनम्। लोट् किम्? आ-गच्छ देव! ग्रामम्पश्यसि। न चेत्कारकं सर्व्वान्यदित्येव आ-गच्छ देव! ग्रामम्पश्यत्वेनं रामः। सर्व्वग्रहणात्त्विह स्यादेव आ-गच्छ देव! ग्रामं त्वञ्चाहञ्च पश्याव। योगविभाग उत्तरार्थः।

## विभाषितं सोपसर्गमनुत्तमम्। ८।१।५३।

---

(३) यत्रैवेति कर्त्तरि कर्म्मणि वेत्यर्थः।

(४) यत्र तिङ्भ्यामेकं द्रव्यमभिधीयते तत्रेदमिति भाष्यकारेण कारकपदस्य लकारवाच्यकारकपरतायाः व्यवस्थापनादुच्यते इत्यन्तमुक्तं तेन करणाद्यन्यत्वे न निघातनिषेधः।

लोडन्तङ्गत्यर्थलोटा युक्तं तिङन्तं वानुदात्तम्। आ-गच्छ देव! ग्रामम्प्र विश २। सोपसर्गं किम्? आ-गच्छ देव! ग्रामम्पश्य। अनुत्तमं किम्? आ-गच्छानि देव! ग्रामम्प्र विशानि।

## हन्त च। ८। १। ५४।

हन्तेत्यनेन युक्तमनुत्तमं लोडन्तं वानुदात्तम्। हन्त प्र-विश २। सोपसर्गमित्येव। हन्त कुरु। निपातैर्यद्दिति (७६।२४०) निघातप्रतिषेधः। अनुत्तमङ्किम्? हन्त प्रभुञ्जावहै।

## आम एकान्तरमामन्त्रितमनन्तिके। ८। १। ५५।

आमः परमेकपदान्तरितमामन्त्रितन्नानुदात्तम्। आम्पचसि देव्त ३। एकान्तरङ्किम्? आम्प्रपचसि देव्त ३ (५)। आमन्त्रितं किम्? आम्पचति देवदत्तः। अनन्तिके किम्? आम्पचसि देवदत्त।

## यद्धितुपरञ्छन्दसि। ८। १। ५६।

तिङन्तन्नानुदात्तम्। "उदसृजो यदङ्गिरः"। "उशन्ति हि"। आ-ख्यास्यामि तु ते। निपातैर्यद्दिति हि चेति (७६।२४०) तुपश्येति च (७६।४४०) सिद्धे नियमार्थमिदम्। एतैरेव परभूतैर्योगे नान्यैरिति। जाये स्वारोहावेहि। एहीति गत्यर्थलोटा (६) युक्तस्य लोडन्तस्य निघातो भवति।

---

(५) दूरस्थाह्वाने (५४४०) प्लुतविधानात् देवत्त ३ इत्यस्य प्लुतत्वम्।

(६) लोटेत्यस्य परभूतेनेत्यादिः। लोडन्तस्य स्वारोहावेति लोडन्तस्येत्यर्थः।

चनचिदिवगोत्रादि (७) तद्धिताम्रेडितेष्वगतेः। ८। १। ५७।

एषु षट्सु परतस्तिङन्तन्नानुदात्तम्। देवः पचति चन। देवः पचति चित्। देवः पचतीव। देवः पचति गोत्रम्। देवः पचतिकल्पम्। देवः पचतिपचति। अगतेः किम्? देवः प्र-पचति चन।

चादिषु च। ८। १। ५८।

चवाहाऽहैवेषु परेषु तिङन्तन्नानुदात्तम्। देवः पचति च खादति च। अगतेरित्येव। देवः प्र-पचति च प्र-खादभि च। प्रथमस्य चवायोग इति निघातः प्रतिषिध्यते द्वितीयन्तु निहन्यत एव।

चवायोगे प्रथमा। ८। १। ५९।

चवेत्याभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता। गाश्च चारयति वीणां च वादयति। "इतो वा सातिमीमहे"। उक्तवाक्ययोरनुषज्जनीयतिङन्तापेक्षयेयं प्राथमिकी। योगे किम्? पूर्वभूतयोरपि योगो निघातार्थम्प्रथमाग्रहणं द्वितीयादेस्तिङन्तस्य मा भूत्।

हेति क्षियायाम्। ८। १। ६०।

हयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता धर्म्मव्यतिक्रमे। स्वयं

---

(७) एतत्सुत्रकस्य ६१२ मितपृष्ठे गोत्रादि द्रष्टव्यम्।

ह रथेन याति २ उपाध्यायम्पदातिङ्गमयति। क्रियागीरिति (७५२२ सू०) प्लुतः।

## अङ्गेति विनियोगे च। ८। १। ६१।

अङ्गयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता नानाप्रयोजने नियोगे क्रियायाञ्च। त्वमङ्ग ग्रामङ्गच्छ त्वमङ्ग रथेनारण्यं गच्छ। क्रियायां स्वयमङ्ग रथेन याति २ उपाध्यायम्पदातिन्नयति।

## चाहलोप एवेत्यवधारणम्। ८। १। ६२।

च अह एतयोर्लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता। देव एव ग्रामङ्गच्छतु। देव एवारण्यङ्गच्छतु। ग्राममरण्यञ्च गच्छत्वित्यर्थः। इह चलोपः। देवएव ग्रामङ्गच्छतु। राम एवारण्यङ्गच्छतु। ग्रामङ्केवलमरण्यं केवलङ्गच्छत्वित्यर्थः। इहाहलोपः स च केवलार्थः। अवधारणङ्किम्? देव! क्व भोक्ष्यसे। न क्वचिदित्यर्थः अनवक्लृप्तावेवः।

## चादिलोपे विभाषा। ८। १। ६३।

चवाहाऽहैवानां लोपे प्रथमा तिङ्विभक्तिर्वानुदात्ता। चलोपे-शुक्लाव्रीहयो भवन्ति २। श्वेता गा आज्याय दुहन्ति २। वालोपे। "व्रीहिभिर्यजेत २ यवैर्यजेत २"।

## वैवावेति च छन्दसि। ८। १। ६४।

"अहर्वै देवानामासीत्"। "अयं वाव हस्त आसीत्"।

## एकान्याभ्यां समर्थाभ्याम्। ८। १। ६५।

आभ्यां युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता छन्दसि। "अजामेकाञ्जिन्वति २ प्रजामेकां रक्षति" २। "तयोरन्यः पिप्पलं स्वाद्वत्ति २"। समर्थाभ्यां किम्? "एको देवानुपातिष्ठत्"। एक इति संख्यापरन्नान्यार्थम्।

यद्वृत्तान्नित्यम्।८।१।६६।

यत्र पदे यच्छब्दस्ततःपरन्तिङन्तन्नानुदात्तं। यो भुङ्क्ते। "यदग्रङ् वायुर्वाति"। अत्र व्यवहिते कार्य्यमिष्यते।

पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः (८)।८।१।६७।

पूजनेभ्यः काष्ठादिभ्यः पूजितवचनमनुदात्तम्। काष्ठाध्यापकः। दारुणाध्यापकः। अज्ञाताध्यापकः। समासान्तोदात्तत्वापवाद एतत्समासे इष्यते नेह दारुणमध्यापक इति वृत्तिमतम्। पूजनादित्येव पूजितग्रहणे सिद्धे पूजितग्रहणमनन्तरपूजितलाभार्थम्। एतदेव ज्ञापकमत्र प्रकरणे पञ्चमीनिर्देशेऽपि नानन्तर्य्यमाश्रीयत इति।

सगतिरपि तिङ्।८।१।६८।

पूजनेभ्यः काष्ठादिभ्यस्तिङन्तम्पूजितमनुदात्तम्। यत्काष्ठंपचति। यत् काष्ठं प्र-पचति। तिङ्ङतिङ इति (७६१२८०) निघातस्य निपातैर्य्यदिति (७६१२८०) निषेधे प्राप्ते विधिरयम्।

---

(८) काष्ठ दारुण अज्ञात पुत्र वेश अनाज्ञात अनुज्ञात अपुत्र अयुत अद्भुत अमुक्त भृश घोर सुख परम सु अति काष्ठादिः।

सगतिग्रहणाच्च गतिरपि निहन्यते। गतिग्रहणेऽउपसर्गग्रहणमिष्यते *। नेह। यत्काष्ठां शुक्लीकरोति।

कुत्सने सुप्यगोत्रादौ। ८। १। ६९।

कुत्सने च सुबन्ते परे सगतिरगतिरपि तिङनुदात्तः। पचति पूति। प्र-पचति पूति। पचति मिथ्या। प्र-पचति मिथ्या। कुत्सने किम्? प्र-पचति शोभनम्। सुपि किम्? पचति क्लिश्नाति। अगोत्रादौ (६) किम्?। पचति गोत्रम्। क्रियाकुत्सनइति वाच्यम् *। कर्तुः कुत्सने मा भूत्। पचति पूतिर्देवदत्तः। पूतिश्चानुबन्ध इति वाच्यम् *। तेनायञ्चकारानुबन्धत्वादन्तोदात्तः। वा बह्वर्थमनुदात्तमिति वाच्यम् *। पचन्ति २ पूति।

गतिर्गतौ। ८। १। ७०।

अनुदात्तः। अभ्युद्धरति। गतिः किम्? दत्तः प्र-पचति। गतौ किम्? "आ मन्द्रैरिन्द्र! हरिभिर्याहि मयूररोमभिः"।

तिङि चोदात्तवति। ८। १। ७१।

गतिरनुदात्तः। यत्प्र पचति। तिङ्ग्रहणमुदात्तवतः परिमाणार्थम् अन्यथा हि यं प्रति गतिस्तत्र धातावेवोदात्तवति स्यात् प्रत्यये न स्यात्। उदात्तवति किम्? प्र-पचति।

इति तिङन्तस्वराः।

(६) एतत्पुस्तकस्य ६१२ मितपृष्ठे गोत्रादि द्रष्टव्यम्।

अथ वैदिकवाक्येषु स्वरसञ्चारप्रकारः कथ्यते। "अग्निमीळे" इति प्रथमा ऋक्। तत्राग्निशब्दोऽव्युत्पत्तिपक्षे फिषः(३५५१सू०) इत्यन्तोदात्तः। व्युत्पत्तौ तु निप्रत्ययस्वरेण अमसुप्त्वात्(३५५८सू०) अनुदात्तः। अमि पूर्वरूप इत्येकादेशस्त्वेकादेश उदात्तेनेत्सुदात्तः(३५४१सू०)। ईळे तिङ्ङतिङ इति(३६१२सू०)निघातः। संहितायां तूदात्तादनुदात्तस्येतीकारः(३५४१सू०)स्वरितः स्वरितात्संहितायामिति(३५४२सू०)ळे इत्यस्य प्रचयापरपर्याया एकश्रुतिः। पुरःशब्दोऽन्तोदात्तः पूर्वाधरावराणामित्यसि(१९५१सू०) प्रत्ययस्वरात्। हितशब्दोऽपि धाञो निष्ठायान्दधातेर्हिरिति (३२६०सू०)ह्यादेशे प्रत्ययस्वरेणान्तोदात्तः। पुरोऽव्ययमिति (७७२सू०) गतिसंज्ञायां कुगतीति (७७१सू०) समासे समासान्तोदात्ते तत्पुरुषे तुल्यार्थेति(३५६५सू०)अव्ययपूर्वपद प्रकृतिस्वरे गतिकारकोपपदात् कृदिति(३५८६सू०)कृदुत्तरपदप्रकृतिस्वरे थाथादिस्वरे च (३५८८सू०) पूर्वपर्वोपमर्देन प्राप्ते गतिरनन्तर इति (३५७७सू०) पूर्वपदप्रकृतिस्वरः। पुरःशब्दोकारस्य संहितायामप्रचये प्राप्ते उदात्तस्वरितपरस्य सन्नतरः (३५४४सू०) इत्यनुदात्ततरः। यज्ञस्य नङः प्रत्ययस्वरः। विभक्तेः सुप्त्वादनुदात्तत्वे स्वरितत्वम्। देवः पचाद्यचि फिट्स्वरेण प्रत्ययस्वरेण चित्स्वरेण (३५५८सू०)वान्तोदात्तः। ऋत्विक्शब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः(३५८६सू०स्व०)। होतृशब्दस्तृन्प्रत्ययान्तो नित्-(३५४७१सू०)स्वरेणाद्युदात्तः। रत्नशब्दो नविषयस्येत्याद्युदात्तः(३५५४सू०स्व०)। रत्नानि दधातीति रत्नधाः। समासस्वरेण कृदुत्तरपदप्रकृति(३५८६सू०) स्वरेणान्तोदात्तः। तमपः पित्त्वा-

दनुदात्तत्वे (७।५।८१० सू०) स्वरितप्रचयावित्यादि यथाशास्त्र मुन्नेयम्।

इत्थं वैदिकशब्दानां दिङ्मात्रमिह दर्शितम्।
तदस्तु प्रीतये श्रीमद्भवानीविश्वनाथयोः ॥ १ ॥

इति सिद्धान्तकौमुद्यां श्रीभट्टोजिदीक्षितविरचितायां वैदिकप्रक्रिया समाप्ता।

वैदिकानां प्रयोगाणां प्रक्रिया स्वरसंयुता।
कौमुद्यामुत्तरे भागे व्याख्याता लेशतो मया ॥
अखण्डमपि यल्लोके प्रकृत्यादिभिदागतम्।
सर्व्वार्थावगमे हेतुरक्षरं तदुपास्महे ॥

इति वात्स्यवंशावतंसमहामहोपाध्यायकालिदाससार्व्वभौमभट्टाचार्य्याङ्गसम्भवेन श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्येण सङ्कलितायां सरलाख्यायां सिद्धान्तकौमुदीव्याख्यायामुत्तरार्द्धे स्वरयुक्तवैदिकप्रक्रिया समाप्ता।

---

* लिङ्गम् १ । स्त्री २ । अधिकारसूत्रे एते । ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः ३ । ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गाः स्वस्रादिकस्यैव ङीब्निषेधेन कर्त्रीत्यादेर्ङीपा ईकारान्तत्वात् तिसृचतस्रोस्तु स्त्रियामादेशतया विधानेऽपि प्रकृत्योस्त्रिचतुरोर्ऋदन्तत्वाभावात् । अन्यूप्रत्ययान्तो धातुः ४ । अनिप्रत्ययान्त ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । अवनिः । चमूः । प्रत्ययग्रहणं किम् ? देवयतेः क्विप् । द्यूः । विशेष्यलिङ्गः । अशनिभरण्यरणयः पुंसि च ५ । इयमयं वा अशनिः । मिन्यन्तः ६ । मिप्रत्ययान्तो निप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । भूमिः । ग्लानिः । वह्निवृष्ण्यग्नयः पुंसि ७ । पूर्वस्यापवादः । श्रोणियोन्यूर्मयः पुंसि च ८ । इयमयं वा श्रोणिः । क्तिन्नन्तः ९ । स्पष्टम् । कृतिरित्यादि । ईकारान्तश्च १० । ईप्रत्ययान्तः स्त्री स्यात् । लक्ष्मीः । ऊङाबन्तश्च ११ । कुरूः । काली विद्या । यन्तमेकाक्षरम् १२ । श्रीः । भूः । एकाक्षरं किम् ? पृथुश्रीः । विंशत्यादिरानवतेः १३ । इयं विंशतिः । त्रिंशत् । चत्वारिंशत् । पञ्चाशत् । षष्टिः । सप्ततिः । अशीतिः । नवतिः । दुन्दुभिरक्षेषु १४ । इयं दुन्दुभिः ।

* सूत्रपाठः धातुपाठो गणपाठो लिङ्गानुशासनञ्चेति चतुःप्रस्थानं व्याकरणं पाणिनिना निरमायि तत्र सूत्रपाठस्य सूत्राणि यथाकार्यमुद्धृत्य व्याख्यातानि धातुपाठसूत्राणि च भ्वाद्यादौ क्रमेणोदाहृतानि गणसूत्राणि च ग्रन्थकृता यथाप्रदेशं कानिचित् समुद्धृत्य व्याख्यातानि कानिचिच्च सरलायां मया प्रदर्शितानि इदानीं लिङ्गानुशासन प्रकरणमारभते लिङ्गमिति ।

अचेषु किम्? अयं दुन्दुभिर्व्वाद्यविशेषोऽसुरो वेत्यर्थः। नाभि-रचत्रिये १५। इयन्नाभिः। उभावन्यत्र पुंसि १६। दुन्दुभि-र्नाभिश्चोक्तविषयादन्यत्र पुंसि स्तः। नाभिः चत्रियः। कथम्? तर्हि समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीवि नाभिभिरिति भारविः। उच्यते। इदं भक्तिरित्यादाविव कोमलैरिति सामान्ये नपुंसकं बोध्यम्। वस्तुतस्तु लिङ्ग-मशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्यात्पुंस्त्वमपीह साधु। अतएव "नाभिर्मुख्यनृपे चक्रमध्यचत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात् स्त्रियाङ्कस्तूरिकामदे" इति मेदिनिः। रभ-सोऽप्याह "मुख्यराट्चत्रिये नाभिः पुंसि प्राण्यङ्गके द्वयोः। चक्रमध्ये प्रधाने च स्त्रियाङ्कस्तूरिकामदे इति"। एवमेवं-विधेऽन्यत्रापि बोध्यम्। तलन्तः १७। अयं स्त्रियां स्यात्। शुक्लस्य भावः शुक्लता। ब्राह्मणस्य कर्म्म ब्राह्मणता। ग्रामस्य समूहो ग्रामता। देव एव देवता। भूमिविद्युत्सरिल्लतावनि ताभिधानानि १८। भूमिर्भूः। विद्युत्सौदामनी। सरिन्नि-म्नगा। लता वल्ली। वनिता योषित्। यादो नपुंसकम् १९ यादःशब्दः सरिद्वाचकोऽपि क्लीवं स्यात्। भास्रक्स्रुग्दि-गुष्णिगुपानहः २०। एते स्त्रियां स्युः। इयं भाः इत्यादि। स्थूणोर्णे नपुंसके च २१। एते स्त्रियां क्लीवे च स्तः। स्थूणा-स्थूणम्। ऊर्णा--ऊर्णम्। तत्र स्थूणा काष्ठमयी द्विक-र्णिका। ऊर्णा तु मेषादिलोम। गृहशशाभ्यां क्लीवे २२। नियमार्थमिदम्। गृहशशपूर्व्वे यथासंख्यं स्थूणोर्णे नपुंसके स्तः। गृहस्थूणम्। "शशोर्णम् शशलोमनीति" अमरः। प्रा-

दृड्विप्रुड्रुट्त्वड्विट्त्विषः २३। एते स्त्रियां स्युः। दर्विविद्विवेदिखनिशान्यब्भिवेशिकृष्योषधिकट्यङ्गुलयः २४। एते स्त्रियां स्युः। पक्षे ङीष्। दर्वी दर्विरित्यादि। तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविरात्र्यादयः २५। एते प्राग्वत्। इयन्तिथिरित्यादि। अमरस्त्वाह "तिथयो द्वयोरिति"। तथा च भारविः। "तस्य भुवि बहुतिथास्तिथयः"इति स्त्रीत्वे हि बहुतिथ्य इति स्यात्। श्रीहर्षश्च। "निखिलान्निशि पूर्णिमातिथीनिति"। शष्कुलिराजिकुट्यशन्तिवर्त्तिभ्रुकुटित्रुटिवलिपङ्क्तयः २६। एतेऽपि स्त्रियां स्युः। इयं शष्कुलिः। प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः २७। इयं प्रतिपदित्यादि। "उषा उच्छन्ती"। उषाः प्रातरधिष्ठात्री देवता। आशीर्धूःपूर्गीर्द्वारः २८। इयमाशीरित्यादि। अप्सुमनस्समासिकतावर्षाणां बहुत्वञ्च २९। अबादीनाम्पञ्चानां स्त्रीत्वं स्याद्बहुत्वञ्च। आप इमाः। "स्त्रियः सुमनसः पुष्पम्"? "सुमना मालती जातिः"। देववाची तु पुंस्येव। "सुपर्वाणः सुमनसः"। बहुत्वम्प्रायिकम्। एका च सिकता तैलदाने असमर्थेति अर्थवत्सूत्रे भाष्यप्रयोगात् समांसमां विजायत इत्यत्र(६।१।१९०)समायांसमायामिति भाष्याञ्च। विभाषा घ्राधेडिति(७६५९०)सूत्रे अघ्रासातां सुमनसाविति वृत्तिव्याख्यायां हरदत्तोप्येवम्। स्रक्त्वग्ज्योग्वाग्यवागूनौस्फिचः ३०। इयं स्रक् त्वक् ज्योक् वाक् यवागूः नौः स्फिक्। तटिसीमासन्ध्याः ३१। इयं तटिः सीमा सन्ध्या। चुल्लिवेणीखार्यश्च ३२। स्पष्टम्। ताराधाराज्योत्स्नादयश्च ३३। शलाका

स्त्रियान्नित्यम् ३४ । नित्यग्रहणमन्येषां क्वचिद्व्यभिचारं (१) ज्ञापयति ।

इति स्त्र्यधिकारः ।

---

पुमान् १ । अधिकारोऽयम् । घञबन्तः २ । पाकः । त्यागः । करः । गरः । भावार्थ एवेदम् । नपुंसकत्वविशिष्टे भावे क्तल्युड्भ्यां, स्त्रीत्वविशिष्टे तु क्तिन्नादिभिर्बाधेन परिशेषात् कर्म्मादौ घञाद्यन्तमपि विशेष्यलिङ्गम् । तथा च भाष्यम् । सबन्धमनुवर्त्तिष्यत इति । घाजन्तस्च ३ । विस्तरः । गोचरः । चयः । जयः इत्यादि । भयलिङ्गभगपदानि नपुंसके ४ । एतानि नपुंसके स्युः । भयम् । लिङ्गम् । भगम् । पदम् । नङन्तः ५ । नङ्प्रत्ययान्तः पुंसि स्यात् । यज्ञः । यत्नः । याच्ञा स्त्रियाम् ६ । पूर्वस्यापवादः । क्यन्तो घुः ७ । किप्रत्ययान्तो घुः पुंसि स्यात् । आधिः । निधिः । उदधिः । क्यन्तः किम् ? दानम् । घुः किम् ? जग्धि वीजम् । इषुधिः स्त्री च ८ । इषुधिशब्दः स्त्रियां पुंसि च । देवसुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि ९ । एतानि पुंसि स्युः । देवाः सुराः । असुराः दैत्याः । आत्मा क्षेत्रज्ञः । स्वर्गो नाकः । गिरिः पर्व्वतः । समुद्रोऽब्धिः । नखः कररुहः । केशः शिरोरुहः । दन्तो

(१) तेन यून्मेकाक्षरमित्यनेन(७६२५पृ०)नीशब्दादीनां न स्त्रीत्वमिति बोध्यम् ।

दशनः। स्तनः कुचः। भुजो दोः। कण्ठो गलः। खड्गः करवालः। शरो मार्गणः। पङ्कः कर्द्दम इत्यादि। त्रिविष्टपं त्रिभुवने नपुंसके १०। स्पष्टम्। तृतीयं विष्टपं त्रिविष्टपम्। स्वर्गाभिधानतया पुंस्त्वे प्राप्ते अयमारम्भः। द्यौः स्त्रियाम् ११। द्योदिवोस्तन्त्रेणोपादानमिदम्। इषुबाहू स्त्रियाञ्च १२। चात् पुंसि। बाणकाण्डौ नपुंसके च १३। चात्पुंसि। त्रिविष्टपेत्यादि चतुःसूत्री देवासुरेत्यस्यापवादः। नान्तः १४। अयं पुंसि। राजा। तक्षा। नच चर्मवर्म्मादिष्वतिव्याप्तिः मन्द्व्यच्कोऽकर्त्तरीति (७६३५ पृ०) नपुंसकप्रकरणे वक्ष्यमाणत्वात्। क्रतुपुरुषकपोलगुल्फमेघाभिधानानि १५। क्रतुरध्वरः। पुरुषो नरः। कपोलो गण्डः। गुल्फः प्रपदः। मेघो नीरदः। अभ्रन्नपुंसकम् १६। पूर्व्वस्यापवादः। उकारान्तः १७। अयं पुंसि स्यात्। प्रभुः। इक्षुः। "हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम्। द्वयोः कपोलावयवे इति" मेदिनिः। "करेणुरिभ्यां स्त्री, नेभे" इत्यमरः। एवंजातीयकविशेषवचनानाक्रान्तस्तु प्रकृतसूत्रस्य विषयः। उक्तञ्च "लिङ्गशेषविधिर्व्यापी विशेषैर्य्यद्यबाधित" इति। एवमन्यत्रापि। धेनुरज्जुकुहूसरयुतनुरेणुप्रियङ्गवः स्त्रियाम् १८। समासे रज्जुः पुंसि च १९। कर्कटरज्ज्वा कर्कटरज्जुना। श्मश्रुजानुस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके २०। वसु चार्थवाचि २१। अर्थवाचीति किम्? "वसुर्मयूखाग्निधनाधिपेषु"। मद्गुमधुशीधुसानुकमण्डलूनि नपुंसके च २२। चात्पुंसि। अयं मद्गुः इदम्मद्गु। रुत्वन्तः २३। मेरुः। सेतुः। दारुकसेरुजतु-

वस्तुमस्तूनि नपुंसके २४ । हलन्त इति पुंस्त्वस्यापवादः । इदन्तादृ । सक्तुर्नपुंसके च २५ । चात्पुंसि सक्तः—सक्तु । प्राग्रश्मेरकारान्तः २६ । रश्मिदिवसाभिधानानीति(७६१२५०) वक्ष्यति प्रागेतस्मादकारान्त इत्यधिक्रियते । कोपधः २७ । कोपधोऽकारान्तः पुंसि स्यात् । स्तवकः । कल्कः । चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके २८ । पूर्वसूत्रापवादः । कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतड़ाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलाकानि नपुंसके च २९ । चात्पुंसि । अयङ्कण्टकः इदङ्कण्टकमित्यादि । टोपधः ३० । टोपधोऽकारान्तः पुंसि स्यात् । घटः । पटः । किरीटमुकुटललाटवटवीटशृङ्गाटकरटलोष्टानि नपुंसके ३१ । किरीटमित्यादि । कुटकूटकपटकपाटकर्पटनटनिकटकीटकटानि नपुंसके च ३२ । चात्पुंसि । कुटः कुटमित्यादि । णोपधः ३३ । णोपधोऽकारान्तः पुंसि स्यात् । गुणः । गणः । पाषाणः । ऋणलवणपर्णतोरणरणोष्णानि नपुंसके ३४ । पूर्वसूत्रापवादः । कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च ३५ । चात्पुंसि । थोपधः ३६ । रथः । काष्ठपृष्ठरिक्थोक्थानि नपुंसके ३७ । इदङ्काष्ठमित्यादि । काष्ठा दिगर्था स्त्रियाम् ३८ । इमाः काष्ठाः । तीर्थप्रोथयूथगाथानि नपुंसके च ३९ । चात्पुंसि । अयं तीर्थः इदन्तीर्थम् । नोपधः ४० । अदन्तः पुंसि । इनः । फेनः । जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचि-

न्तानि नपुंसके ४१। पूर्वस्यापवादः। मानयानाभिधाननलिन पुलिनोद्यानशयनासनस्थानचन्दनालानसम्मानभवनवसनस- म्भावनविभावनविमानानि नपुंसके च ४२। चात् पुंसि। अयं मानः इदं मानम्। पोपधः ४३। अदन्तः पुंसि। यूपः। दीपः। सर्पः। पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्त- रीपाणि नपुंसके ४४। इदम्पापमित्यादि। शूर्पकुतपकुणप- द्वीपविटपानि नपुंसके च ४५। अयं शूर्पः। इदं शूर्पमि- त्यादि। भोपधः ४६। स्तम्भः। कुम्भः। तल्लभं नपुंसकम् ४७। पूर्वस्यापवादः। जृम्भं नपुंसके च ४८। जृम्भं जृम्भः। मोपधः ४९। सोमः। भीमः। रुक्मसिध्मयुग्मेध्मगुल्माध्या- त्मकुङ्कुमानि नपुंसके ५०। इदं रुक्ममित्यादि। संग्रामदा- ड़िमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च ५१। चात् पुंसि। अयं संग्रामः इदं संग्रामम्। योपधः ५२। समयः। हयः। किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके ५४। स्पष्टम्। गोमयकषायमलयान्वयाव्ययानि नपुंसके च ५३। गोमयः। गोमयम्। रोपधः ५५। क्षुरः। अङ्कुरः। द्वाराग्रस्फा- रतक्रवक्रवप्रक्षिप्रक्षुद्रच्छिद्रनारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरग- भीरक्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दरपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुटीरकुलीरचत्वरका- श्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षत्रक्षेत्रमित्रकलत्रच्छत्रसूत्रव- क्त्रनेत्रगोत्राङ्गुलित्रभल्लत्रास्त्रशस्त्रशास्त्रवस्त्रपत्रपात्रछत्राणि- नपुंसके ५६। इदं द्वारमित्यादि। शुक्रमदेवतायाम् ५७। इदं शुक्रं रेतः। चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृ-

ङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च ५८। चात्पुंसि। चक्रः चक्रमित्यादि। षोपधः ५९। वृषः। वृक्षः। शिरीषजीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके ६०। यूषकरीषमिषविषवर्षाणि नपुंसके च ६१। चात् पुंसि। अयं यूषः इदं यूषमित्यादि। सोपधः ६२। वत्सः। वायसः। महानसः। पनसबिसबुससाहसानि नपुंसके ६३। चमसरसनिर्य्यासोपवासकर्पासवासभासकासकांसमांसानि नपुंसके च ६४। चमसं चमसइत्यादि। कंसञ्चाऽप्राणिनि ६५। "कंसोऽस्त्री पानभाजनम्"। प्राणिनि तु कंसो नाम कश्चि-द्राजा। रश्मिदिवसाभिधानानि ६६। एतानि पुंसि स्युः रश्मिर्मयूखः। दिवसो घस्रः। दीधितिः स्त्रियाम् ६७। पूर्व्वस्यापवादः। दिनाहनी नपुंसके ६८। अयमप्यपवादः। मानाभिधानानि ६९। एतानि पुंसि स्युः। कुडवः प्रस्थः। द्रोणाढकौ नपुंसके च ७०। इदं द्रोणम् अयं द्रोणः। खारीमानिके स्त्रियाम् ७१। इयं खारी। इयं मानिका। दाराक्षतलाजासूनां बहुत्वं च ७२। इमे दाराः। नाड्यप-जनोपपदानि व्रणाङ्गपदानि ७३। यथासंख्यं नाड्याद्युपप-दानि व्रणादीनि पुंसि स्युः। अयन्नाडीव्रणः। अपाङ्गः। जन-पदः। व्रणादीनामुभयलिङ्गत्वेऽपि क्लीवत्वनिवृत्त्यर्थं सूत्रम्। मरुद्गरुत्तरदृत्विजः ७४। अयम्मरुत्। ऋषिराशिदृतिग्र-न्थिक्रिमिध्वनिबलि (१) कौलि मौलिरविकपिमुनयः ७५। एते पुंसि स्युः। अयं ऋषिः। ध्वजगजमुञ्जपुञ्जाः ७६। एते

---

(१) पूजोपहारे पुंसि उदाबलिवाचकस्तु स्त्रियामिति न विरोधः।

पुंसि। हस्तकुन्तान्तव्रातवातदूतधूर्त्तसूतचूतमुहूर्त्ताः ७७। एते पुंसि। अमरस्तु "मुहूर्त्तोऽस्त्रियाम्" इत्याह। षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः ७८। अयं षण्डः। वंशांशपुरोडाशाः ७९। अयं वंशः। पुरो दाश्यते पुरोडाशः। कर्म्मणि घञ्। भवव्याख्यानयोः प्रकरणे पौरोडाशपुरोडाशात् ष्ठन्निति (५८२पृ०) विकारप्रकरणे व्रीहेः पुरोडाश इति (६००पृ०) च निपातनात्प्रकृतसूत्रएव निपातनाद्वा दस्य डत्वम्। "पुरोडाशभुजामिष्टमिति" माघः। ह्रदकन्दकुन्दबुद्बुदशब्दाः ८०। अयं ह्रदः। अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः ८१। अयमर्घः। पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्रपुङ्खाः ८२। अयम्पल्लव इत्यादि। सारथ्यतिथिकुक्षिवस्तिपाण्यञ्जलयः ८३। एते पुंसि। अयं सारथिः।

इति पुंलिङ्गाधिकारः।

---

नपुंसकम् १। अधिकारोऽयम्। भावे ल्युडन्तः २। हसनम्। भावे किम्? पचनोऽग्निः। इध्मव्रश्चनः कुठारः। निष्ठा च ३। भावे या निष्ठा तदन्तं क्लीवं स्यात्। हसितम्। गीतम्। त्वष्यञौ तद्धितौ ४। शुक्लत्वम्। शौक्ल्यम्। ष्यञः षित्त्वसामर्थ्यात्पक्षे स्त्रीत्वम्। चातुर्य्यम्-चातुरी। सामग्र्यम्-सामग्री। औचित्यम्-औचिती। कर्म्मणि च ब्राह्मणादिगुणवचनेभ्यः ५। ब्राह्मणस्य कर्म्म ब्राह्मण्यम्। यद्यढ्यग्यञण्वुञ्छाश्च भावकर्म्मणि ६। एतदन्तानि क्लीवानि। स्तेनाद्यन्नलोपश्च (६५५पृ०)।

स्तेयम्। सख्युर्य्यः (६५५पृ०)। सख्यम्। कपिज्ञात्योर्ढक् (६५५पृ०)। कापेयम्। पत्यन्तपुरोहितादिभ्यो यक् (६५५पृ०)। आधिपत्यम्। प्राणभृज्जातिवयोवचनोद्गातादिभ्योऽञ् (६५६पृ०)। औद्गम्। हायनान्तयुवादिभ्योऽण् (६५पृ०)। द्वैहायनम्। द्वन्द्वमनोज्ञादिभ्यो वुञ् (६५७पृ०)। पितापुत्रकम्। होत्राभ्यश्छः (६५७पृ०)। अच्छावाकीयम्। अव्ययीभावः * (३२२पृ०)। अधिस्त्रि। द्वन्द्वैकत्वम् ७। पाणिपादम्। अभाषायां हेमन्तशिशिरावहोरात्रे च ८। स्नुष्टम्। अनञ्कर्म्मधारयस्तत्पुरुषः ९। अधिकारोऽयम्। अनल्पे च्छाया १०। शरच्छायम्। राजामनुष्यपूर्वा सभा ११। इनसभमित्यादि। सुरासेनाच्छायाशालानिशा स्त्रियाञ्च १२। परवत् १३। अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात्। रात्राह्नाहाः पुंसि (३९१पृ०) १४। अपथपुण्याहे नपुंसके १५। संख्यापूर्वा रात्रिः १६। त्रिरात्रम्। संख्यापूर्वेति किम्? सर्व्वरात्रः। द्विगुः स्त्रियाञ्च १७। व्यत्रस्त्रया। पञ्चमूली। त्रिभुवनम्। इसुसन्तः १८। हविः। धनुः। अर्च्चिः स्त्रियाञ्च १९। इसन्तत्वेऽपि अर्च्चिः स्त्रियान्नपुंसके च स्यात्। इयमिदं वा अर्च्चिः। छदिः स्त्रियामेव २०। इयं छदिः। छाद्यतेऽनेनेति छदेरिसुरादिरयन्तादर्चिशुचीत्यादिना (७४२२पृ०) इसिः इस्मन्नित्यादिना (७४२०पृ०) ह्रस्वः। "पटलञ्छदिः" इत्यमरः। तत्र पटलसाहचर्य्याच्छदिषः क्लीवतां वदन्तोऽमरव्याख्यातार उपेक्ष्याः। मुखनयनलोहवनमांसरुधिरकार्मुक-

---

* अव्ययीभावः इत्यादीनि कानिचित् सूत्राणि सूत्रपाठस्यसूत्रसदृशानि एकप्रकरणत्वादिह प्रदर्शितानि।

विवरजलहलधनान्नाभिधानानि २१। एतेषामभिधायकानि क्लीवे स्युः। मुखमाननम्। नयनं लोचनम्। लोहं कालम्। वनं गहनम्। मांसमामिषम्। रुधिरं रक्तम्। कार्मुकं शरासनम्। विवरं बिलम्। जलं वारि। हलं लाङ्गलम्। धनं द्रविणम्। अन्नमशनम्। अस्यापवादानाह त्रिसूत्र्या। सीरार्थौदनाः पुंसि २२। वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च २३। वक्त्रो वक्त्रम्। नेत्रो नेत्रम्। अरण्योऽरण्यम्। गाण्डीवो गाण्डीवम्। अटवी स्त्रियाम् २४। लोपधः २५। कुलम्। कूलम्। स्थलम्। तूलोपलतालकुसूलतरलकम्बलदेवलवृषला: पुंसि २६। अयं तूलः। शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालविडालखिलशूला: पुंसि च २७। चात् क्लीवे। शीलं शील इत्यादि। शतादिः संख्या २८। शतम्। सहस्रम्। शतादिरिति किम्? एको द्वौ बहवः। संख्येति किम्? शतः शतशृङ्गो नाम पर्वतः। शतायुतप्रयुताः पुंसि च २९। अयं शतः इदं शतमित्यादि। लक्षाकोटी स्त्रियाम् ३०। इयं लक्षा। इयं कोटीः। "वा लक्षा नियुतञ्च तत्" इत्यमरात् क्लीवेऽपि लक्षम्। सहस्रः पुंसि च ३१। अयं सहस्रः इदं सहस्रम्। मन्द्व्यच्कोऽकर्त्तरि ३२। मन्प्रत्ययान्तो द्व्यच्कः क्लीवः स्यात् न तु कर्त्तरि। चर्म। वर्म। द्व्यच्कः किम्? अणिमा। महिमा। अकर्त्तरि किम्? ददाति इति दामा। ब्रह्मन् पुंसि च ३३। अयं ब्रह्मा। इदं ब्रह्म। नामरोमणी नपुंसके ३४। मन्द्व्यच्क इत्यस्यायमप्रपञ्चः। असन्तो द्व्यच्कः ३५। यशः। मनः। तपः।

द्व्यच्क: किम्? चन्द्रमाः। अप्सराः स्त्रियाम् ३६। एता अप्सरसः। प्रायेणायं बहुवचनान्तः। तान्तः ३७। पत्तम्। छत्तम्। यातामाताभस्त्रादंष्ट्रावरत्राः स्त्रियामेव ३८। भृता-मितच्छात्रपुत्तमन्त्रहतमैताः पुंसि ३९। अयं भृतः। न मितम् अमितः। "तस्य मित्राण्यमित्रास्ते इति" माघः। "स्ता-ताममितौ मित्रे चेति" च। यत्तु द्विषोऽमित्र इति (उ३६८पृ०) सूत्रे हरदत्तेनोक्तम् अमेर्द्विषति चित् (उ६२४पृ०) इत्यौणादिक इत्रच् "अमैरमितं मितस्तु व्यथयेदित्यादौ" मध्योदात्तस्तु चिन्त्यः नञ्समासेऽप्येवम् परवल्लिङ्गतापि स्यादिति तु तत्र दोषान्तरमिति· तत्प्रकृतसूत्रापर्य्यालोचनमूलकम् स्वरदोषो-द्भावनमपि नञो जरमरमित्रमृता इति (उ५६१पृ०) षाष्ठसूत्रा-स्मरणमूलकमिति दिक्। पत्तपात्रपवित्रसूत्रच्छत्राः पुंसि च ४०। बलकुसुमशुल्बपत्तनरणाभिधानानि ४१। बलं वी-र्य्यम्। पद्मकमलोत्पलानि पुंसि च ४२। पद्मादयः शब्दाः कुसुमाभिधायित्वेऽपि द्विलिङ्गाः स्युः। अमरोऽप्याह "वा पुंसि पद्मन्नलिन" मिति। एवञ्च अर्द्धर्चादिसूत्रे (२६२पृ०) तु पद्मन्नपुंसकमेवेति वृत्तिग्रन्थो मतान्तरेण नेयः। आहवसं-ग्रामौ पुंसि ४३। आजिः स्त्रियामेव ४४। फलजातिः ४५। फलजातिवाची शब्दो नपुंसकं स्यात्। आमलकम्। आम्रम्। वृक्षजातिः स्त्रियामेव ४६। क्वचिदेवेदम्। हरीतकी। वियज्जगत्सकृत्शकृत्पृषच्छकृद्यकृदुदश्वितः ४७। एते क्लीवाः स्युः। नवनीतावतानृतामृतनिमित्त वित्त चित्त पित्त व्रत रजत वृत्त-पलितानि ४८। श्राद्धकुलिशदैवपीठकुण्डाङ्गदधिसक्थ्यक्ष्य-

स्यशस्पदाकाशकखबीजानि ४९। एतानि क्लीबे स्युः। दैवं पुंसि च ५०। दैवम् दैवः। धान्याज्यसस्यरूप्यपण्यवर्ण्य-धिष्ण्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसै-न्यानि ५१। इदन्धान्यमित्यादि। द्वन्द्वबर्हदुःखवडिशपि-च्छविम्बकुटुम्बकवचकवरवृन्दारकाणि ५२। अक्षमिन्द्रिये ५३। इन्द्रिये किम्? रथाङ्गादौ मा भूत्।

इति नपुंसकाधिकारः।

---

स्त्रीपुंसयोः १। अधिकारोऽयम्। गोमणियष्टिमुष्टिपाट-लिवस्तिशाल्मलित्रुटिमसिमरीचयः २। इयमयं वा गौः। मन्युसीधुकर्कन्धुसिन्धुकण्डुरेणवः ३। इयमयं वा मन्युः। गुणवचनमुकारान्तन्नपुंसकञ्च ४। त्रिलिङ्गमित्यर्थः। पटु। पटुः। पट्वी। अपत्यार्थतद्धिते ५। औपगवः-औपगवी।

इति स्त्रीपुंसाधिकारः।

---

पुन्नपुंसकयोः १। अधिकारोऽयम्। घृतभूतमुस्तक्ष्वेलि-तैरावतपुस्तकवुस्तलोहिताः २। अयं घृतः इदं घृतम्। शृङ्गा-र्घनिदाघोद्यमशल्यदृढाः ३। अयं शृङ्गः इदं शृङ्गम्। व्रज-कुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चपुच्छाः ४। अयं व्रजः इदं व्रजम्। कबन्धौषधायुधान्ताः ५। स्पष्टम्। दण्डमण्डखण्ड-शवसैन्धवपार्श्वकाशाङ्कुराकाशकुशकुलिशाः ६। एते पुन्न-पुंसकयोः स्युः। "कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशस्थले" इति विश्वः। शलाकावाची तु स्त्रियाम् तथा च जानपदादिसू-त्रेण (२२८४०) अयोविकारे इति ङीषि कुशी। दारुणि तु टाप्

"कुशा वानस्पत्याः स्थतामायातेति" श्रुतिः। अतः क्रमीति सूत्रे (७६१०) कुशाकर्षीष्विति प्रयोगश्च। व्याससूत्रे च। हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्द इति तत्र शारीरकभाष्येऽप्येवम्। एवञ्च श्रुतिसूत्रभाष्याणामेकवाक्यत्वे स्थिते शाच्छन्दइत्याङ्प्रश्लेषादिपरो भामतीग्रन्थः प्रौढिवादमात्रपर इति विभावनीयं बहुश्रुतैः। गृहमेहदेहपट्टपटहाष्टापदार्बुदककुदाश्च ७।

इति पुन्नपुंसकाधिकारः।

---

अवशिष्टलिङ्गम् १। अव्ययम् कतियुष्मदस्मदः २। ष्णान्ता संख्या ३। शिष्टा परवत्। एकः पुरुषः एका स्त्री। एकं कुलम्। गुणवचनञ्च ३। शुक्लः पटः शुक्ला पटी शुक्लं वस्त्रम्। कृत्याश्च ५। करणाधिकरणयोर्ल्युट् ६। सर्व्वादीनि सर्व्वनामानि ७। स्पष्टार्थैयन्त्रिसूत्री।

इति श्रीभट्टोजिदीक्षितविरचितायां पाणिनीयलिङ्गानुशासनसूत्रवृत्तिः समाप्ता।

समाप्ता सिद्धान्तकौमुदी।

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्येण मनोरमादिसारसंकलनेन समाहृतायां सरलाख्यायां सिद्धान्तकौमुदीव्याख्यायां

परार्द्धं समाप्तम्।

सौरे नभसि शाकेऽब्दे रसनागाद्रिभूमिते।
सिद्धान्तकौमुदी व्याख्यासहितेयं विमुद्रिता॥
सौरे चैत्रेशकाब्देऽसौ द्विनवर्षिविधुप्रमे।
लोकेषु सुप्रचाराय पुनर्मुद्राङ्किता शुभम्॥

शाके १७९२।

---